ॐ

श्रीमन्महर्षि-कृष्णद्वैपायन-व्यास-प्रणीतम्

# कूर्मपुराणम्

सम्पादकः—

डा० रामशंकरभट्टाचार्यः

( व्याकरणाचार्यः, एम० ए०; पी-एच० डी० )

[ वाराणसेय-संस्कृत-विश्वविद्यालयः ]

प्रकाशक :

इण्डोलॉजिकल बुकहाउस

सी० के० ३१/१० नेपालीखपड़ा

वाराणसी

# कूर्मपुराण-विषयानुक्रमणी

## पूर्वभागः

## उत्तरभागः



———

# कूर्मपुराणम्

## पूर्वभागः

### प्रथमोऽध्यायः

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

नमस्कृत्याप्रमेयाय विष्णवे कूर्मरूपिणे । पुराणं सम्प्रवक्ष्यामि यदुक्तं विश्वयोनिना ॥ १ ॥
सत्रान्ते सूतमनघं नैमिषेया महर्षयः । पुराणसंहितां पुण्यां पप्रच्छू रोमहर्षणम् ॥ २ ॥
त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः । इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥ ३ ॥
तस्य ते सर्वरोमाणि वचसा हृषितानि यत् । द्वैपायनस्य तु भवांस्ततो वै रोमहर्षणः ॥ ४ ॥
भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः । मुनीनां संहितां वक्तुं व्यासः पौराणिकीं पुरा ॥ ५ ॥
त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति । सम्भूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥ ६ ॥
तस्माद्भवन्तं पृच्छामः पुराणं कौर्ममुत्तमम् । वक्तुमर्हसि चास्माकं पुराणार्थविशारद ॥ ७ ॥
मुनीनां वचनं श्रुत्वा सूतः पौराणिकोत्तमः । प्रणम्य मनसा प्राह गुरुं सत्यवतीसुतम् ॥ ८ ॥

#### रोमहर्षण उवाच

नमस्कृत्य जगद्योनिं कूर्मरूपधरं हरिम् । वक्ष्ये पौराणिकीं दिव्यां कथां पापप्रणाशिनीम् ॥ ९ ॥
यां श्रुत्वा पापकर्मापि गच्छेत परमां गतिम् । न नास्तिके कथां पुण्यामिमां ब्रूयात् कदाचन ॥१०॥
श्रद्दधानाय शान्ताय धार्मिकाय द्विजातये । इमां कथामनुब्रूयात् साक्षान्नारायणेरिताम् ॥११॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥१२॥
ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च । शैवं भागवतञ्चैव भविष्यं नारदीयकम् ॥१३॥
मार्कण्डेयमथाग्नेयं ब्रह्मवैवर्त्तमेव च । लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च ॥१४॥
कौर्मं मात्स्यं गारुडञ्च वायवीयमनुत्तमम् । अष्टादशं समुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ॥१५॥
अन्यान्युपपुराणानि मुनिभिः कथितानि तु । अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः ॥१६॥
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥१७॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्य्यं नारदीयमतः परम् ॥१८॥
कापिलं वामनञ्चैव तथैवोशनसेरितम् । ब्रह्माण्डं वामनञ्चैव कालिकाह्वयमेव च ॥१९॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् । पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् ॥२०॥
इदन्तु पञ्चदशमं पुराणं कौर्ममुत्तमम् । चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः ॥२१॥
ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्त्तिताः । चतस्रः संहिताः पुण्या धर्म-कामार्थ-मोक्षदाः ॥२२॥
इयन्तु संहिता ब्राह्मी चतुर्वेदैस्तु सम्मिता । भवन्ति षट् सहस्राणि श्लोकानामत्र संख्यया ॥२३॥
यत्र धर्मार्थकामानां मोक्षस्य च मुनीश्वराः । माहात्म्यमखिलं ब्रह्म ज्ञायते परमेश्वरः ॥२४॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं पुण्या दिव्या प्रासङ्गिकी कथा ॥२५॥
ब्राह्मणाद्यैरियं धार्या धार्मिकैर्वेदपारगैः । तामहं वर्णयिष्यामि व्यासेन कथितां पुरा ॥२६॥
पुराऽमृतार्थं दैतेय-दानवैः सह देवताः । मन्थानं मन्दरं कृत्वा ममन्थुः क्षीरसागरम् ॥२७॥
मथ्यमाने तदा तस्मिन् कूर्मरूपी जनार्दनः । बभार मन्दरं देवो देवानां हितकाम्यया ॥२८॥
देवाश्च तुष्टुवुर्देवं नारदाद्या महर्षयः । कूर्मरूपधरं दृष्ट्वा साक्षिणं विष्णुमव्ययम् ॥२९॥
तदन्तरेऽभवद्देवी श्रीर्नारायणवल्लभा । जग्राह भगवान् विष्णुस्तामेव पुरुषोत्तमः ॥३०॥
तेजसा विष्णुमव्यक्तं नारदाद्या महर्षयः । मोहिताः सह शक्रेण श्रेयोवचनमब्रुवन् ॥३१॥
भगवन् देवदेवेश नारायण जगन्मय । कैषा देवी विशालाक्षी यथावद् ब्रूहि पृच्छताम् ॥३२॥
श्रुत्वा तेषां तदा वाक्यं विष्णुर्दानवमर्दनः । प्रोवाच देवीं सम्प्रेक्ष्य नारदादीनकल्मषान् ॥३३॥
इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी । माया मम प्रियाऽनन्ता ययेदं धार्यते जगत् ॥३४॥
अनयैव जगत् सर्वं सदेवासुर-मानुषम् । मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च ॥३५॥
उत्पत्ति प्रलयञ्चैव भूतानामागतिं गतिम् । विद्यया वीक्ष्य चात्मानं तरन्ति विपुलामिमाम् ॥३६॥
अस्यास्त्वंशानधिष्ठाय शक्तिमन्तोऽभवन् सुराः । ब्रह्मेशानादयः सर्वे सर्वशक्तिरियं मम ॥३७॥
सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका । प्रागेव मत्तः सञ्जाता श्रीः कल्पे पद्मवासिनी ॥३८॥
चतुर्भुजा शङ्ख-चक्र-पद्महस्ता स्रगन्विता । कोटिसूर्यप्रतीकाशा मोहिनी सर्वदेहिनाम् ॥३९॥
नालं देवा न पितरो मानवा वासवोऽपि च । मायामेतां समुत्तर्तुं ये चान्ये भुवि देहिनः ॥४०॥
इत्युक्ता वासुदेवेन मुनयो विष्णुमब्रुवन् । ब्रूहि त्वं पुण्डरीकाक्ष यद्धि कालक्षयेऽपि च ॥४१॥
अथोवाच हृषीकेशो मुनीन् मुनिगणार्चितः । अस्ति द्विजातिप्रवर इन्द्रद्युम्न इति श्रुतः ॥४२॥
पूर्वजन्मनि राजासावधृष्यः शङ्करादिभिः । दृष्ट्वा मां कूर्मसंस्थानं श्रुत्वा पौराणिकीं स्वयम् ॥४३॥
संहितां मन्मुखाद्दिव्यां पुरस्कृत्य मुनीश्वरान् । ब्रह्माणञ्च महादेवं देवांश्चान्यान् स्वशक्तिभिः ॥४४॥
मच्छक्तौ संस्थितान् बुद्ध्वा मामेव शरणं गतः । सम्भाषितो मया चाथ विप्रयोनिं गमिष्यसि ॥४५॥
इन्द्रद्युम्न इति ख्यातो जातिं स्मरसि पौर्विकीम् । सर्वेषामेव भूतानां देवानामप्यगोचरम् ॥४६॥
वक्तव्यं तद् गुह्यतमं दास्ये ज्ञानं तवानघ । लब्ध्वा तन्मामकं ज्ञानं मामेवान्ते प्रवेक्ष्यसि ॥४७॥
अंशान्तरेण भूम्यां त्वं तत्र तिष्ठ सुनिर्वृतः । वैवस्वतेऽन्तरेऽतीते कार्यार्थं मां प्रवेक्ष्यसि ॥४८॥
मां प्रणम्य पुरीं गत्वा पालयामास मेदिनीम् । कालधर्मं गतः कालाच्छ्वेतद्वीपे मया सह ॥४९॥
भुक्त्वा तान् वैष्णवान् भोगान् योगिनामप्यगोचरान् । मदाज्ञया मुनिश्रेष्ठा जज्ञे विप्रकुले पुनः ॥५०॥
ज्ञात्वा मां वासुदेवाख्यं यत्र द्वे निहितेऽक्षरे । विद्याविद्ये गूढरूपं यद् ब्रह्म परमं विदुः ॥५१॥
सोऽर्चयामास भूतानामाश्रयं परमेश्वरम् । व्रतोपवास - नियमैर्होमैर्ब्राह्मणतर्पणैः ॥५२॥
तज्जापो तन्नमस्कारतन्निष्ठस्तत्परायणः । आराधयन् महादेवं योगिनां हृदि संस्थितम् ॥५३॥

तस्यैवं वर्त्तमानस्य कदाचित् परमा कला । स्वरूपं दर्शयामास दिव्यं विष्णुसमुद्भवम् ॥५४॥
दृष्ट्वा प्रणम्य शिरसा विष्णोर्भगवतः प्रियाम् । संस्तूय विविधैः स्तोत्रैः कृताञ्जलिरभाषत ॥५५॥

## इन्द्रद्युम्न उवाच

का त्वं देवि विशालाक्षि विष्णुचिह्नाङ्किते शुभे । याथातथ्येन वै भावं तवेदानीं ब्रवीहि मे ॥५६॥
तस्य तद्वाक्यमाकर्ण्य सुप्रसन्ना सुमङ्गला । हसन्ती संस्मरन् विष्णुं प्रियं ब्राह्मणमब्रवीत् ॥५७॥

## श्रीरुवाच

न मां पश्यन्ति मुनयो देवाः शक्रपुरोगमाः । नारायणात्मिकामेकां मायाऽहं तन्मयी परा ॥५८॥
न मे नारायणाद् भेदो विद्यते हि विचारतः । तन्मय्यहं परं ब्रह्म स विष्णुः परमेश्वरः ॥५९॥
येऽर्चयन्तीह भूतानामाश्रयं पुरुषोत्तमम् । ज्ञानेन कर्मयोगेण न तेषां प्रभवाम्यहम् ॥६०॥
तस्मादनादिनिधनं कर्मयोगपरायणः । ज्ञानेनाराधयानन्तं ततो मोक्षमवाप्स्यसि ॥६१॥
इत्युक्तः स मुनिश्रेष्ठ इन्द्रद्युम्नो महामतिः । प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ॥६२॥
कथं स भगवानीशः शाश्वतो निष्कलोऽच्युतः । ज्ञातुं हि शक्यते देवि ब्रूहि मे परमेश्वरि ॥६३॥
एवमुक्ताथ विप्रेण देवी कमलवासिनी । साक्षान्नारायणो ज्ञानं दास्यतीत्याह तं मुनिम् ॥६४॥
उभाभ्यामथ हस्ताभ्यां संस्पृश्य प्रणतं मुनिम् । स्मृत्वा परात्परं विष्णुं तत्रैवान्तरधीयत ॥६५॥
सोऽपि नारायण द्रष्टुं परमेण समाधिना । आराधयद् हृषीकेशं प्रणतार्त्तिप्रभञ्जनम् ॥६६॥
ततो बहुतिथे काले गते नारायणः स्वयम् । प्रादुरासीन्महायोगी पीतवासा जगन्मयः ॥६७॥
दृष्ट्वा देवं समायान्तं विष्णुमात्मानमव्ययम् । जानुभ्यामवनीं गत्वा तुष्टाव गरुडध्वजम् ॥६८॥

## इन्द्रद्युम्न उवाच

यज्ञेशाच्युत गोविन्द माधवानन्त केशव । कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः ॥६९॥
नमोऽस्तु ते पुराणाय हरये विश्वमूर्त्तये । सर्ग-स्थिति-विनाशानां हेतवेऽनन्तशक्तये ॥७०॥
निर्गुणाय नमस्तुभ्यं निष्कलाय नमो नमः । पुरुषाय नमस्तेऽस्तु विश्वरूपाय ते नमः ॥७१॥
नमस्ते वासुदेवाय विष्णवे विश्वयोनये । आदिमध्यान्तहीनाय ज्ञानगम्याय ते नमः ॥७२॥
नमस्ते निर्विकाराय निष्प्रपञ्चाय ते नमः । भेदाभेदविहीनाय नमोऽस्त्वानन्दरूपिणे ॥७३॥
नमस्ताराय शान्ताय नमोऽप्रतिहतात्मने । अनन्तमूर्त्तये तुभ्यममूर्त्ताय नमो नमः ॥७४॥
नमस्ते परमार्थाय मायातीताय ते नमः । नमस्ते परमेशाय ब्रह्मणे परमात्मने ॥७५॥
नमोऽस्तु ते सुसूक्ष्माय महादेवाय ते नमः । नमः शिवाय शुद्धाय नमस्ते परमेष्ठिने ॥७६॥
त्वयैतत् सृष्टमखिलं त्वमेव परमा गतिः । त्वं पिता सर्वभूतानां त्वं माता पुरुषोत्तम ॥७७॥
त्वमक्षरं परं धाम चिन्मात्रं व्योम निष्कलम् । सर्वस्याधारमव्यक्तमनन्तं तमसः परम् ॥७८॥
प्रपश्यन्ति परात्मानं ज्ञानदीपेन केवलम् । प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम् ॥७९॥
एवं स्तुवन्तं भगवान् भूतात्मा भूतभावनः । उभाभ्यामथ हस्ताभ्यां पस्पर्श प्रहसन्निव ॥८०॥
स्पृष्टमात्रो भगवता विष्णुना मुनिपुङ्गवः । यथावत् परमं तत्त्वं ज्ञातवांस्तत्प्रसादतः ॥८१॥
ततः प्रहृष्टमनसा प्रणिपत्य जनार्दनम् । प्रोवाचोन्निद्रपद्माक्षं पीतवाससमच्युतम् ॥८२॥
त्वत्प्रसादादसन्दिग्धमुत्पन्नं पुरुषोत्तम । ज्ञानं ब्रह्मैकविषयं परमानन्दसिद्धिदम् ॥८३॥

नमो भगवते तुभ्यं वासुदेवाय वेधसे । किं करिष्यामि योगेश तन्मे वद जगन्मय ॥८४॥
श्रुत्वा नारायणो वाक्यमिन्द्रद्युम्नस्य माधवः । उवाच सस्मितं वाक्यमशेषं जगतो हितम् ॥८५॥

## श्रीभगवानुवाच

वर्णाश्रमाचारवतां पुंसां देवो महेश्वरः । ज्ञानेन भक्तियोगेन पूजनीयो न चान्यथा ॥८६॥
विज्ञाय तत् परं तत्त्वं विभूतिं कार्यकारणम् । प्रवृत्तिश्चापि मे ज्ञात्वा मोक्षार्थीश्वरमर्चयेत् ॥८७॥
सर्वसङ्गान् परित्यज्य ज्ञात्वा मायामयं जगत् । अद्वैतं भावयात्मानं द्रक्ष्यसे परमेश्वरम् ॥८८॥
त्रिविधां भावनां ब्रह्मन् प्रोच्यमानां निबोध मे । एका मद्विषया तत्र द्वितीया व्यक्तसंश्रया ।
अन्या च भावना ब्राह्मी विज्ञेया सा गुणातिगा ॥८९॥
आसामन्यतमाञ्चाथ भावनां भावयेद् बुधः । अशक्तः संश्रयेदाद्यामित्येषा वैदिकी श्रुतिः ॥९०॥
तस्मात् सर्वप्रयत्नेन तन्निष्ठस्तत्परायणः । समाराधय विश्वेशं ततो मोक्षमवाप्स्यसि ॥९१॥

## इन्द्रद्युम्न उवाच

किं तत् परतरं तत्त्वं का विभूतिर्जनार्दन । किं कार्यं कारणं कस्त्वं प्रवृत्तिश्चापि का तव ॥९२॥

## श्रीभगवानुवाच

परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम् । नित्यानन्दमयं ज्योतिरक्षरं तमसः परम् ॥९३॥
ऐश्वर्यं तस्य यन्नित्यं विभूतिरिति गीयते । कार्यं जगदथाव्यक्तं कारणं शुद्धमक्षरम् ॥९४॥
अहं हि सर्वभूतानामन्तर्यामीश्वरः परः । सर्गस्थित्यन्तकर्त्तृत्वं प्रवृत्तिर्मम गीयते ॥९५॥
एतद्विज्ञाय भावेन यथावदखिलं द्विजः । ततस्त्वं कर्मयोगेण शाश्वतं सम्यगर्चय ॥९६॥

## इन्द्रद्युम्न उवाच

के ते वर्णाश्रमाचारा यैः समाराध्यते परः । ज्ञानञ्च कीदृशं दिव्यं भावनात्रयसंस्थितम् ॥९७॥
कथं सृष्टमिदं पूर्वं कथं संह्रियते पुनः । कियत्यः सृष्टयो लोके वंशा मन्वन्तराणि च ॥९८॥
कानि तेषां प्रमाणानि पावनानि व्रतानि च । तीर्थान्यर्कादिसंस्थानं पृथिव्यायामविस्तरम् ॥९९॥
कति द्वीपाः समुद्राश्च पर्वताश्च नदी-नदाः । ब्रूहि मे पुण्डरीकाक्ष यथावदधुना पुनः ॥१००॥

## कूर्म उवाच

एवमुक्तोऽथ तेनाहं भक्तानुग्रहकाम्यया । यथावदखिलं सम्यगवोचं मुनिपुङ्गवाः ॥१०१॥
व्याख्यायाशेषमेवेदं यत् पृष्टोऽहं द्विजेन तु । अनुगृह्य च तं विप्रं तत्रैवान्तर्हितोऽभवम् ॥१०२॥
सोऽपि तेन विधानेन मदुक्तेन द्विजोत्तमाः । आराधयामास परं भावपूतः समाहितः ॥१०३॥
त्यक्त्वा पुत्रादिषु स्नेहं निर्द्वन्द्वो निष्परिग्रहः । संन्यस्य सर्वकर्माणि परं वैराग्यमाश्रितः ॥१०४॥
आत्मन्यात्मानमन्वीक्ष्य स्वात्मन्येवाखिलं जगत् । सम्प्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्विकाम् ॥१०५॥
अवाप परमं योगं येनैकं परिपश्यति । यं विनिद्रा जितश्वासाःकांक्षन्ते मोक्षकाङ्क्षिणः ॥१०६॥
ततः कदाचिद्योगीन्द्रो ब्रह्माणं द्रष्टुमव्ययम् । जगामादित्यनिर्देशान्मानसोत्तरपर्वतम् ॥१०७॥
आकाशेनैव विप्रेन्द्रो योगैश्वर्यप्रभावतः । विमानं सूर्यसङ्काशं प्रादुर्भूतमनुत्तमम् ॥१०८॥

अन्वगच्छन् देवगणा गन्धर्वाप्सरसां गणाः । दृष्ट्वाऽन्ये पथि योगीन्द्रं सिद्धा ब्रह्मर्षयो ययुः ॥१०९॥
ततः स गत्वाऽनुगिरिं विवेश सुरवन्दितम् । स्थानं तद्योगिभिजुष्टं यत्रास्ते परमः पुमान् ॥११०॥
सम्प्राप्य परमं स्थानं सूर्यायुतसमप्रभम् । विवेश चान्तर्भवनं देवानाञ्च दुरासदम् ॥१११॥
विचिन्तयामास परं शरण्यं सर्वदेहिनाम् । अनादिनिधनञ्चैव देवदेवं पितामहम् ॥११२॥
ततः प्रादुरभूत् तस्मिन् प्रकाशः परमाद्भुतः । तन्मध्ये पुरुषं पूर्वमपश्यत् परमं पदम् ॥११३॥
महान्तं तेजसो राशिमगम्यं ब्रह्मविद्विषाम् । चतुर्मुखमुदाराङ्गमर्चिर्भिरुपशोभितम् ॥११४॥
सोऽपि योगिनमन्वीक्ष्य प्रणमन्तमुपस्थितम् । प्रत्युद्गम्य स्वयं देवो विश्वात्मा परिषस्वजे ॥११५॥
परिष्वक्तस्य देवेन द्विजेन्द्रस्याथ देहतः । निर्गत्य महती ज्योत्स्ना विवेशादित्यमण्डलम्॥११६॥
ऋग्यजुःसामसंज्ञं तत् पवित्रममलं पदम् । हिरण्यगर्भो भगवान् यत्रास्ते हव्यकव्यभुक् ॥११७॥
द्वारं तद्योगिनामाद्यं वेदान्तेषु प्रतिष्ठितम् । ब्रह्मतेजोमयं श्रीमन्निष्ठा चैव मनीषिणाम् ॥११८॥
दृष्टमात्रो भगवता ब्रह्मणार्चिर्मयो मुनिः । अपश्यदैश्वरं तेजः शान्तं सर्वत्रगं शिवम् ॥११९॥
स्वात्मानमक्षरं व्योम यत्र विष्णोः परं पदम् । आनन्दमचलं ब्रह्मस्थानं तत् पारमेश्वरम् ॥१२०॥
सर्वभूतात्मभूतस्थः परमैश्वर्यमास्थितः । प्राप्तवानात्मनो धाम यत्तन्मोक्षाख्यमव्ययम् ॥१२१॥
तस्मात् सर्वप्रयत्नेन वर्णाश्रमविधौ स्थितः । समाश्रित्यान्तिमं भावं मायां लक्ष्मीं तरेद् बुधः ॥१२२॥

## सूत उवाच

व्याहृता हरिणा त्वेवं नारदाद्या महर्षयः । शक्रेण सहिताः सर्वे पप्रच्छुर्गरुडध्वजम् ॥१२३॥

## ऋषय ऊचुः

देवदेव हृषीकेश नाथ नारायणाव्यय । तद्वदाशेषमस्माकं यदुक्तं भवता पुरा ॥१२४॥
इन्द्रद्युम्नाय विप्राय ज्ञानं धर्मादिगोचरम् । शुश्रूषुश्चाप्ययं शक्रः सखा तव जगन्मय ॥१२५॥
ततः स भगवान् विष्णुः कूर्मरूपी जनार्दनः । रसातलगतो देवो नारदाद्यैर्महर्षिभिः ॥१२६॥
पृष्टः प्रोवाच सकलं पुराणं कौर्ममुत्तमम् । सन्निधौ देवराजस्य तद्वक्ष्ये भवतामहम् ॥१२७॥
धन्यं यशस्यमायुष्यं पुण्यं मोक्षप्रदं नृणाम् । पुराणश्रवणं विप्राः पठनञ्च विशेषतः ॥१२८॥
श्रुत्वा चाध्यायमेवैकं सर्वपापैः प्रमुच्यते । उपाख्यानमथैकं वा ब्रह्मलोके महीयते ॥१२९॥
इदं पुराणं परमं कौर्मं कूर्मस्वरूपिणा । उक्तं देवाधिदेवेन श्रद्धातव्यं द्विजातिभिः ॥१३०॥

इति श्रीकौर्मे महापुराणे पूर्वभागे इन्द्रद्युम्नमोक्षवर्णनं नाम प्रथमोऽध्यायः ॥१॥

———

# द्वितीयोऽध्यायः

## कूर्म उवाच

शृणुध्वमृषयः सर्वे यत् पृष्टोऽहं जगद्धितम् । वक्ष्यमाणं मया सर्वमिन्द्रद्युम्नाय भाषितम् ॥ १ ॥
भूतैर्भव्यैर्भवद्भिश्च चरितैरुपबृंहितम् । पुराणं पुण्यदं नृणां मोक्षधर्मानुकीर्त्तनम् ॥ २ ॥
अहं नारायणो देवः पूर्वमासं न मे परम् । उपास्य विपुलां निद्रां भोगिशय्यां समाश्रितः ।
चिन्तयामि पुनः सृष्टिं निशान्ते प्रतिबुध्य तु ॥ ३ ॥
ततो मे सहसोत्पन्नः प्रसादो मुनिपुङ्गवाः । चतुर्मुखस्ततो जातो ब्रह्मा लोकपितामहः ॥ ४ ॥
तदन्तरेऽभवत् क्रोधः कस्माच्चित् कारणात् तदा । आत्मनो मुनिशार्दूलस्तत्र देवो महेश्वरः ॥ ५ ॥
रुद्रः क्रोधात्मको जज्ञे शूलपाणिस्त्रिलोचनः । तेजसा सूर्यसङ्काशस्त्रैलोक्यं निर्दहन्निव ॥ ६ ॥
ततः श्रीरभवद्देवी कमलायतलोचना । सुरूपा सौम्यवदना मोहिनी सर्वदेहिनाम् ॥ ७ ॥
शुचिस्मिता सुप्रसन्ना मङ्गला महिमास्पदा । दिव्यकान्तिसमायुक्ता दिव्यमाल्योपशोभिता ॥ ८ ॥
नारायणी महामाया मूलप्रकृतिरव्यया । स्वधाम्ना पूरयन्तीदं मत्पार्श्वं समुपाविशत् ॥ ९ ॥
तां दृष्ट्वा भगवान् ब्रह्मा मामुवाच जगत्पतिम् । मोहायाशेषभूतानां नियोजय सुरूपिणीम् ॥१०॥
येनेयं विपुला सृष्टिर्वर्द्धते मम माधव । तथोक्तोऽहं श्रियं देवीमब्रवं प्रहसन्निव ॥११॥
देवीदमखिलं विश्वं सदेवासुरमानुषम् । मोहयित्वा ममादेशात् संसारे विनिपातय ॥१२॥
ज्ञानयोगरतान् दान्तान् ब्रह्मिष्ठान् ब्रह्मवादिनः । अक्रोधनान् सत्यपरान् दूरतः परिवर्जय ॥१३॥
ध्यायिनो निर्ममाञ्छान्तान् धार्मिकान् वेदपारगान् । याजिनस्तापसान् विप्रान् दूरतः परिवर्जय॥१४॥
वेदवेदान्तविज्ञान-संछिन्नाशेषसंशयान् । महायज्ञपरान् विप्रान् दूरतः परिवर्जय ॥१५॥
ये यजन्ति जपैर्होमैर्देवदेवं महेश्वरम् । स्वाध्यायेनेज्यया दूरात् तान् प्रयत्नेन वर्जय ॥१६॥
भक्तियोगसमायुक्तानीश्वरार्पितमानसान् । प्राणायामादिषु रतान् दूरात् परिहरामलान् ॥१७॥
प्रणवासक्तमनसो रुद्रजप्यपरायणान् । अथर्वशिरसो वेत्तॄन् धर्मज्ञान् परिवर्जय ॥१८॥
बहुनात्र किमुक्तेन स्वधर्मपरिपालकान् । ईश्वराराधनरतान् मन्नियोगान् न मोहय ॥१९॥
एवं मया महामाया प्रेरिता हरिवल्लभा । यथादेशं चकारासौ तस्माल्लक्ष्मीं समर्चयेत् ॥२०॥
श्रियं ददाति विपुलां पुष्टिं मेधां यशो बलम् । अर्चिता भगवत्पत्नी तस्माल्लक्ष्मीं समर्चयेत् ॥२१॥
ततोऽसृजत् स भगवान् ब्रह्मा लोकपितामहः । चराचराणि भूतानि यथापूर्वं ममाज्ञया ॥२२॥
मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । दक्षमत्रिं वसिष्ठञ्च सोऽसृजद्योगविद्यया ॥२३॥
नवैते ब्रह्मणः पुत्रा ब्राह्मणा ब्राह्मणोत्तमाः । ब्रह्मवादिन एवैते मरीच्याद्यास्तु साधकाः ॥२४॥
ससर्ज ब्राह्मणान् वक्त्रात् क्षत्रियांश्च भुजाद्विभुः । वैश्यानूरुद्वयाद्देवः पद्भ्यां शूद्रान् पितामहः ॥२५॥
यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह । गुप्तये सर्वदेवानां तेभ्यो यज्ञो हि निर्बभौ ॥२६॥
ऋचो यजूंषि सामानि तथैवाथर्वणानि च । ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यया ॥२७॥
अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी भूता यतः सर्वाः प्रवृत्तयः ॥२८॥
अतोऽन्यानि हि शास्त्राणि पृथिव्यां यानि कानिचित् । न तेषु रमते धीरः पाषण्डी तेन जायते ॥२९॥
वेदार्थवित्तमैः कार्य्यं यत् स्मृतं मुनिभिः पुरा । स ज्ञेयः परमो धर्मो नान्यशास्त्रेषु संस्थितः ॥३०॥

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥३१॥
पूर्वकल्पे प्रजा जाताः सर्वबाधाविवर्जिताः । शुद्धान्तःकरणाः सर्वाः स्वधर्मपरिपालकाः ॥३२॥
ततः कालवशात् तासां रागद्वेषादिकोऽभवत् । अधर्मा मुनिशार्दूलाः स्वधर्मप्रतिबन्धकः ॥३३॥
ततः सा सहजा सिद्धिस्तासां नातीव जायते । रजोमात्रात्मिकास्तासां सिद्धयोऽन्यास्तदाभवन् ॥३४॥
तासु क्षीणास्वशेषासु कालयोगेन ताः पुनः । वार्त्तोपायं पुनश्चक्रुर्हस्तसिद्धिश्च कर्मजाम् ॥३५॥
ततस्तासां विभुर्ब्रह्मा कर्माजीवमकल्पयत् । स्वायम्भुवो मनुः पूर्वं धर्मान् प्रोवाच सर्वदृक् ॥३६॥
साक्षात् प्रजापतेर्मूर्त्तिर्निसृष्टा ब्रह्मणो द्विजाः । भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्मानथोचिरे ॥३७॥
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः । अध्यापनञ्चाध्ययनं षट् कर्माणि द्विजोत्तमाः ॥३८॥
दानमध्ययनं यज्ञो धर्मः क्षत्रिय-वैश्ययोः । दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥३९॥
शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् । कारुकर्म तथाजीवः पाकयज्ञादि धर्मतः ॥४०॥
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् । गृहस्थञ्च वनस्थञ्च भिक्षुकं ब्रह्मचारिणम् ॥४१॥
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् । गृहस्थस्य समासेन धर्मोऽयं मुनिपुङ्गवाः ॥४२॥
होमो मूल-फलाशित्वं स्वाधायस्तप एव च । संविभागो यथान्यायं धर्मोऽयं वनवासिनाम् ॥४३॥
भैक्षाशनञ्च मौनित्वं तपो ध्यानं विशेषतः । सम्यग्ज्ञानञ्च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥४४॥
भिक्षाचर्या च शुश्रूषा गुरोः स्वाध्याय एव च । संध्याकर्माग्निकार्यञ्च धर्मोऽयं ब्रह्मचारिणाम् ॥४५॥
ब्रह्मचारि-वनस्थानां भिक्षुकाणां द्विजोत्तमाः । साधारणं ब्रह्मचर्यं प्रोवाच कमलोद्भवः ॥४६॥
ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः । पर्ववर्जं गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ॥४७॥
आ गर्भधारणादाज्ञा कार्या तेनाप्रमादतः । अकुर्वाणस्तु विप्रेन्द्रा भ्रूणहा तूपजायते ॥४८॥
वेदाभ्यासोऽन्वहं शक्त्या श्राद्धञ्चातिथिपूजनम् । गृहस्थस्य परो धर्मो देवताभ्यर्चनं तथा ॥४९॥
वैवाह्यमग्निमिन्धीत सायं प्रातर्यथाविधि । देशान्तरगते वाथ सुतः पत्न्यृत्विगेव वा ॥५०॥
त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते । अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी ॥५१॥
ऐकाश्रम्यं गृहस्थस्य चतुर्णां श्रुतिदर्शनात् । तस्माद् गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम् ॥५२॥
परित्यजेदर्थ-कामौ यौ स्यातां धर्मवर्जितौ । सर्वलोकविरुद्धञ्च धर्ममप्याचरेन्न तु ॥५३॥
धर्मात् सञ्जायते ह्यर्थो धर्मात् कामोऽभिजायते । धर्म एवापवर्गाय तस्माद्धर्मं समाश्रयेत् ॥५४॥
धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः । सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥५५॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥५६॥
यस्मिन् धर्मसमायुक्तौ ह्यर्थकामौ व्यवस्थितौ । इह लोके सुखी भूत्वा प्रेत्यानन्त्याय कल्पते ॥५७॥
धर्मात् सञ्जायते मोक्षो ह्यर्थात् कामोऽभिजायते । एवं साधन-साध्यत्वं चातुर्विध्ये प्रदर्शितम् ॥५८॥
य एवं वेद धर्मार्थ-काम-मोक्षस्य मानवः । माहात्म्यञ्चानुतिष्ठेत स चानन्त्याय कल्पते ॥५९॥
तस्मादर्थञ्च कामञ्च त्यक्त्वा धर्मं समाश्रयेत् । धर्मात् सञ्जायते सर्वमित्याहुर्ब्रह्मवादिनः ॥६०॥
धर्मेण धार्यते सर्वं जगत् स्थावरजङ्गमम् । अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तमाः ॥६१॥
कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः । तस्माज् ज्ञानेन सहितं कर्मयोगं समाश्रयेत् ॥६२॥
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म वैदिकम् । ज्ञानपूर्वं निवृत्तं स्यात् प्रवृत्तं यदतोऽन्यथा ॥६३॥
निवृत्तं सेवमानस्तु याति तत् परमं पदम् । तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत् पुनः ॥६४॥
क्षमा दमो दया दानमलोभस्त्याग एव च । आर्जवञ्चानसूया च तीर्थानुसरणं तथा ॥६५॥
सत्यं सन्तोषमास्तिक्यं श्रद्धा चेन्द्रियनिग्रहः । देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ॥६६॥

अहिंसा प्रियवादित्वमपैशुन्यमकल्कता । सामासिकमिमं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥६७॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् । स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥६८॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तताम् । गान्धर्वं शूद्रजातीनां परिचारेण वर्त्तताम् ॥६९॥
अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् । स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनाम् ॥७०॥
सप्तर्षीणान्तु यत् स्थानं स्मृतं तद्वै वनौकसाम् । प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयम्भुवा ॥७१॥
यतीनां जितचित्तानां न्यासिनामूर्ध्वरेतसाम् । हैरण्यगर्भं तत् स्थानं यस्मान्नावर्त्तते पुनः ॥७२॥
योगिनाममृतं स्थानं व्योमाख्यं परमक्षरम् । आनन्दमैश्वरं धाम सा काष्ठा सा परा गतिः ॥७३॥

## ऋषय ऊचुः

भगवन् देवतारिघ्न हिरण्याक्षनिसूदन । चत्वारो ह्याश्रमाः प्रोक्ता योगिनामेक उच्यते ॥७४॥

## कूर्म उवाच

सर्वकर्माणि संन्यस्य समाधिमचलं श्रितः । य आस्ते निश्चलो योगी स संन्यासी च पञ्चमः ॥७५॥
सर्वेषामाश्रमाणान्तु द्वैविध्यं श्रुतिदर्शितम् । ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः ॥७६॥
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् । उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥७७॥
उदासीनः साधकश्च गृहस्थो द्विविधो भवेत् । कुटुम्बभरणायत्तः साधकोऽसौ गृही भवेत् ॥७८॥
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्याधनादिकम् । एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥७९॥
तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च । स्वाध्याये चैव निरतो वनस्थस्तापसो मतः ॥८०॥
तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् । सांन्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥८१॥
योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः । ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥८२॥
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः । सम्यग्दर्शनसम्पन्नः स योगी भिक्षुरुच्यते ॥८३॥
ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनोऽपरे । कर्मसंन्यासिनः केचित् त्रिविधाः पारमेष्ठिकाः ॥८४॥
योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च । तृतीयोऽन्त्याश्रमी प्रोक्तो योगमुत्तममाश्रितः ॥८५॥
प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना । तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥८६॥
तस्मादेतद्विजानीध्वमाश्रमाणां चतुष्टयम् । सर्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते ॥८७॥
एवं वर्णाश्रमान् सृष्ट्वा देवदेवो निरञ्जनः । दक्षादीन् प्राह विश्वात्मा सृजध्वं विविधाः प्रजाः ॥८८॥
ब्रह्मणो वचनात् पुत्रा दक्षाद्या मुनिसत्तमाः । असृजन्त प्रजाः सर्वा देवमानुषपूर्विकाः ॥८९॥
इत्येवं भगवान् ब्रह्मा स्रष्टृत्वे संव्यवस्थितः । अहं वै पालयामीदं संहरिष्यति शूलभृत् ॥९०॥
तिस्रस्तु मूर्त्तयः प्रोक्ता ब्रह्म-विष्णु-शिवात्मिकाः । रजः-सत्त्व-तमोयोगात् परस्य परमात्मनः ॥९१॥
अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविनः । अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः ॥९२॥
ब्राह्मी माहेश्वरी चैव तथैवाक्षरभावना । तिस्रस्तु भावना रुद्रे वर्त्तन्ते सततं द्विजाः ॥९३॥
प्रवर्त्तते मय्यजस्रमाद्या त्वक्षरभावना । द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षरभावना ॥९४॥
अहञ्चैव महादेवो न भिन्नो परमार्थतः । विभज्य स्वेच्छयात्मानं सोऽन्तर्यामीश्वरः स्थितः ॥९५॥
त्रैलोक्यमखिलं स्रष्टुं सदेवासुरमानुषम् । पुरुषः परतोऽव्यक्ताद ब्रह्मत्वं समुपागमत् ॥९६॥
तस्माद ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः । एकस्यैव स्मृतास्तिस्रो मूर्त्तीः कार्यवशात् प्रभोः ॥९७॥
तस्मात् सर्वप्रयत्नेन वन्द्याः पूज्याः विशेषतः । यदीच्छेदचिरात् स्थानं यत्तन्मोक्षाख्यमव्ययम् ॥९८॥

वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः । पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥९९॥
चतुर्णामाश्रमाणान्तु प्रोक्तोऽयं विधिवद्द्विजाः । आश्रमो वैष्णवो ब्राह्मो हराश्रम इति त्रयः ॥१००॥
तल्लिङ्गधारी सततं तद्भक्तजनवत्सलः । ध्यायेदथार्चयेदेतान् ब्रह्मविद्यापरायणः ॥१०१॥
सर्वेषामेव भक्तानां शम्भोर्लिङ्गमनुत्तमम् । सितेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकम् ॥१०२॥
यस्तु नारायणं देवं प्रपन्नः परमं पदम् । धारयेत् सर्वदा शूलं ललाटे गन्धवारिभिः ॥१०३॥
प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् । तेषां ललाटे तिलकं धारणीयन्तु सर्वदा ॥१०४॥
योऽसावनादिर्भूतादिः कालात्माऽसौ धृतो भवेत् । उपर्यधोभावयोगात् त्रिपुण्ड्रस्य तु धारणा ॥१०५॥
यत्तत् प्रधानं त्रिगुणं ब्रह्म-विष्णु-शिवात्मकम् । धृतं त्रिशूलधरणाद्भवत्येव न संशयः ॥१०६॥
ब्रह्मतेजोमयं शुक्लं यदेतन्मण्डलं रवेः । भवत्येव धृतं स्थानमैश्वरं तिलके कृते ॥१०७॥
तस्मात् कार्यं त्रिशूलाङ्कं तथा च तिलकं शुभम् आयुष्यञ्चापि भक्तानां त्रयाणां विधिपूर्वकम् ॥१०८॥
यजेत जुहुयादग्नौ जपेद्दद्याज्जितेन्द्रियः । शान्तो दान्तो जितक्रोधो वर्णाश्रमविधानवित् ॥१०९॥
एवं परिचरेद्देवान् यावज्जीवं समाहितः । तेषां स्वस्थानमचलं सोऽचिरादधिगच्छति ॥११०॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वर्णाश्रमवर्णनं नाम द्वितीयोऽध्यायः ॥२॥

---

# तृतीयोऽध्यायः

## ऋषय ऊचुः

वर्णा भगवतोद्दिष्टाश्चत्वारोऽप्याश्रमास्तथा । इदानीं क्रममस्माकमाश्रमाणां वद प्रभो ॥ १ ॥

## कूर्म उवाच

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥ २ ॥
उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः । प्रव्रजेद् ब्रह्मचर्यात् तु यदीच्छेत् परमां गतिम् ॥ ३ ॥
दारानाहृत्य विधिवदन्यथा विविधैर्मखैः । यजेदुत्पादयेत् पुत्रान् विरक्तो यदि संन्यसेत् ॥ ४ ॥
अनिष्ट्वा विविधयज्ञैरनुत्पाद्य तथात्मजान् । न गार्हस्थ्यं गृहीत्वा न संन्यसेद् बुद्धिमान् द्विजः ॥५॥
अथ वैराग्यवेगेण स्थातुं नोत्सहते गृहे । तत्रैव संन्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ॥ ६ ॥
तथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयन् । तपस्तप्त्वा तपोयोगाद्विरक्तः संन्यसेद्बहिः ॥ ७ ॥
वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत् पुनः । न संन्यासी वनञ्चाथ ब्रह्मचर्यञ्च साधकः ॥ ८ ॥
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा द्विजः । प्रव्रजेत् तु गृही विद्वान् वनाद्वा श्रुतिचोदनात् ॥ ९ ॥
प्रकर्त्तुमसमर्थोऽपि जुहोति यजति-क्रियाः । अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः ॥१०॥
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते । पतत्येवाविरक्तो यः संन्यासं कर्त्तुमिच्छति ॥११॥
एकस्मिन्नथवा सम्यग्वर्त्तेतामरणान्तिकम् । श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते ॥१२॥
न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः । स्वधर्मपालको नित्यं ब्रह्मभूयाय कल्पते ॥१३॥
ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः । प्रसन्नेनैव मनसा कुर्वाणो याति तत् पदम् ॥१४॥
ब्रह्मणा दीयते देयं ब्रह्मणे सम्प्रदीयते । ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥१५॥
नाहं कर्त्ता सर्वमेतद् ब्रह्मैव कुरुते तथा । एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥१६॥

प्रीणातु भगवानीशः कर्मणानेन शाश्वतः । करोति सततं बुद्धया ब्रह्मार्पणमिदं परम् ॥१७॥
यद्वा फलानां संन्यासं प्रकुर्यात् परमेश्वरे । कर्मणामेतदप्याहु ब्रह्मार्पणमनुत्तमम् ॥१८॥
कार्यमित्येव यत् कर्म नियतं सङ्गवर्जितम् । क्रियते विदुषा कर्म तद्भवेदपि मोक्षदम् ॥१९॥
अन्यथा यदि कर्माणि कुर्यान्नित्यान्यपि द्विजः । अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥२०॥
तस्मात् सर्वप्रयत्नेन त्यक्त्वा कर्माश्रितं फलम् । अविद्वानपि कुर्वीत कर्माप्नोति चिरात् पदम् ॥२१॥
कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा । मनः प्रसादमन्वेति ब्रह्मविज्ञायते नरः ॥२२॥
कर्मणा सहिताज्ज्ञानात् सम्यग्योगोऽभिजायते । ज्ञानञ्च कर्मसहितं जायते दोषवर्जितम् ॥२३॥
तस्मात् सर्वप्रयत्नेन यत्र तत्राश्रमे रतः । कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात् ॥२४॥
सम्प्राप्य परमं ज्ञानं नैष्कर्म्यं तत्प्रसादतः । एकाकी निर्ममः शान्तो जीवन्नेव विमुच्यते ॥२५॥
वीक्षते परमात्मानं परं ब्रह्म महेश्वरम् । नित्यानन्दी निराभासस्तस्मिन्नेव लयं व्रजेत् ॥२६॥
तस्मात् सेवेत सततं कर्मयोगं प्रसन्नधीः । तृप्तये परमेशस्य तत् पदं याति शाश्वतम् ॥२७॥
एतद्वः कथितं सर्वं चातुराश्रम्यमुत्तमम् । न ह्येतत् समतिक्रम्य सिद्धिं विन्दति मानवः॥२८॥

इति श्रीकौर्मे महापुराणे पूर्वभागे चातुराश्रम्यकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः

### सूत उवाच

श्रुत्वाऽश्रमविधिं कृत्स्नमृषयो हृष्टचेतसः । नमस्कृत्य हृषीकेशं पुनर्वचनमब्रुवन् ॥ १ ॥

### मुनय ऊचुः

भाषितं भवता सर्वं चातुराश्रम्यमुत्तमम् । इदानीं श्रोतुमिच्छामो यथा सञ्जायते जगत् ॥ २ ॥
कुतः सर्वमिदं जातं कस्मिंश्च लयमेष्यति । नियन्ता कश्च सर्वेषां वदस्व पुरुषोत्तम ॥ ३ ॥
श्रुत्वा नारायणो वाक्यमृषीणां कूर्मरूपधृक् । प्राह गम्भीरया वाचा भूतानां प्रभवाप्ययौ ॥ ४ ॥

### कूर्म उवाच

महेश्वरः परोऽव्यक्तश्चतुर्व्यूहः सनातनः । अनन्तश्चाप्रमेयश्च नियन्ता सर्वतोमुखः ॥ ५ ॥
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् । प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः ॥ ६ ॥
गन्ध-वर्ण-रसैर्हीनं शब्द-स्पर्शविवर्जितम् । अजरं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ॥ ७ ॥
जगद्योनिर्महाभूतं परं ब्रह्म सनातनम् । विग्रहः सर्वभूतानामात्मनाऽधिष्ठितं महत् ॥ ८ ॥
अनाद्यन्तमजं सूक्ष्मं त्रिगुणं प्रभवाव्ययम् । असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्त्तत ॥ ९ ॥
गुणसाम्ये तदा तस्मिन् पुरुषे चात्मनि स्थिते । प्राकृतः प्रलयो ज्ञेयो यावद्विश्वसमुद्भवः ॥१०॥
ब्राह्मी रात्रिरियं प्रोक्ता ह्यहः सृष्टिरुदाहृता । अहर्न विद्यते तस्य न रात्रिर्ह्युपचारतः ॥११॥
निशान्ते प्रतिबुद्धोऽसौ जगदादिरनादिमान् । सर्वभूतमयोऽव्यक्तो ह्यन्तर्यामीश्वरः परः ॥१२॥
प्रकृतिं पुरुषञ्चैव प्रविश्याशु महेश्वरः । क्षोभयामास योगेन परेण परमेश्वरः ॥१३॥
यथा मदो नवस्त्रीणां यथा वा माधवोऽनिलः । अनुप्रविष्टः क्षोभाय तथाऽसौ योगमूर्तिमान् ॥१४॥

स एव क्षोभको विप्राः क्षोभ्यश्च परमेश्वरः । स सङ्कोच-विकाशाभ्यां प्रधानत्वे व्यवस्थितः ॥१५॥
प्रधानात् क्षोभ्यमाणाच्च तथा पुंसः पुरातनात् । प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम् ॥१६॥
महानात्मा मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा धृतिःस्मृतिःसंविदेश्वरं चेति तत् स्मृतम् ॥१७॥
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः । त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह ॥१८॥
अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः । आत्मा च मत्परो जीवो यतः सर्वाः प्रवृत्तयः ॥१९॥
पञ्च भूतान्यहङ्कारात् तन्मात्राणि च जज्ञिरे । इन्द्रियाणि तथा देवाः सर्वं तस्यात्मजं जगत् ॥२०॥
मनस्त्वव्यक्तजं प्रोक्तं विकारः प्रथमः स्मृतः । येनासौ जायते कर्त्ता भूतादींश्चानुपश्यति ॥२१॥
वैकारिकादहङ्कारात् सर्गो वैकारिकोऽभवत् । तैजसानीन्द्रियाणि स्युर्देवा वैकारिका दश ॥२२॥
एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् । भूततन्मात्रसर्गोऽयं भूतादेरभवद् द्विजाः ॥२३॥
भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह । आकाशं शुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥२४॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह । वायुरुत्पद्यते तस्मात् तस्य स्पर्शं गुणं विदुः ॥२५॥
वायुश्चापि विकुर्वाणो रूपमात्रं ससर्ज ह । ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ॥२६॥
ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह । सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च ॥२७॥
आपश्चापि विकुर्वाणा गन्धमात्रं ससर्जिरे । सङ्घातो जायते तस्मात् तस्य गन्धो गुणो मतः ।
जायते पृथिवी तस्मात् सर्वाधारा सनातनी ॥२८॥
आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् । द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥२९॥
रूपं तथैवाविशतः शब्द-स्पर्शौ गुणावुभौ । त्रिगुणः स्यात् ततो वह्निः स शब्दस्पर्शरूपवान् ॥३०॥
शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत् । तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥३१॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धं समाविशत् । तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु शब्द्यते ॥३२॥
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृता । परस्परानुप्रवेशाद्धारयन्ति परस्परम् ॥३३॥
एते सप्त महात्मानो ह्यन्योऽन्यस्य समाश्रयात् । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥३४॥
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च । महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥३५॥
एककालसमुत्पन्नं जलबुद्बुदवच्च तत् । विशेषेभ्योऽण्डमभवद् बृहत् तदुदकेशयम् ॥३६॥
तस्मिन् कार्यस्य करणं संसिद्धं परमेष्ठिनः । प्राकृतेऽण्डे विवृद्धे तु क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥३७॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥३८॥
यमाहुः पुरुषं हंसं प्रधानात् परतः स्थितम् । हिरण्यगर्भं कपिलं छन्दोमूर्त्तिं सनातनम् ॥३९॥
मेरुरुल्वमभूत् तस्य जरायुश्चापि पर्वताः । गर्भोदकं समुद्राश्च तस्यासन् परमात्मनः ॥४०॥
तस्मिन्नण्डेऽभवद् विश्वं सदेवासुरमानुषम् । चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ॥४१॥
अद्भिर्दशगुणाभिश्च बाह्यतोऽण्डं समावृतम् । आपो दशगुणेनैव तेजसा बाह्यतो वृताः ॥४२॥
तेजो दशगुणेनैव बाह्यतो वायुना वृतम् । आकाशेनाऽवृतो वायुः खन्तु भूतादिना वृतम् ।
भूतादिर्महता तद्वदव्यक्तेनावृतो महान् ॥४३॥
एते लोका महात्मानः सर्वे तत्त्वाभिमानिनः । वसन्ति तत्र पुरुषास्तदात्मानो व्यवस्थिताः ॥४४॥
ईश्वरा योगधर्माणो ये चान्ये तत्त्वचिन्तकाः । सर्वज्ञाः शान्तरजसो नित्यं मुदितमानसाः ॥४५॥
एतैरावरणैरण्डं प्राकृतैः सप्तभिर्वृतम् । एतावच्छक्यते वक्तुं मायैषा गहना द्विजाः ॥४६॥
एतत्प्राधानिकं कार्यं यन्मया बीजमीरितम् । प्रजापतेः परामूर्त्तिरितीयं वैदिकी श्रुतिः ॥४७॥
ब्रह्माण्डमेतत् सकलं सप्तलोकबलान्वितम् । द्वितीयं तस्य देवस्य शरीरं परमेष्ठिनः ॥४८॥

हिरण्यगर्भो भगवान् ब्रह्मा वै कनकाण्डजः । तृतीयं भगवद्रूपं प्राहुर्वेदार्थवेदिनः ॥४९॥
रजोगुणमयश्चान्यद्रूपं तस्यैव धीमतः । चतुर्मुखः स भगवान् जगत्सृष्टौ प्रवर्त्तते ॥५०॥
सृष्टञ्च पाति सकलं विश्वात्मा विश्वतोमुखः । सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम् ॥५१॥
अन्तकाले स्वयं देवः सर्वात्मा परमेश्वरः । तमोगुणं समाश्रित्य रुद्रः संहरते जगत् ॥५२॥
एकोऽपि सन् महादेवस्त्रिधाऽसौ समवस्थितः । सर्ग - रक्षा - लयगुणैर्निर्गुणोऽपि निरञ्जनः ।
एकधा स द्विधा चैव त्रिधा च बहुधा गुणैः ॥५३॥
योगेश्वरः शरीराणि करोति विकरोति च । नानाकृति-क्रिया-रूप-नामवन्ति स्वलीलया ॥५४॥
हिताय चैव भक्तानां स एव ग्रसते पुनः । त्रिधा विभज्य चात्मानं त्रैकाल्ये सम्प्रवर्त्तते ।
सृजते ग्रसते चैव रक्षते च विशेषतः ॥५५॥
यस्मात् सृष्ट्वाऽनुगृह्णाति ग्रसते च पुनः प्रजाः । गुणात्मकत्वात् त्रैकाल्ये तस्मादेकः स उच्यते ॥५६॥
अग्रे हिरण्यगर्भः स प्रादुर्भूतः सनातनः । आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः ॥५७॥
पाति यस्मात् प्रजाः सर्वाः प्रजापतिरिति स्मृतः । देवेषु च महादेवो महादेव इति स्मृतः ॥५८॥
बृहत्त्वाच्च स्मृतो ब्रह्मा परत्वात् परमेश्वरः । वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः ॥५९॥
ऋषिः सर्वत्रगत्वेन हरिः सर्वहरो यतः । अनुत्पादाच्च पूर्वत्वात् स्वयम्भुरिति स स्मृतः ॥६०॥
नाराणामयनं यस्मात् तेन नारायणः स्मृतः । हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते ॥६१॥
भगवान् सर्वविज्ञानादवनादोमिति स्मृतः । सर्वज्ञः सर्वविज्ञानात् सर्वः सर्वमयो यतः ॥६२॥
शिवः स्यान्निर्मलो यस्माद्विभुः सर्वगतो यतः । तारणात् सर्वदुःखानां तारकः परिगीयते ॥६३॥
बहुनात्र किमुक्तेन सर्वं ब्रह्ममयं जगत् । अनेकभेदभिन्नस्तु क्रीडते परमेश्वरः ॥६४॥
इत्येष प्राकृतः सर्गः संक्षेपात् कथितो मया । अबुद्धिपूर्वकां विप्रा ब्राह्मीं सृष्टिं निबोधत ॥६५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे प्राकृतसर्गो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः

## कूर्म उवाच

स्वयम्भुवोऽपि वृत्तस्य कालसंख्या द्विजोत्तमाः । न शक्यते समाख्यातुं बहुवर्षैरपि स्वयम् ॥ १ ॥
कालसंख्या समासेन परार्द्धद्वयकल्पिता । स एव स्यात् परः कालस्तदन्ते सृज्यते पुनः ॥ २ ॥
निजेन तस्य मानेन चायुर्वर्षशतं स्मृतम् । तत्परार्द्धं तदर्द्धं वा परार्द्धमभिधीयते ॥ ३ ॥
काष्ठा पञ्चदश ख्याता निमेषा द्विजसत्तमाः । काष्ठात्रिंशत् कला त्रिंशत्कला मौहूर्त्तिकी गतिः ॥ ४ ॥
तावत्संख्यैरहोरात्रं मुहूर्त्तैर्मानुषं स्मृतम् । अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः ॥ ५ ॥
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे । अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ॥ ६ ॥
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् । चतुर्युगं द्वादशभिस्तद्विभागं निबोधत ॥ ७ ॥
चत्वार्याहुः सहस्राणि वर्षाणां तत् कृतं युगम् । तस्य तावच्छती संध्या संध्यांशश्च कृतस्य तु ॥ ८ ॥
त्रिशती द्विशती सन्ध्या तथा चैकशती क्रमात् । अंशकं षट्शतं तस्मात् कृतसन्ध्यांशकैर्विना ॥ ९ ॥
त्रिद्व्येकधा च साहस्रं विना सन्ध्यांशकेन तु । त्रेता द्वापर-तिष्याणां कालज्ञाने प्रकीर्तितम् ॥१०॥
एतद् द्वादशसाहस्रं साधिकं परिकल्पितम् । तदेकसप्ततिगुणं मनोरन्तरमुच्यते ॥११॥

ब्रह्मणो दिवसे विप्रा मनवश्च चतुर्दश । स्वायम्भुवादयः सर्वे ततः सावर्णिकादयः ॥१२॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता । पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ॥१३॥
मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै । व्याख्यातानि न सन्देहः कल्पे कल्पे न चैव हि ॥१४॥
ब्राह्ममेकमहः कल्पस्तावती रात्रिरिष्यते । चतुर्युगसहस्रन्तु कल्पमाहुर्मनीषिणः ॥१५॥
त्रीणि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः । ब्रह्मणो वत्सरस्तज्ज्ञैः कथितो वै द्विजोत्तमाः ।
स च कालः शतगुणः परार्द्धञ्चैव तद्विदुः ॥१६॥
तस्यान्ते सर्वसत्त्वानां स्वहेतौ प्रकृतौ लयः । तेनायं प्रोच्यते सद्भिः प्राकृतः प्रतिसंचरः ॥१७॥
ब्रह्मनारायणेशानां त्रयाणां प्रकृतौ लयः । प्रोच्यते कालयोगेन पुनरेव च सम्भवः ॥१८॥
एवं ब्रह्मा च भूतानि वासुदेवोऽपि शङ्करः । कालेनैव तु सृज्यन्ते स एव ग्रसते पुनः ॥१९॥
अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः । सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः ॥२०॥
ब्रह्माणो बहवो रुद्रा ह्यन्ये नारायणादयः । एको हि भगवानीशः कालःकविरिति श्रुतिः ॥२१॥
एकमत्र व्यतीतन्तु परार्द्धं ब्रह्मणो द्विजाः । साम्प्रतं वर्त्तते त्वर्द्धं तस्य कल्पोऽयमग्रजः ॥२२॥
योऽतीतः सोऽन्तिमः कल्पः पाद्म इत्युच्यते बुधैः । वाराहो वर्त्तते कल्पस्तस्य वक्ष्यामि विस्तरम् ॥२३॥

इति श्रीकौर्मे महापुराणे पूर्वभागे कालसंख्याकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

# षष्ठोऽध्यायः

## कूर्म उवाच

आसीदेकार्णवं घोरमविभागं तमोमयम् । शान्तवातादिकं सर्वं न प्राज्ञायत किंचन ॥ १ ॥
एकार्णवे तदा तस्मिन् नष्टे स्थावर-जङ्गमे । तदा समभवद् ब्रह्मा सहस्राक्षः सहस्रपात् ॥ २ ॥
सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः । ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा ॥ ३ ॥
इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति । ब्रह्मस्वरूपिणं देवं जगतः प्रभवाव्ययम् ॥ ४ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ता यस्मात् तेन नारायणः स्मृतः ॥ ५ ॥
तुल्यं युगसहस्रस्य नैशं कालमुपास्य सः । शर्वर्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात् ॥ ६ ॥
ततस्तु सलिले तस्मिन् विज्ञायान्तर्गतां महीम् । अनुमानात् तदुद्धारं कर्त्तुकामः प्रजापतिः ॥ ७ ॥
जलक्रीडासु रुचिरं वाराहं रूपमास्थितः । अधृष्यं मनसाप्यन्यैर्वाङ्मयं ब्रह्मसंज्ञितम् ॥ ८ ॥
पृथिव्युद्धरणार्थाय प्रविश्य च रसातलम् । दंष्ट्रयाभ्युज्जहारैनामात्माधारो धराधरः ॥ ९ ॥
दृष्ट्वा दंष्ट्राग्रविन्यस्तां पृथ्वीं प्रथितपौरुषम् । अस्तुवन् जनलोकस्थाः सिद्धा ब्रह्मर्षयो हरिम् ॥१०॥

## ऋषय ऊचुः

नमस्ते देवदेवाय ब्रह्मणे परमेष्ठिने । पुरुषाय पुराणाय शाश्वतायाजराय च ॥११॥
नमः स्वयम्भुवे तुभ्यं स्रष्ट्रे सर्वार्थवेदिने । नमो हिरण्यगर्भाय वेधसे परमात्मने ॥१२॥
नमस्ते वासुदेवाय विष्णवे विश्वयोनये । नारायणाय देवाय देवानां हितकारिणे ॥१३॥
नमोऽस्तु ते चतुर्वक्त्र-शार्ङ्ग-चक्रासिधारिणे । सर्वभूतात्मभूताय कूटस्थाय नमो नमः ॥१४॥
नमो वेदरहस्याय नमस्ते वेदयोनये । नमो बुद्धाय शुद्धाय नमस्ते ज्ञानरूपिणे ॥१५॥

नमोऽस्त्वानन्दरूपाय साक्षिणे जगतां नमः । अनन्तायाप्रमेयाय कार्याय कारणाय च ॥१६॥
नमस्ते पञ्चभूताय पञ्चभूतात्मने नमः । नमो मूलप्रकृतये मायारूपाय ते नमः ॥१७॥
नमोऽस्तु ते वराहाय नमस्ते मत्स्यरूपिणे । नमो योगाधिगम्याय नमः सङ्कर्षणाय ते ॥१८॥
नमस्त्रिमूर्त्तये तुभ्यं त्रिधाम्ने दिव्यतेजसे । नमः सिद्धाय पूज्याय गुणत्रयविभागिने ॥१९॥
नमोऽस्त्वादित्यरूपाय नमस्ते पद्मयोनये । नमोऽमूर्त्ताय मूर्ताय माधवाय नमो नमः ॥२०॥
त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् । पालयैतज्जगत् सर्वं त्राता त्वं शरणं गतिः ॥२१॥
इत्थं स भगवान् विष्णुः सनकाद्यैरभिष्टुतः । प्रसादमकरोत् तेषां वराहवपुरीश्वरः ॥२२॥
ततः स्वस्थानमानीय पृथिवीं पृथिवीपतिः । मुमोच रूपं मनसा धारयित्वा धराधरः ॥२३॥
तस्योपरि जलौघस्य महती नौरिव स्थिता । विततत्वाच्च देहस्य न मही याति संप्लवम् ॥२४॥
पृथिवीं स समीकृत्य पृथिव्यां सोऽचिनोद् गिरीन् । प्राक्सर्गदग्धानखिलान् ततः सर्गेऽदधन्मनः ॥२५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे पृथिव्युद्धारो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

# सप्तमोऽध्यायः

## कूर्म उवाच

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा । अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ १ ॥
तमो मोहो महामोहस्तामिस्रश्चान्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ २ ॥
पञ्चधाऽवस्थितः सर्गो ध्यायतः सोऽभिमानिनः । संवृतस्तमसा चैव बीजकुम्भवदावृतः ॥ ३ ॥
बहिरन्तश्चाप्रकाशःस्तब्धो निःसङ्ग एव च । मुख्या नगा इति प्रोक्ता मुख्यसर्गस्तु स स्मृतः ॥ ४ ॥
तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं प्रभुः । तस्याभिध्यायतः सर्गं तिर्यक्स्रोतोऽभ्यवर्त्तत ॥ ५ ॥
यस्मात् तिर्यक् प्रवृत्तः स तिर्यक्स्रोतस्ततः स्मृतः । पश्वादयस्ते विख्याता उत्पथग्राहिणो द्विजाः ॥ ६ ॥
तमप्यसाधकं ज्ञात्वा सर्गमन्यं ससर्ज ह । ऊर्द्ध्वस्रोत इति प्रोक्तो देवसर्गस्तु सात्त्विकः ॥ ७ ॥
ते सुखप्रीतिबहुला बहिरन्तस्त्वनावृताः । प्रकाशा बहिरन्तश्च स्वभावाद्देवसंज्ञिताः ॥ ८ ॥
ततोऽभिध्यायतस्तस्य सत्याभिध्यायिनस्तदा । प्रादुरासीत् तदा व्यक्तादर्वाक्स्रोतस्तु साधकः ॥ ९ ॥
तत्र प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः । दुःखोत्कटाः सत्त्वयुता मनुष्याः परिकीर्त्तिताः ॥१०॥
तं दृष्ट्वा चापरं सर्गममन्यद्भगवानजः । तस्याभिध्यायतः सर्गं सर्गो भूतादिकोऽभवत् ॥११॥
ते परिग्रहिणः सर्वे संविभागरताः पुनः । खादिनश्चाप्यशीलाश्च भूताद्याः परिकीर्त्तिताः ॥१२॥
इत्येते पञ्च कथिताः सर्गा वै द्विजपुङ्गवाः । प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ॥१३॥
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः । वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥१४॥
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः । मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥१५॥
तिर्यक्स्रोतस्तु यः प्रोक्तस्तिर्यग्योन्यः स पञ्चमः । तथोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ॥१६॥
ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः । अष्टमो भौतिकः सर्गो भूतादीनां प्रकीर्त्तितः ॥१७॥
नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे । प्राकृतास्तु त्रयः पूर्वे सर्गास्ते बुद्धिपूर्वकाः ॥१८॥
बुद्धिपूर्वं प्रवर्त्तन्ते मुख्याद्या मुनिपुङ्गवाः । अग्रे ससर्ज वै ब्रह्मा मानसानात्मनः समान् ॥१९॥
सनकं सनातनञ्चैव तथैव च सनन्दनम् । ऋभुं सनत्कुमारञ्च पूर्वमेव प्रजापतिः ॥२०॥

पञ्चैते योगिनो विप्राः परं वैराग्यमाश्रिताः । ईश्वरासक्तमनसो न सृष्टौ दधिरे मतिम् ॥२१॥
तेष्वेवं निरपेक्षेषु लोकसृष्टौ प्रजापतिः । मुमोह मायया सद्यो मायिनः परमेष्ठिनः ॥२२॥
सम्बोधयामास च तं जगन्मायो महामुनिः । नारायणो महायोगी योगिचित्तानुरञ्जनः ॥२३॥
बोधितस्तेन विश्वात्मा तताप परमं तपः । स तप्यमानो भगवान् न किञ्चित् प्रत्यपद्यत ॥२४॥
ततो दीर्घेण कालेन दुःखात् क्रोधोऽभ्यजायत । क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥२५॥
भृकुटीकुटिलात् तस्य ललाटात् परमेष्ठिनः । समुत्पन्नो महादेवः शरण्यो नीललोहितः ॥२६॥
स एव भगवानीशस्तेजोराशिः सनातनः । यं प्रपश्यन्ति विद्वांसः स्वात्मस्थं परमेश्वरम् ॥२७॥
ओङ्कारं समनुस्मृत्य प्रणम्य च कृताञ्जलिः । तमाह भगवान् ब्रह्मा सृजेमा विविधाः प्रजाः ॥२८॥
निशम्य भगवद्वाक्यं शङ्करो धर्मवाहनः । आत्मना सदृशान् रुद्रान् ससर्ज मनसा शिवः ।
कपर्दिनो निरातङ्कांस्त्रिनेत्रान् नीललोहितान् ॥२९॥
तं प्राह भगवान् ब्रह्मा जन्ममृत्युयुताः प्रजाः । सृजेति सोऽब्रवीदीशो नाहं मृत्युजरान्विताः ॥३०॥
प्रजाः स्रक्ष्ये जगन्नाथ सृज त्वमशुभाः प्रजाः । निवार्य च तदा रुद्रं ससर्ज कमलोद्भवः ॥
स्थानाभिमानिनः सर्वान् गदतस्तान् निबोधत ॥३१॥
आपोऽग्निरन्तरीक्षञ्च द्यौर्वायुः पृथिवी तथा । नद्यः समुद्राः शैलाश्च वृक्षा वीरुध एव च ॥३२॥
लवाः काष्ठाः कलाश्चैव मुहूर्त्ता दिवसाः क्षपाः । अर्द्धमासाश्च मासाश्च अयनाब्दयुगादयः ।
स्थानाभिमानिनः सृष्ट्वा साधकानसृजत् पुनः ॥३३॥
मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् । दक्षमत्रिं वसिष्ठञ्च धर्मं सङ्कल्पमेव च ॥३४॥
प्राणाद् ब्रह्माऽसृजद्दक्षं चक्षुर्भ्याञ्च मरीचिकम् । शिरसोऽङ्गिरसं देवो हृदयाद् भृगुमेव च ॥३५॥
नेत्राभ्यामत्रिनामानं धर्मञ्च व्यवसायतः । सङ्कल्पञ्चैव सङ्कल्पात् सर्वलोकपितामहः ॥३६॥
पुलस्त्यञ्च तथोदानाद् व्यानाच्च पुलहं मुनिम् । अपानात् क्रतुमव्यग्रं समानाच्च वसिष्ठकम् ॥३७॥
इत्येते ब्रह्मणा सृष्टाः साधका गृहमेधिनः । आस्थाय मानवं रूपं धर्मस्तैः सम्प्रवर्तितः ॥३८॥
ततो देवासुरपितॄन् मनुष्यांश्च चतुष्टयम् । सिसृक्षुर्भगवानीशः स्वमात्मानमयोजयत् ॥३९॥
युक्तात्मनस्तमोमात्रा ह्युद्रिक्ताभूत् प्रजापतेः । ततोऽस्य जघनात् पूर्वमसुरा जज्ञिरे सुताः ॥४०॥
उत्ससर्जासुरान् सृष्ट्वा तां तनुं पुरुषोत्तमः । सा चोत्सृष्टा तनुस्तेन सद्यो रात्रिरजायत ।
सा तमोबहुला यस्मात् प्रजास्तस्यां स्वपन्त्यतः ॥४१॥
सत्त्वमात्रात्मिकां देवस्तनुमन्यां गृहीतवान् । ततोऽस्य मुखतो देवा दीव्यतः सम्प्रजज्ञिरे ॥४२॥
त्यक्ता सापि तनुस्तेन सत्त्वप्रायमभूद्दिनम् । तस्मादहर्धर्मयुक्ता देवताः समुपासते ॥४३॥
सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् । पितृवन्मन्यमानस्य पितरः सम्प्रजज्ञिरे ॥४४॥
उत्ससर्ज पितॄन् सृष्ट्वा ततस्तामपि विश्वदृक् । सापविद्धा तनुस्तेन सद्यः सन्ध्या व्यजायत ॥४५॥
तस्मादहर्देवतानां रात्रिः स्याद्देवविद्विषाम् । तयोर्मध्ये पितृणान्तु मूर्त्तिः सन्ध्या गरीयसी ॥४६॥
तस्माद्देवासुराः सर्वे मुनयो मानवास्तदा । उपासते सदा युक्ता रात्र्यह्नोर्मध्यमां तनुम् ॥४७॥
रजोमात्रात्मिकां ब्रह्मा तनुमन्यां ततोऽसृजत् । ततोऽस्य जज्ञिरे पुत्रा मनुष्या रजसावृताः ॥४८॥
तामथाऽशु स तत्याज तनूं सद्यः प्रजापतिः । ज्योत्स्ना सा चाभवद्विप्राः प्राक्सन्ध्या याभिधीयते ॥४९॥
ततः स भगवान् ब्रह्मा सम्प्राप्य द्विजपुङ्गवाः । मूर्त्तिं तमोरजःप्रायां पुनरेवाभ्यपूजयत् ॥५०॥
अन्धकारे क्षुधाविष्टा राक्षसास्तस्य जज्ञिरे । पुत्रास्तमोरजःप्राया बलिनस्ते निशाचराः ॥५१॥
सर्पा यक्षास्तथा भूता गन्धर्वाः सम्प्रजज्ञिरे । रजस्तमोभ्यामाविष्टांस्ततोऽन्यानसृजत् प्रभुः ॥५२॥

वयांसि वयसः सृष्ट्वा अवीन् वै वक्षसोऽसृजत् । मुखतोऽजान् ससर्जान्यान् उदराद् गाश्च निर्ममे ।।५३।।
पद्भ्याश्चाश्वान् समातङ्गान् रासभान् गवयान् मृगान् । उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्याश्च जातयः।।५४।।
ओषध्यः फलमूलानि रोमभ्यस्तस्य जज्ञिरे । गायत्रञ्च ऋचश्चैव त्रिवृत्स्तोमं रथन्तरम् ।।५५।।
अग्निष्टोमञ्च यज्ञानां निर्ममे प्रथमान्मुखात् । यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा ।।५६।।
बृहत्साम तथोक्थञ्च दक्षिणादसृजन्मुखात् । सामानि जागतं छन्दः स्तोमं सप्तदशं तथा ।।५७।।
वैरूपमतिरात्रञ्च पश्चिमादसृजन्मुखात् । एकविंशमथर्वाणमाप्तोर्यामाणमेव च ।।५८।।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् । उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।।५९।।
ब्रह्मणो हि प्रजासर्गं सृजतस्तु प्रजापतेः । सृष्ट्वा चतुष्टयं सर्गं देवर्षिपितृमानुषम् ।।६०।।
ततोऽसृजच्च भूतानि स्थावराणि चराणि च । यक्षान् पिशाचान् गन्धर्वांस्तथैवाप्सरसः शुभाः ।।६१।।
नर-किन्नर-रक्षांसि वयः पशुमृगोरगान् । अव्ययञ्च व्ययञ्चैव द्वयं स्थावरजङ्गमम् ।।६२।।
तेषां ये यानि कर्माणि प्राक् सृष्टेः प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ।।६३।।
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात् तत्तस्य रोचते ।।६४।।
महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्त्तिषु । विनियोगञ्च भूतानां धातैव व्यदधात् स्वयम् ।।६५।।
नामरूपञ्च भूतानां प्राकृतानां प्रपञ्चनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ।।६६।।
आर्षाणि चैव नामानि याश्च वेदेषु सृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ।।६७।।
यावन्ति प्रतिलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ।।६८।।

इति श्रीकौर्मे महापुराणे पूर्वभागे सर्गकथनं नाम सप्तमोऽध्यायः ।।७।।

---

## अष्टमोऽध्यायः

### कूर्म उवाच

एवं भूतानि सृष्टानि स्थावराणि चराणि च । यदास्य ताः प्रजाः सृष्टा न व्यवर्द्धन्त धीमतः ।। १ ।।
तमोमात्रावृतो ब्रह्मा तदाशोचत दुःखितः । ततः स विदधे बुद्धिमर्थनिश्चयगामिनीम् ।। २ ।।
अथात्मनि समद्राक्षीत् तमोमात्रां नियामिकाम् । रजः सत्त्वञ्च संवृत्य वर्त्तमानां स्वधर्मतः ।। ३ ।।
तमस्तु व्यनुदत् पश्चाद्रजः सत्त्वेन संयुतः । तत् तमः प्रतिनुन्नं वै मिथुनं समजायत ।। ४ ।।
अधर्माचरणो विप्रा हिंसा चाशुभलक्षणा । स्वां तनुं स ततो ब्रह्मा तामपोहत भास्वराम् ।। ५ ।।
द्विधाकरोत् पुनर्देहमर्द्धेन पुरुषोऽभवत् । अर्द्धेन नारी पुरुषो विराजमसृजत् प्रभुः ।। ६ ।।
नारीञ्च शतरूपाख्यां योगिनीं ससृजे शुभाम् । सा दिवं पृथिवीञ्चैव महिम्ना व्याप्य संस्थिता ।। ७ ।।
योगैश्वर्यबलोपेता ज्ञान - विज्ञानसंयुता । योऽभवत् पुरुषात् पुत्रो विराडव्यक्तजन्मनः ।। ८ ।।
स्वायम्भुवो मनुर्देवः सोऽभवत् पुरुषो मुनिः । सा देवी शतरूपाख्या तपः कृत्वा सुदुश्चरम् ।। ९ ।।
भर्त्तारं दीप्तयशसं मनुमेवान्वपद्यत । तस्माच्च शतरूपा सा पुत्रद्वयमसूयत ।।१०।।
प्रियव्रतोत्तानपादौ कन्याद्वयमनुत्तमम् । तयोः प्रसूतिं दक्षाय मनुः कन्यां ददौ पुनः ।।११।।
प्रजापतिरथाकूतिं मानसो जगृहे रुचिः । आकूत्यां मिथुनं जज्ञे मानसस्य रुचेः शुभम् ।।१२।।
यज्ञश्च दक्षिणा चैव याभ्यां संवर्धितं जगत् । यज्ञस्य दक्षिणायाञ्च पुत्रा द्वादश जज्ञिरे ।।१३।।
यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे । प्रसूत्याञ्च तथा दक्षश्चतस्रो विंशतिं तथा ।।१४।।

ससर्ज कन्या नामानि तासां सम्यङ्निबोधत । श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥१५॥
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी । पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः शुभाः ॥१६॥
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः । ख्यातिः सत्यथ सम्भूतिः स्मृतिः प्रीतिः क्षमा तथा ॥१७॥
सन्नतिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा । भृगुर्भवो मरीचिश्च तथा चैवाङ्गिरा मुनिः ॥१८॥
पुलस्त्यः पुलहश्चैव क्रतुः परमधर्मवित् । अत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम् ॥१९॥
ख्यात्याद्या जगृहुः कन्या मुनयो ज्ञानसत्तमाः । श्रद्धाया आत्मजः कामो दर्पो लक्ष्मीसुतः स्मृतः ॥२०॥
धृत्यास्तु नियमः पुत्रस्तुष्ट्याः सन्तोष उच्यते । पुष्ट्या लाभः सुतश्चापि मेधापुत्रः शमस्तथा ॥२१॥
क्रियायाश्चाभवत् पुत्रो दण्डश्च नय एव च । बुद्ध्या बोधः सुतस्तद्वदप्रमादोऽप्यजायत ॥२२॥
लज्जाया विनयः पुत्रो वपुषो व्यवसायकः । क्षेमः शान्तिसुतश्चापि सुखं सिद्धेरजायत ॥२३॥
यशः कीर्त्तिसुतस्तद्वदित्येत धर्मसूनवः । कामस्य हर्षः पुत्रोऽभूद्देवानन्दोऽप्यजायत ॥२४॥
इत्येष वै सुखोदर्कः सर्गो धर्मस्य कीर्त्तितः । जज्ञे हिंसा त्वधर्माद्वै निकृतिञ्चानृतं सुतम् ॥२५॥
निकृत्यनृतयोर्जज्ञे भयं नरकमेव च । माया च वेदना चैव मिथुनन्त्विदमेतयोः ॥२६॥
भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् । वेदना च सुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ॥२७॥
मृत्योर्व्याधिर्जराशोकौ तृष्णा क्रोधश्च जज्ञिरे । दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्मलक्षणाः ॥२८॥
नैषां भार्यास्ति पुत्रो वा सर्वे ते ह्यूर्ध्वरेतसः । इत्येष तामसः सर्गो जज्ञे धर्मनियामकः ।
संक्षेपेण मया प्रोक्ता विसृष्टिर्मुनिपुङ्गवाः ॥२९॥

इति श्रीकौर्मे महापुराणे पूर्वभागे मुख्यादिसर्गकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः

## सूत उवाच

एतच्छ्रुत्वा तु वचनं नारदाद्या महर्षयः । प्रणम्य वरदं विष्णुं पप्रच्छुः संशयान्विताः ॥ १ ॥

## ऋषय ऊचुः

कथितो भवता सर्गो मुख्यादीनां जनार्दन । इदानीं संशयञ्चेममस्माकं छेत्तुमर्हसि ॥ २ ॥
कथं स भगवानीशः पूर्वजोऽपि पिनाकधृक् । पुत्रत्वमगमच्छंभुर्ब्रह्मणोऽव्यक्तजन्मनः ॥ ३ ॥
कथञ्च भगवान् जज्ञे ब्रह्मा कमलसम्भवः । अण्डतो जगतामीशस्तन्नो वक्तुमिहार्हसि ॥ ४ ॥

## कूर्म उवाच

शृणुध्वमृषयः सर्वे शङ्करस्यामितौजसः । पुत्रत्वं ब्रह्मणस्तस्य पद्मयोनित्वमेव च ॥ ५ ॥
अतीतकल्पावसाने तमोभूतं जगत्त्रयम् । आसीदेकार्णवं घोरं न देवाद्या न चर्षयः ॥ ६ ॥
तत्र नारायणो देवो निर्जने निरुपप्लवे । आश्रित्य शेषशयनं सुष्वाप पुरुषोत्तमः ॥ ७ ॥
सहस्रशीर्षा भूत्वा स सहस्राक्षः सहस्रपात् । सहस्रबाहुः सर्वज्ञश्चिन्त्यमानो मनीषिभिः ॥ ८ ॥
पीतवासा विशालाक्षो नीलजीमूतसन्निभः । महाविभूतिर्योगात्मा योगिनान्तु दयापरः ॥ ९ ॥
कदाचित् तस्य सुप्तस्य लीलार्थं दिव्यमद्भुतम् । त्रैलोक्यसारं विमलं नाभ्यां पङ्कजमुद्बभौ ॥१०॥

शतयोजनविस्तीर्णं तरुणादित्यसन्निभम् । दिव्यगन्धमयं पुण्यं कर्णिका-केसरान्वितम् ॥११॥
तस्यैवं सुचिरं कालं वर्तमानस्य शार्ङ्गिणः । हिरण्यगर्भो भगवांस्तं देशमुपचक्रमे ॥१२॥
स तं करेण विश्वात्मा समुत्थाप्य सनातनम् । प्रोवाच मधुरं वाक्यं मायया तस्य मोहितः ॥१३॥
अस्मिन्नेकार्णवे घोरे निर्जने तमसावृते । एकाकी को भवाञ्छेते ब्रूहि मे पुरुषर्षभ ॥१४॥
तस्य तद्वचनं श्रुत्वा विहस्य गरुडध्वजः । उवाच देवं ब्रह्माणं मेघगम्भीरनिस्वनः ॥१५॥
भो भो नारायणं देवं लोकानां प्रभवाव्ययम् । महायोगीश्वरं मां वै जानीहि पुरुषोत्तमम् ॥१६॥
मयि पश्य जगत् कृत्स्नं त्वाञ्च लोकपितामहम् । सपर्वतमहाद्वीपं समुद्रैः सप्तभिर्वृतम् ॥१७॥
एवमाभाष्य विश्वात्मा प्रोवाच पुरुषं हरिः । जानन्नपि महायोगी को भवानिति वेधसम् ॥१८॥
ततः प्रहस्य भगवान् ब्रह्मा वेदनिधिः प्रभुः । प्रत्युवाचाम्बुजाभाक्षं सस्मितं श्लक्ष्णया गिरा ॥१९॥
अहं धाता विधाता च स्वयम्भूः प्रपितामहः । मय्येव संस्थितं विश्वं ब्रह्माहं विश्वतोमुखः ॥२०॥
श्रुत्वा वाचं स भगवान् विष्णुः सत्यपराक्रमः । अनुज्ञाप्याथ योगेन प्रविष्टो ब्रह्मणस्तनुम् ॥२१॥
त्रैलोक्यमेतत् सकलं सदेवासुरमानुषम् । उदरे तस्य देवस्य दृष्ट्वा विस्मयमागतः ॥२२॥
तदास्य वक्त्रान्निष्क्रम्य पन्नगेन्द्रनिकेतनः । अथापि भगवान् विष्णुः पितामहमथाब्रवीत् ॥२३॥
भवानप्येवमेवाद्य शाश्वतं हि ममोदरम् । प्रविश्य लोकान् पश्यैतान् विचित्रान् पुरुषर्षभ ॥२४॥
ततः प्रह्लादिनीं वाणीं श्रुत्वा तस्याभिनन्द्य च । श्रीपतेरुदरं भूयः प्रविवेश कुशध्वजः ॥२५॥
तानेव लोकान् गर्भस्थानपश्यत् सत्यविक्रमः । पर्यटित्वाथ देवस्य ददृशेऽन्तं न वै हरेः ॥२६॥
ततो द्वाराणि सर्वाणि पिहितानि महात्मना । जनार्दनेन ब्रह्मासौ नाभ्यां द्वारमविन्दत ॥२७॥
तत्र योगबलेनासौ प्रविश्य कनकाण्डजः । उज्जहारात्मनो रूपं पुष्कराच्चतुराननः ॥२८॥
विरराजारविन्दस्थः पद्मगर्भसमद्युतिः । ब्रह्मा स्वयम्भूर्भगवान् जगद्योनिः पितामहः ॥२९॥
स मन्यमानो विश्वेशमात्मानं परमं पदम् । प्रोवाच विष्णुं पुरुषं मेघगम्भीरया गिरा ॥३०॥
कृतं किं भवतेदानीमात्मनो जयकाङ्क्षया । एकोऽहं प्रबलो नान्यो मां वै कोऽभिभविष्यति ॥३१॥
श्रुत्वा नारायणो वाक्यं ब्रह्मणोक्तमतन्द्रितः । सान्त्वपूर्वमिदं वाक्यं बभाषे मधुरं हरिः ॥३२॥
भवान् धाता विधाता च स्वयम्भूः प्रपितामहः । न मात्सर्याभियोगेन द्वाराणि पिहितानि मे ॥३३॥
किन्तु लीलार्थमेवैतन्न त्वां बाधितुमिच्छया । को हि बाधितुमन्विच्छेद्देवदेवं पितामहम् ॥३४॥
न तेऽन्यथावगन्तव्यं मान्यो मे सर्वथा भवान् । सर्वं क्षमस्व कल्याण यन्मयापकृतं तव ॥३५॥
अस्माच्च कारणाद् ब्रह्मन् पुत्रो भवतु मे भवान् । पद्मयोनिरिति ख्यातो मत्प्रियार्थं जगन्मय ॥३६॥
ततः स भगवान् देवो वरं दत्वा किरीटिने । प्रहर्षमतुलं गत्वा पुनर्विष्णुमभाषत ॥३७॥
भवान् सर्वात्मकोऽनन्तः सर्वेषां परमेश्वरः । सर्वभूतान्तरात्मा वै परं ब्रह्म सनातनम् ॥३८॥
अहं वै सर्वलोकानामात्मा देवो महेश्वरः । मन्मयं सर्वमेवेदं ब्रह्माहं पुरुषः परः ॥३९॥
नावाभ्यां विद्यते ह्यन्यो लोकानां परमेश्वरः । एका मूर्त्तिर्द्विधा भिन्ना नारायण पितामहौ ॥४०॥
तेनैवमुक्तो ब्रह्माणं वासुदेवोऽब्रवीदिदम् । इयं प्रतिज्ञा भवतो विनाशाय भविष्यति ॥४१॥
किं न पश्यसि योगेन ब्रह्माधिपतिमव्ययम् । प्रधानपुरुषेशानं वेदाहं परमेश्वरम् ॥४२॥
यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम् । अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥४३॥
ततः क्रुद्धोऽम्बुजाभाक्षं ब्रह्मा प्रोवाच केशवम् । भगवन् नूनमात्मानं वेद्मि तत् परमाक्षरम् ॥४४॥
ब्रह्माणं जगतामेकमात्मानं परमं पदम् । नावाभ्यां विद्यते त्वन्यो लोकानां परमेश्वरः ॥४५॥
सन्त्यज्य निद्रां विपुलां स्वमात्मानं विलोकय । तस्य तत् क्रोधजं वाक्यं श्रुत्वा विष्णुरभाषत ॥४६॥

मा मैवं वद कल्याण परीवादं महात्मनः । न मेऽस्त्यविदितं ब्रह्मन् नान्यथाहं वदामि ते ॥४७॥
किन्तु मोहयति ब्रह्मन् भवन्तं पारमेश्वरी । मायाऽशेषविशेषाणां हेतुरात्मसमुद्भवा ॥४८॥
एतावदुक्त्वा भगवान् विष्णुस्तूष्णीं बभूव ह । ज्ञात्वा तत् परमं तत्त्वं स्वमात्मानं सुरेश्वरः ॥४९॥
ततो ह्यपरिमेयात्मा भूतानां परमेश्वरः । प्रसादं ब्रह्मणे कर्त्तुं प्रादुरासीत् ततो हरः ॥५०॥
ललाटनयनो देवो जटामण्डलमण्डितः । त्रिशूलपाणिर्भगवांस्तेजसां परमो निधिः ॥५१॥
दिव्यविलासग्रथितां ग्रहैः सार्केन्दुतारकैः । मालामत्यद्भुताकारां धारयन् पादलम्बिनीम् ॥५२॥
तं दृष्ट्वा देवमीशानं ब्रह्मा लोकपितामहः । मोहितो माययात्यर्थं पीतवाससमब्रवीत् ॥५३॥
क एष पुरुषो नीलः शूलपाणिस्त्रिलोचनः । तेजोराशिरमेयात्मा समायाति जनार्दन ॥५४॥
तस्य तद्वचनं श्रुत्वा विष्णुर्दानवमर्दनः । अपश्यदीश्वरं देवं ज्वलन्तं विमलेऽम्भसि ॥५५॥
ज्ञात्वा तं परमं भावमैश्वरं ब्रह्मभावनः । प्रोवाचोत्थाय भगवान् देवदेवं पितामहम् ॥५६॥
अयं देवो महादेवः स्वयंज्योतिः सनातनः । अनादिनिधनोऽचिन्त्यो लोकानामीश्वरो महान् ॥५७॥
शङ्करः शम्भुरीशानः सर्वात्मा परमेश्वरः । भूतानामधिपो योगी महेशो विमलः शिवः ॥५८॥
एष धाता विधाता च प्रधानपुरुषेश्वरः । यं प्रपश्यन्ति यतयो ब्रह्मभावेण भाविताः ॥५९॥
सृजत्येष जगत् कृत्स्नं पाति संहरते तथा । कालो भूत्वा महादेवः केवलो निष्कलः शिवः ॥६०॥
ब्रह्माणं विदधे पूर्वं भवन्तं यः सनातनः । वेदांश्च प्रददौ तुभ्यं सोऽयमायाति शङ्करः ॥६१॥
अस्यैव चापरां मूर्तिं विश्वयोनिं सनातनीम् । वासुदेवाभिधानं मामवेहि प्रपितामहः ॥६२॥
किं न पश्यसि योगेशं ब्रह्माधिपतिमव्ययम् । दिव्यं भवतु ते चक्षुर्येन द्रक्ष्यसि तत्परम् ॥६३॥
लब्ध्वा चैवं तदा चक्षुर्विष्णोर्लोकपितामहः । बुबुधे परमेशानं पुरतः समवस्थितम् ॥६४॥
स लब्ध्वा परमं ज्ञानमैश्वरं प्रपितामहः । प्रपेदे शरणं देवं तमेव पितरं शिवम् ॥६५॥
ओङ्कारं समनुस्मृत्य संस्तभ्यात्मानमात्मना । अथर्वशिरसा देवं तुष्टाव च कृताञ्जलिः ॥६६॥
संस्तुतस्तेन भगवान् ब्रह्मणा परमेश्वरः । अवाप परमां प्रीतिं व्याजहार स्मयन्निव ॥६७॥
मत्समस्त्वं न सन्देहो वत्स भक्तश्च मे भवान् । मयैवोत्पादितः पूर्वं लोकसृष्ट्यर्थमव्ययः ॥६८॥
त्वमात्मा ह्यादिपुरुषो मम देहसमुद्भवः । वरं वरय विश्वात्मन् वरदोऽहं तवानघ ॥६९॥
स देवदेववचनं निशम्य कमलोद्भवः । निरीक्ष्य विष्णुं पुरुषं प्रणम्योवाच शङ्करम् ॥७०॥
भगवन् भूतभव्येश महादेवाम्बिकापते । त्वामेव पुत्रमिच्छामि त्वया वा सदृशं सुतम् ॥७१॥
मोहितोऽस्मि महादेव मायया सूक्ष्मया त्वया । न जाने परमं भावं याथातथ्येन ते शिव ॥७२॥
त्वमेव देव भक्तानां माता भ्राता पिता सुहृत् । प्रसीद तव पादाब्जं नमामि शरणागतः ॥७३॥
स तस्य वचनं श्रुत्वा जगन्नाथो वृषध्वजः । व्याजहार तदा पुत्रं समालोक्य जनार्दनम् ॥७४॥
यदर्थितं भगवता तत् करिष्यामि पुत्रक । विज्ञानमैश्वरं दिव्यमुत्पत्स्यति तवानघ ॥७५॥
त्वमेव सर्वभूतानामादिकर्त्ता नियोजितः । कुरुष्व तेषु देवेश मायां लोकपितामह ॥७६॥
एष नारायणोऽनन्तो ममैव परमा तनुः । भविष्यति तवेशान योगक्षेमवहो हरिः ॥७७॥
एवं व्याहृत्य हस्ताभ्यां प्रीतः स परमेश्वरः । संस्पृश्य देवं ब्रह्माणं हरिं वचनमब्रवीत् ॥७८॥
तुष्टोऽस्मि सर्वथाहं ते भक्तस्त्वञ्च जगन्मय । वरं वृणीष्व न ह्यावां विभिन्नौ परमार्थतः ॥७९॥
श्रुत्वाथ देववचनं विष्णुर्विश्वजगन्मयः । प्राह प्रसन्नया वाचा समालोक्य च तन्मुखम् ॥८०॥
एष एव वरः श्लाघ्यो यदहं परमेश्वरम् । पश्यामि परमात्मानं भक्तिर्भवतु मे त्वयि ॥८१॥
तथेत्युक्त्वा महादेवः पुनर्विष्णुमभाषत । भवान् सर्वस्य कार्यस्य कर्त्ताहमधिदैवतम् ॥८२॥
त्वन्मयं मन्मयञ्चैव सर्वमेतन्न संशयः । भवान् सोमस्त्वहं सूर्यो भवान् रात्रिरहं दिनम् ॥८३॥

भवान् प्रकृतिरव्यक्तमहं पुरुष एव च । भवान् ज्ञानमहं ज्ञाता भवान् मायाहमीश्वरः ।
भवान् विद्यात्मिका शक्तिः शक्तिमानहमीश्वरः ॥८४॥
योऽहं स निष्कलो देवः सोऽसि नारायणः प्रभुः । एकीभावेन पश्यन्ति योगिनो ब्रह्मवादिनः ॥८५॥
त्वामनाश्रित्य विश्वात्मन् न योगी मामुपैष्यति । पालयैतजगत् कृत्स्नं सदेवासुर - मानुषम् ॥८६॥
इतीदमुक्त्वा भगवाननादिः स्वमायया मोहितभूतभेदः ।
जगाम जन्मर्द्धिविनाशहीनं धामैकमव्यक्तमनन्तशक्तिः ॥८७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे पद्मोद्भवप्रादुर्भावो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः

### कूर्म उवाच

गते महेश्वरे देवे भूय एव पितामहः । तदेव सुमहत् पद्मं भेजे नाभिसमुत्थितम् ॥ १ ॥
अथ दीर्घेण कालेन तत्राप्रतिमपौरुषौ । महासुरौ समायातौ भ्रातरौ मधु-कैटभौ ॥ २ ॥
क्रोधेन महताविष्टौ महापर्वतविग्रहौ । कर्णान्तरसमुद्भूतौ देवदेवस्य शार्ङ्गिणः ॥ ३ ॥
तावागतौ समीक्ष्याह नारायणमजो विभुः । त्रैलोक्यकण्टकावेतावसुरौ हन्तुमर्हसि ॥ ४ ॥
तदस्य वचनं श्रुत्वा हरिर्नारायणः प्रभुः । आज्ञापयामास तयोर्वधार्थं पुरुषावुभौ ॥ ५ ॥
तदाज्ञया महद्युद्धं तयोस्ताभ्यामभूद्द्विजाः । व्यजयत् कैटभं जिष्णुर्विष्णुश्च व्यजयन्मधुम् ॥ ६ ॥
ततः पद्मासनासीनं जगन्नाथः पितामहम् । बभाषे मधुरं वाक्यं स्नेहाविष्टमना हरिः ॥ ७ ॥
अस्मान्मयोह्यमानस्त्वं पद्मादवतर प्रभो । नाहं भवन्तं शक्नोमि वोढुं तेजोमयं गुरुम् ॥ ८ ॥
ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना ॥ ९ ॥
सह तेन तयाविश्य शङ्ख चक्र-गदाधरः । ब्रह्मा नारायणाख्योऽसौ सुष्वाप सलिले तदा ॥१०॥
सोऽनुभूय चिरं कालमानन्दं परमात्मनः । अनाद्यनन्तमद्वैतं स्वात्मानं ब्रह्मसंज्ञितम् ॥११॥
ततः प्रभाते योगात्मा भूत्वा देवश्चतुर्मुखः । ससर्ज सृष्टिं तद्रूपां वैष्णवं भावमाश्रितः ॥१२॥
पुरस्तादसृद्देवः सनन्दं सनकं तथा । ऋभुं सनत्कुमारञ्च पूर्वजं तं सनातनम् ॥१३॥
ते द्वन्द्वमोहनिर्मुक्ताः परं वैराग्यमास्थिता । विदित्वा परमं भावं ज्ञाने विदधिरे मतिम् ॥१४॥
तेष्वेवं निरपेक्षेषु लोकसृष्टौ पितामहः । बभूव नष्टचेता वै मायया परमेष्ठिनः ॥१५॥
ततः पुराणपुरुषो जगन्मूर्त्तिः सनातनः । व्याजहारात्मनः पुत्रं मोहनाशाय पद्मजम् ॥१६॥

### विष्णुरुवाच

कच्चिन्नु विस्मृतो देवः शूलपाणिः सनातनः । यदुक्तो वै पुरा शम्भुः पुत्रत्वे भव शङ्कर ॥१७॥
अवाप्य संज्ञां गोविन्दात् पद्मयोनिः पितामहः । प्रजाः स्रष्टुमनास्तेपे तपः परमदुश्चरम् ॥१८॥
तस्यैवं तप्यमानस्य न किञ्चित् समवर्त्तत । ततो दीर्घेण कालेन दुःखात् क्रोधोऽभ्यजायत॥१९॥
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः । ततस्तेभ्योऽश्रुबिन्दुभ्यो भूताः प्रेतास्तदाभवन्॥२०॥
सर्वांस्तानग्रतो दृष्ट्वा ब्रह्मात्मानमनिन्दत । जहौ प्राणांश्च भगवान् क्रोधाविष्टः प्रजापतिः॥२१॥

तदा प्राणमयो रुद्रः प्रादुरासीत् प्रभोर्मुखात् । सहस्रादित्यसङ्काशो युगान्तदहनोपमः ॥२२॥
रुरोद सुस्वरं घोरं देवदेवः स्वयं शिवः । रोदमानं ततो ब्रह्मा मा रोदीरित्यभाषत ॥२३॥
रोदनाद्रुद्र इत्येवं लोके ख्यातिं गमिष्यसि । अन्यानि सप्त नामानि पत्नीः पुत्रांश्च शाश्वतान् ॥२४॥
स्थानानि तेषामष्टानां ददौ लोकपितामहः । भवः शर्वस्तथेशानः पशूनां पतिरेव च ।
भीमश्चोग्रो महादेवस्तानि नामानि सप्त वै ॥२५॥
सूर्यो जलं मही वह्निर्वायुराकाशमेव च । दीक्षितो ब्राह्मणश्चन्द्र इत्येता अष्ट मूर्त्तयः ॥२६॥
स्थानेष्वेतेषु ये रुद्रान् ध्यायन्ति प्रणमन्ति च । तेषामष्टतनुर्देवो ददाति परमं पदम् ॥२७॥
सुवर्चला तथैवोमा विकेशी च शिवा तथा । स्वाहा दिशश्च दीक्षा च रोहिणी चेति पत्नयः ॥२८॥
शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः । स्कन्दःसर्गोऽथ संतानो बुधश्चैषां सुताःस्मृताः ॥२९॥
एवम्प्रकारो भगवान् देवदेवो महेश्वरः । प्रजा धर्मञ्च कामञ्च त्यक्त्वा वैराग्यमाश्रितः ॥३०॥
आत्मन्याधाय चात्मानमैश्वरं भावमास्थितः । पीत्वा तदक्षरं ब्रह्म शाश्वतं परमामृतम् ॥३१॥
प्रजाःसृजेति चादिष्टो ब्रह्मणा नीललोहितः । स्वात्मना सदृशान् रुद्रान् ससर्ज मनसा शिवः ॥३२॥
कपर्द्दिनो निरातङ्कान् नीलकण्ठान् पिनाकिनः । त्रिशूलहस्तानुद्रिक्तान् सदानन्दांस्त्रिलोचनान् ॥३३॥
जरामरणनिर्मुक्तान् महावृषभवाहनान् । वीतरागांश्च सर्वज्ञान् कोटिकोटिशतान् प्रभुः ॥३४॥
तान् दृष्ट्वा विविधान् रुद्रान् निर्मलान् नीललोहितान् । जरामरणनिर्मुक्तान् व्याजहार हरं गुरुः ॥३५॥
मा स्राक्षीरीदृशीर्देव प्रजा मृत्युविवर्जिताः । अन्याः सृजस्व भूतेश जन्ममृत्युसमन्विताः ॥३६॥
ततस्तमाह भगवान् कपर्दी कामशासनः । नास्ति मे तादृशः सर्गः सृज त्वविविधाः प्रजाः ॥३७॥
ततः प्रभृति देवोऽसौ न प्रसूते शुभाः प्रजाः । स्वात्मजैरेव तै रुद्रोनिवृत्तात्मा ह्यतिष्ठत ॥३८॥
स्थाणुत्वं तेन तस्यासीद्देवदेवस्य शूलिनः । ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ॥३९॥
द्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥४०॥
स एव शङ्करः साक्षात् पिनाकी परमेश्वरः । ततः स भगवान् ब्रह्मा वीक्ष्य देवं त्रिलोचनम् ॥४१॥
सहैव मानसैः रुद्रैः प्रीतिविस्फारलोचनः । ज्ञात्वा परतरं भावमैश्वरं ज्ञानचक्षुषा ।
तुष्टाव जगतामीशं कृत्वा शिरसि चाञ्जलिम् ॥४२॥

### ब्रह्मोवाच

नमस्तेऽस्तु महादेव नमस्ते परमेश्वर । नमः शिवाय देवाय नमस्ते ब्रह्मरूपिणे ॥४३॥
नमोऽस्तु ते महेशाय नमः शान्ताय हेतवे । प्रधानपुरुषेशाय योगाधिपतये नमः ॥४४॥
नमः कालाय रुद्राय महाग्रासाय शूलिने । नमः पिनाकहस्ताय त्रिनेत्राय नमो नमः ॥४५॥
नमस्त्रिमूर्त्तये तुभ्यं ब्रह्मणे जनकाय ते । ब्रह्मविद्याधिपतये ब्रह्मविद्याप्रदायिने ॥४६॥
नमो वेदरहस्याय कालकालाय ते नमः । वेदान्तसारसाराय नमो वेदान्तमूर्त्तये ॥४७॥
नमो बुद्धाय शुद्धाय योगिनां गुरवे नमः । प्रहीणशोकैर्विविधभूतैः परिवृताय ते ॥४८॥
नमो ब्रह्मण्यदेवाय ब्रह्माधिपतये नमः । त्र्यम्बकायादिदेवाय नमस्ते परमेष्ठिने ॥४९॥
नमो दिग्वाससे तुभ्यं नमो मुण्डाय दण्डिने । अनादिमलहीनाय ज्ञानगम्याय ते नमः ॥५०॥
नमस्ताराय तीर्थाय नमो योगर्द्धिहेतवे । नमो धर्माधिगम्याय योगगम्याय ते नमः ॥५१॥
नमस्ते निष्प्रपञ्चाय निराभासाय ते नमः । ब्रह्मणे विश्वरूपाय नमस्ते परमात्मने ॥५२॥
त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् । त्वया संह्रियते विश्वं प्रधानाद्यं जगन्मय ॥५३॥
त्वमीश्वरो महादेवः परं ब्रह्म महेश्वरः । परमेष्ठी शिवः शान्तः पुरुषो निष्कलो हरः ॥५४॥

त्वमक्षरं परं ज्योतिस्त्वं कालः परमेश्वरः । त्वमेव पुरुषोऽनन्तः प्रधानं प्रकृतिस्तथा ॥५५॥
भूमिरापोऽनलो वायुर्व्योमाहङ्कार एव च । यस्य रूपं नमस्यामि भवन्तं ब्रह्मसंज्ञितम् ॥५६॥
यस्य द्यौरभवन्मूर्द्धा पादौ पृथ्वी दिशो भुजाः । आकाशमुदरं तस्मै विराजे प्रणमाम्यहम् ॥५७॥
सन्तापयति यो नित्यं स्वभाभिर्भासयन् दिशः । ब्रह्मतेजोमयं विश्वं तस्मै सूर्यात्मने नमः ॥५८॥
हव्यं वहति यो नित्यं रौद्री तेजोमयी तनुः । कव्यं पितृगणानाञ्च तस्मै वह्न्यात्मने नमः ॥५९॥
आप्याययति यो नित्यं स्वधाम्ना सकलं जगत् । पीयते देवतासंघैस्तस्मै चन्द्रात्मने नमः ॥६०॥
बिभर्त्त्यशेषभूतानि यान्तश्चरति सर्वदा । शक्तिर्माहेश्वरी तुभ्यं तस्मै वाय्वात्मने नमः ॥६१॥
सृजत्यशेषमेवेदं यः स्वकर्मानुरूपतः । आत्मन्यवस्थितस्तस्मै चतुर्वक्त्रात्मने नमः ॥६२॥
यः शेते शेषशयने विश्वमावृत्य मायया । स्वात्मानुभूतियोगेन तस्मै विष्ण्वात्मने नमः ॥६३॥
बिभर्त्ति शिरसा नित्यं द्विसप्तभुवनात्मकम् । ब्रह्माण्डं योऽखिलाधारस्तस्मै शेषात्मने नमः ॥६४॥
यः परान्ते परानन्दं पीत्वा देव्यैकसाक्षिकम् । नृत्यत्यनन्तमहिमा तस्मै रुद्रात्मने नमः ॥६५॥
योऽन्तरा सर्वभूतानां नियन्ता तिष्ठतीश्वरः । तं सर्वसाक्षिणं देवं नमस्ये विश्वतस्तनुम् ॥६६॥
यं विनिद्रा जितश्वासाः सन्तुष्टाः समदर्शिनः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥६७॥
यया सन्तरते मायां योगी संक्षीणकल्मषः । अपारतरपर्यन्तां तस्मै विद्यात्मने नमः ॥६८॥
यस्य भासा विभातीदमद्वयं तमसः परम् । प्रपद्ये तत् परं तत्त्वं तद्रूपं पारमेश्वरम् ॥६९॥
नित्यानन्दं निराधारं निष्कलं परमं शिवम् । प्रपद्ये परमात्मानं भवन्तं परमेश्वरम् ॥७०॥
एवं स्तुत्वा महादेवं ब्रह्मा तद्भावभावितः । प्राञ्जलिः प्रणतस्तस्थौ गृणन् ब्रह्म सनातनम् ॥७१॥
ततस्तस्मै महादेवो दिव्यं योगमनुत्तमम् । ऐश्वरं ब्रह्मसद्भावं वैराग्यं च ददौ हरः ॥७२॥
कराभ्यां सशुभाभ्याञ्च संस्पृश्य प्रणतार्त्तिहा । व्याजहार स्मयन्नेव सोऽनुगृह्य पितामहम् ॥७३॥
यत् त्वयाभ्यर्थितं ब्रह्मन् पुत्रत्वे भवता मम । कृतं मया तत् सकलं सृजस्व विविधं जगत् ॥७४॥
त्रिधा भिन्नोऽस्म्यहं ब्रह्मन् ब्रह्म-विष्णु-हराख्यया । सर्ग-रक्षा-लयगुणैर्निष्कलः परमेश्वरः ॥७५॥
स त्वं ममाग्रजः पुत्रः सृष्टिहेतोर्विनिर्मितः । ममैव दक्षिणादङ्गाद्वामाङ्गात् पुरुषोत्तमः ॥७६॥
तस्य देवाधिदेवस्यशम्भोर्हृदयदेशतः । सम्बभूवाथ रुद्रो वा सोऽहं तस्य परा तनुः ॥७७॥
ब्रह्म-विष्णु-शिवा ब्रह्मन् सर्गस्थित्यन्तहेतवः । विभज्यात्मानमेकोऽपि स्वेच्छया शङ्करः स्थितः ॥७८॥
तथान्यानि च रूपाणि मम मायाकृतानि च । अरूपः केवलः स्वस्थो महादेवः स्वभावतः ॥७९॥
य एभ्यः परतो देवस्त्रिमूर्त्तिः परमा तनुः । माहेश्वरी त्रिनयना योगिनां शान्तिदा सदा ॥८०॥
तस्या एव परां मूर्त्तिं मामवेहि पितामह । शाश्वतैश्वर्यविज्ञान-तेजोयोगसमन्विताम् ॥८१॥
सोऽहं ग्रसामि सकलमधिष्ठाय तमोगुणम् । कालो भूत्वा न मनसा मामन्योऽभिभविष्यति ॥८२॥
यदा यदा हि मां नित्यं विचिन्तयसि पद्मज । तदा तदा मे सान्निध्यं भविष्यति तवानघ ॥८३॥
एतावदुक्त्वा ब्रह्माणं सोऽभिवन्द्य गुरुं हरः । सहैव मानसैः पुत्रैः क्षणादन्तरधीयत ॥८४॥
सोऽपि योगं समास्थाय ससर्ज विविधं जगत् । नारायणाख्यो भगवान् यथापूर्वं प्रजापतिः ॥८५॥
मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् । दक्षमत्रिं वसिष्ठञ्च सोऽसृजद् योगविद्यया ॥८६॥
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः । सर्वे ते ब्रह्मणा तुल्याः साधका ब्रह्मवादिनः ॥८७॥
सङ्कल्पञ्चैव धर्मञ्च युगधर्मांश्च शाश्वतान् । स्थानाभिमानिनः सर्वान् यथा ते कथितं पुरा ॥८८॥

इति श्रीकौर्मे महापुराणे पूर्वभागे रुद्रसृष्टिर्नाम दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः

## कूर्म उवाच

एवं सृष्ट्वा मरीच्यादीन् देवदेवः पितामहः । सहैव मानसैः पुत्रैस्तताप परमं तपः ॥१॥
तस्यैवं तपतो वक्त्राद्रुद्रः कालाग्निसम्भवः । त्रिशूलपाणिरीशानः प्रादुरासीत् त्रिलोचनः ॥२॥
अर्द्धनारीश्वरवपुर्दुष्प्रेक्ष्योऽतिभयंकरः । विभजात्मानमित्युक्त्वा ब्रह्मा चान्तर्दधे भयात् ॥३॥
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाकरोत् । बिभेद पुरुषत्वञ्च दशधा चैकधा पुनः ॥४॥
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः । कपालीशादयो विप्रा देवकार्ये नियोजिताः ॥५॥
सौम्यासौम्यैस्तथा शान्ताशान्तैः स्त्रीत्वञ्च स प्रभुः । बिभेद बहुधा देवः स्वरूपैरसितैः सितैः ॥६॥
ता वै विभूतयो विप्रा विश्रुताः शक्तयो भुवि । लक्ष्म्यादयो याभिरीशा विश्वं व्याप्नोति शाङ्करी॥७॥
विभज्य पुनरीशानी स्वात्मांशमकरोद् द्विजाः । महादेवनियोगेन पितामहमुपस्थिता ॥८॥
तामाह भगवान् ब्रह्मा दक्षस्य दुहिता भव । सापि तस्य नियोगेन प्रादुरासीत् प्रजापतेः ॥९॥
नियोगाद् ब्रह्मणो देवी ददौ रुद्राय तां सतीम् । दाक्षीं रुद्रोऽपि जग्राह स्वकीयामेव शूलभृत् ॥१०॥
प्रजापतिविनिर्देशात् कालेन परमेश्वरी । मेनायामभवत् पुत्री तदा हिमवतः सती ॥११॥
स चापि पर्वतवरो ददौ रुद्राय पार्वतीम् । हिताय सर्वदेवानां त्रैलोक्यस्यात्मनोऽपि च ॥१२॥
सैषा माहेश्वरी देवी शङ्करार्धशरीरिणी । शिवा सती हैमवती सुरासुरनमस्कृता ॥१३॥
तस्याः प्रभावमतुलं सर्वे देवाः सवासवाः । वदन्ति मुनयो वेत्ति शङ्करो वा स्वयं हरिः ॥१४॥
एतद्वः कथितं विप्राः पुत्रत्वं परमेष्ठिनः । ब्रह्मणः पद्मयोनित्वं शंकरस्यामितौजसः ॥१५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे देव्यवतारो नाम एकादशोऽध्यायः ॥ ११ ॥

---

# द्वादशोऽध्यायः

## सूत उवाच

इत्याकर्ण्याथ मुनयः कूर्मरूपेण भाषितम् । विष्णुना पुनरेवैनं पप्रच्छुः प्रणता हरिम् ॥१॥

## ऋषय ऊचुः

कैषा भगवती देवी शंकरार्धशरीरिणी । शिवा सती हैमवती यथावद् ब्रूहि पृच्छताम् ॥२॥
तेषां तद्वचनं श्रुत्वा मुनीनां पुरुषोत्तमः । प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदम् ॥३॥

## कूर्म उवाच

पुरा पितामहेनोक्तं मेरुपृष्ठे सुशोभने । रहस्यमेतद्विज्ञानं गोपनीयं विशेषतः ॥४॥
सांख्यानां परमं सांख्यं ब्रह्मविज्ञानमुत्तमम् । संसारार्णवमग्नानां जन्तूनामेकमोचनम् ॥५॥
या सा माहेश्वरी शक्तिर्ज्ञानरूपातिलालसा । व्योमसंज्ञा परा काष्ठा सेयं हैमवती मता ॥६॥
शिवा सर्वगतानन्ता गुणातीतातिनिष्कला । एकानेकविभागस्था ज्ञानरूपातिलालसा ॥७॥
अनन्या निष्कले तत्त्वे संस्थिता तस्य तेजसा । स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ॥८॥

एका माहेश्वरी शक्तिरनेकोपाधियोगतः । परावरेण रूपेण क्रीडते तस्य सन्निधौ ॥९॥
सेयं करोति सकलं तस्याः कार्यमिदं जगत् । न कार्यं नापि करणमीश्वरस्येति सूरयः ॥१०॥
चतस्रः शक्तयो देव्याः स्वरूपत्वेन संस्थिताः । अधिष्ठानवशात् तस्याः शृणुध्वं मुनिपुङ्गवाः ॥११॥
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः स्मृताः । चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः ॥१२॥
अनया परया देवः स्वात्मानन्दं समश्नुते । चतुर्ष्वपि च वेदेषु चतुर्मूर्त्तिर्महेश्वरः ॥१३॥
अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं महत् । तत्सम्बन्धादनन्तैषा रुद्रेण परमात्मना ॥१४॥
सैषा सर्वेश्वरी देवी सर्वभूतप्रवर्त्तिका । प्रोच्यते भगवान् कालो हरिः प्राणो महेश्वरः ॥१५॥
तत्र सर्वमिदं प्रोतमोतञ्चैवाखिलं जगत् । स कालाग्निर्हरो देवो गीयते वेदवादिभिः ॥१६॥
कालः सृजति भूतानि कालः संहरते प्रजाः । सर्वे कालस्य वशगा न कालः कस्यचिद्वशः ॥१७॥
प्रधानं पुरुषस्तत्त्वं महानात्मा त्वहङ्कृतिः । कालेनान्यानि तत्त्वानि समाविष्टानि योगिना ॥१८॥
तस्य सर्वजगन्मूर्त्तिः शक्तिर्मायेति विश्रुता । तयेयं भ्रामयेदीशो मायावी पुरुषोत्तमः ॥१९॥
सैषा मायात्मिका शक्तिः सर्वाकारा सनातनी । विश्वरूपं महेशस्य सर्वदा सम्प्रकाशयेत् ॥२०॥
अन्याश्च शक्तयो मुख्यास्तस्य देवस्य निर्मिताः । ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम् ॥२१॥
सर्वासामेव शक्तीनां शक्तिमन्तो विनिर्मिताः । माययैवाथ विप्रेन्द्राः सा चानादिरनश्वरा ॥२२॥
सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया । मायावी सर्वशक्तीशः कालः कालकरः प्रभुः ॥२३॥
करोति कालः सकलं संहरेत् काल एव हि । कालः स्थापयते विश्वं कालाधीनमिदं जगत् ॥२४॥
लब्ध्वा देवाधिदेवस्य सन्निधिं परमेष्ठिनः । अनन्तस्याखिलेशस्य शंभोः कालात्मनः प्रभोः ॥२५॥
प्रधानं पुरुषो माया मायी सैव प्रभिद्यते । एका सर्वगतानन्ता केवला निष्कला शिवा ॥२६॥
एका शक्तिः शिवैकोऽपि शक्तिमानुच्यते शिवः । शक्तयः शक्तिमन्तोऽन्ये सर्वशक्तिसमुद्भवाः ॥२७॥
शक्ति - शक्तिमतोर्भेदं वदन्ति परमार्थतः । अभेदञ्चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥२८॥
शक्तयो गिरिजा देवी शक्तिमानथ शङ्करः । विशेषः कथ्यते चायं पुराणे ब्रह्मवादिभिः ॥२९॥
भोग्या विश्वेश्वरी देवी महेश्वरपतिव्रता । प्रोच्यते भगवान् भोक्ता कपर्दी नीललोहितः ॥३०॥
मन्ता विश्वेश्वरो देवः शङ्करो मन्मथान्तकः । प्रोच्यते सद्भिरीशानी मन्तव्या च विचारतः ॥३१॥
इत्येतदखिलं विप्राः शक्ति - शक्तिमदुद्भवम् । प्रोच्यते सर्ववेदेषु मुनिभिस्तत्त्वदर्शिभिः ॥३२॥
एतत् प्रदर्शितं दिव्यं देव्या माहात्म्यमुत्तमम् । सर्ववेदान्तवादेषु निश्चितं ब्रह्मवादिभिः ॥३३॥
एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् । योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम् ॥३४॥
आनन्दमक्षरं ब्रह्म केवलं निष्कलं परम् । योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम् ॥३५॥
परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् । अनन्तप्रकृतौ लीनं देव्यास्तत् परमं पदम् ॥३६॥
शुभं निरञ्जनं शुद्धं निर्गुणं द्वैतवर्जितम् । आत्मोपलब्धिविषयं देव्यास्तत् परमं पदम् ॥३७॥
सैषा धात्री विधात्री च परमानन्दमिच्छताम् । संसारतापानखिलान् निहन्तीश्वरसंश्रयात् ॥३८॥
तस्माद्विमुक्तिमन्विच्छन् पार्वतीं परमेश्वरीम् । आश्रयेत् सर्वभूतानामात्मभूतां शिवात्मिकाम् ॥३९॥
लब्ध्वा च पुत्रीं सर्वाणीं तपस्तप्त्वा सुदुश्चरम् । सभार्यः शरणं यातः पार्वतीं परमेश्वरीम् ॥४०॥
तां दृष्ट्वा जायमानाञ्च स्वेच्छयैव वराननाम् । मेना हिमवतः पत्नी प्राहेदं पर्वतेश्वरम् ॥४१॥

## मेनोवाच

पश्य बालामिमां राजन् राजीवसदृशाननाम् । हिताय सर्वभूतानां जाता च तपसावयोः ॥४२॥
सोऽपि दृष्ट्वा ततो देवीं तरुणादित्यसन्निभाम् । कपर्दिनीं चतुर्वक्त्रां त्रिनेत्रामतिलालसाम् ॥४३॥

अष्टहस्तां विशालाक्षीं चन्द्रावयवभूषणाम् । निर्गुणां सगुणां साक्षात् सदसद्व्यक्तिवर्जिताम् ॥४४॥
प्रणम्य शिरसा भूमौ तेजसा चातिविह्वलः । भीतः कृताञ्जलिस्तस्याः प्रोवाच परमेश्वरीम् ॥४५॥

## हिमवानुवाच

का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते । न जाने त्वामहं वत्से यथावद् ब्रूहि पृच्छते ॥४६॥
गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी । व्याजहार महाशैलं योगिनामभयप्रदा ॥४७॥

## देव्युवाच

मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम् । अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥४८॥
अहं हि सर्वभावानामात्मा सर्वात्मना शिवा । शाश्वतैश्वर्यविज्ञानमूर्त्तिः सर्वप्रवर्त्तिका ॥४९॥
अनन्तानन्तमहिमा संसारार्णवतारिणी । दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥५०॥
एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् । स्वं रूपं दर्शयामास दिव्यं तत् पारमेश्वरम् ॥५१॥
कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् । ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥५२॥
दंष्ट्राकरालं दुर्द्धर्षं जटामण्डलमण्डितम् । त्रिशूलवरहस्तञ्च घोररूपं भयानकम् ॥५३॥
प्रशान्तं सौम्यवदनमनन्ताश्चर्यसंयुतम् । चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ॥५४॥
किरीटिनं गदाहस्तं नूपुरैरुपशोभितम् । दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥५५॥
शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् । अण्डस्थञ्चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम् ॥५६॥
सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम् । ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम् ॥५७॥
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वमावृत्य तिष्ठन्तीं ददर्श परमेश्वरीम् ॥५८॥
दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् । भयेन च समाविष्टः स राजा हृष्टमानसः ॥५९॥
आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन् । नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम् ॥६०॥

## हिमवानुवाच

शिवोमा परमा शक्तिरनन्ता निष्कलामला । शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा ॥६१॥
अचिन्त्या केवलानन्ता शिवात्मा परमात्मिका । अनादिरव्यया शुद्धा देवात्मा सर्वगाचला ॥६२॥
एकानेकविभागस्था मायातीता सुनिर्मला । महामाहेश्वरी सत्या महादेवी निरञ्जना ॥६३॥
काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा । नन्दा सर्वात्मिका विद्या ज्योतीरूपामृताक्षरा ॥६४॥
शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा । व्योममूर्त्तिर्व्योमलया व्योमाधाराच्युतामरा ॥६५॥
अनादिनिधनाऽमोघा कारणात्मा कलाकुला । स्वतः प्रथमजा नाभिरमृतस्यात्मसंश्रया ॥६६॥
प्राणेश्वरप्रिया माता महामहिषघातिनी । प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥६७॥
सर्वशक्तिः कलाकारा ज्योत्स्नेन्दोर्महिमास्पदा । सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ॥६८॥
संसारयोनिः सकला सर्वशक्तिसमुद्भवा । संसारपोता दुर्वारा दुर्निरीक्ष्या दुरासदा ॥६९॥
प्राणशक्तिः प्राणविद्या योगिनी परमा कला । महाविभूतिर्दुर्द्धर्षा मूलप्रकृतिसम्भवा ॥७०॥
अनाद्यनन्तविभवा परमाद्यापकर्षिणी । सर्गस्थित्यन्तकरणी सुदुर्वाच्या दुरत्यया ॥७१॥
शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा । अनादिरव्यक्तगुणा महानन्दा सनातनी ॥७२॥
आकाशयोनिर्योगस्था महायोगेश्वरेश्वरी । महामाया सुदुष्पारा मूलप्रकृतिरीश्वरी ॥७३॥
प्रधानपुरुषातीता प्रधानपुरुषात्मिका । पुराणा चिन्मयी पुंसामादिपूरुषरूपिणी ॥७४॥

भूतान्तरस्था कूटस्था महापुरुषसंज्ञिता । जन्म - मृत्यु - जरातीता सर्वशक्तिसमन्विता ॥७५॥
व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी । क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मलवर्जिता ॥७६॥
अनादिमायासम्भिन्ना त्रितत्त्वा प्रकृतिग्रहा । महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा ॥७७॥
व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका । अकार्या कार्यजननी नित्यं प्रसवधर्मिणी ॥७८॥
सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी । ब्रह्मगर्भा चतुर्विंशा पद्मनाभाच्युतात्मिका ॥७९॥
वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया । सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता ॥८०॥
विश्वरूपा महागर्भा विश्वेशेच्छानुवर्त्तिनी । महीयसी ब्रह्मयोनिर्महालक्ष्मीसमुद्भवा ॥८१॥
महाविमानमध्यस्था महानिद्रात्महेतुका । सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमार्थिकी ॥८२॥
अनन्तरूपानन्तस्था देवी पुरुषमोहिनी । अनेकाकारसंस्थाना कालत्रयविवर्जिता ॥८३॥
ब्रह्मजन्मा हरेर्मूर्त्तिर्ब्रह्म - विष्णु - शिवात्मिका । ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया ॥८४॥
व्यक्ता प्रथमजा ब्राह्मी महती ब्रह्मरूपिणी । वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्त्तिर्हृदि स्थिता ॥८५॥
अपांयोनिः स्वयम्भूतिर्मानसी तत्त्वसम्भवा । ईश्वराणी च सर्वाणी शङ्करार्द्धशरीरिणी ॥८६॥
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका । महेश्वरसमुत्पन्ना भुक्ति - मुक्तिफलप्रदा ॥८७॥
सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा । ब्रह्मेन्द्रोपेन्द्रनमिता शङ्करेच्छानुवर्त्तिनी ॥८८॥
ईश्वरार्द्धासनगता महेश्वरपतिव्रता । सकृद्विभाता सर्वार्त्ति-समुद्रपरिशोषिणी ॥८९॥
पार्वती हिमवत्पुत्री परमानन्ददायिनी । गुणाढ्या योगजा योग्या ज्ञानमूर्त्तिर्विकाशिनी ॥९०॥
सावित्री कमला लक्ष्मीः श्रीरनन्तोरसि स्थिता । सरोजनिलया गङ्गा योगनिद्राऽसुरार्द्दिनी ॥९१॥
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला । वाग्देवी वरदाऽवाच्या कीर्त्तिः सर्वार्थसाधिका॥९२॥
योगीश्वरी ब्रह्मविद्या महाविद्या सुशोभना । गुह्यविद्यात्मविद्या च धर्मविद्यात्मभाविता ॥९३॥
स्वाहा विश्वम्भरा सिद्धिःस्वधा मेधा धृतिःश्रुतिः । नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिणी ॥९४॥
पूज्या विभावती सौम्या भोगिनी भोगशायिनी । शोभा वंशकरी लोला मालिनी परमेष्ठिना ॥९५॥
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी । महानुभावा सत्त्वस्था महामहिषमर्द्दिनी ॥९६॥
पद्ममाला पापहरा विचित्रमुकुटाङ्गदा । कान्ता चित्राम्बरधरा दिव्याभरणभूषिता ॥९७॥
हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी । नियन्त्री यन्त्रमध्यस्था नन्दिनी भद्रकालिका ॥९८॥
आदित्यवर्णा कौमारी मयूरवरवाहना । वृषासनगता गौरी महाकाली सुरार्चिता ॥९९॥
अदितिर्नियता रौद्री पद्मगर्भा विवाहना । विरूपाक्षी लेलिहाना महासुरविनाशिनी ॥१००॥
महाफलानवद्याङ्गी कामरूपा विभावरी । विचित्ररत्नमुकुटा प्रणतार्त्तिप्रभञ्जनी ॥१०१॥
कौशिकी कर्षणी रात्रिस्त्रिदशार्त्तिविनाशिनी । बहुरूपा स्वरूपा च विरूपा रूपवर्जिता ॥१०२॥
भक्तार्त्तिशमनी भव्या भवतापविनाशिनी । निर्गुणा नित्यविभवा निःसारा निरपत्रपा ॥१०३॥
तपस्विनी सामगीतिर्भवाङ्कनिलयालया । दीक्षा विद्याधरी दीप्ता महेन्द्रारिनिपातिनी॥१०४॥
सर्वातिशायिनी विद्या सर्वसिद्धिप्रदायिनी । सर्वेश्वरप्रिया तार्क्ष्यी समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥१०५॥
कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी । निःसङ्कल्पा निरातङ्का विनया विनयप्रिया॥१०६॥
ज्वालामालासहस्राढ्या देवदेवी मनोमयी । महाभगवती भर्गा वासुदेवसमुद्भवा ॥१०७॥
महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा । ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः ॥१०८॥
दक्षिणा दहना दान्ता सर्वभूतनमस्कृता । योगमाया विभागज्ञा महामोहा गरीयसी ॥१०९॥

सन्ध्या सर्वसमुद्भूतिर्ब्रह्मविद्याश्रयादिभिः । बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥११०॥
क्षान्तिः प्रज्ञा चितिः संविन्महाभोगीन्द्रशायिनी । विकृतिः शाङ्करी शान्तिर्गण-गन्धर्वसेविता ॥१११॥
वैश्वानरी महाशाला देवसेना गुहप्रिया । महारात्रिः शिवानन्दा शची दुःस्वप्ननाशिनी॥११२॥
इज्या पूज्या जगद्धात्री दुर्विनेया सुरूपिणी । गुहाम्बिका गुणोत्पत्तिर्महापीठा मरुत्सुता ॥११३॥
हव्यवाहान्तरागादिर्हव्यवाहसमुद्भवा । जगद्योनिर्जगन्माता जन्म-मृत्यु-जरातिगा ॥११४॥
बुद्धिर्महाबुद्धिमती पुरुषान्तरवासिनी । तपस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥११५॥
सर्वेन्द्रियमनोमाता सर्वभूतहृदिस्थिता । संसारतारणी विद्या ब्रह्मवादिमनोलया ॥११६॥
ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणी । हिरण्मयी महारात्रिः संसारपरिवर्त्तिका ॥११७॥
समालिनी सुरूपा च भाविनी हारिणी प्रभा । उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ॥११८॥
सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा । सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ॥११९॥
जगत्प्रिया जगन्मूर्त्तिस्त्रिमूर्त्तिरमृताश्रया । निराश्रया निराहारा निरङ्कुशपदोद्भवा ॥१२०॥
चक्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी । परावरविधानज्ञा महापुरुषपूर्वजा ॥१२१॥
विश्वेश्वरप्रिया विद्युद्विद्युज्जिह्वा जितश्रमा । विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ॥१२२॥
सहस्ररश्मिः सत्त्वस्था महेश्वरपदाश्रया । क्षालिनी मृन्मयी व्याप्ता तैजसी पद्मबोधिका ॥१२३॥
महामायाश्रया मान्या महादेवमनोरमा । व्योमलक्ष्मीः सिंहरथा चेकितानामितप्रभा ॥१२४॥
वीरेश्वरी विमानस्था विशोका शोकनाशिनी । अनाहता कुण्डलिनी नलिनी पद्मभासिनी ॥१२५॥
सदानन्दा सदाकीर्त्तिः सर्वभूताश्रयस्थिता । वाग्देवता ब्रह्मकला कलातीता कलारणी ॥१२६॥
ब्रह्मश्रीर्ब्रह्महृदया ब्रह्म-विष्णु-शिवाग्रजा । व्योमशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः परा गतिः ।
क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता ॥१२७॥
अभिन्ना भिन्नसंस्थाना वशिनी वंशकारिणी । गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ॥१२८॥
भगिनी भगवत्पत्नी सकला कालकारिणी । सर्ववित् सर्वतोभद्रा गुह्यातीतागुहारणी ।
प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ॥१२९॥
कपिला कापिला कान्ता कमलाभा कलान्तरा । पुण्या पुष्करिणी भोक्त्री पुरन्दरपुरःसरा ॥१३०॥
पोषणी परमैश्वर्यभूतिदा भूतिभूषणा । पञ्चब्रह्मसमुत्पत्तिः परमार्थार्थविग्रहा ॥१३१॥
धर्मोदया भानुमती योगिज्ञेया मनोजवा । मनोरमा मनोरस्का तापसी वेदरूपिणी ॥१३२॥
वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी । योगेश्वरेश्वरी माता महाशक्तिर्मनोमयी ॥१३३॥
विश्वावस्था वियन्मूर्त्तिर्विद्युन्माला विहायसी । किन्नरी सुरभिर्विद्या नन्दिनी नन्दिवल्लभा ॥१३४॥
भारती परमानन्दा परापरविभेदिका । सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ॥१३५॥
अचिन्त्यानन्तविभवा भूलेखा कनकप्रभा । कूष्माण्डी धनरत्नाढ्या सुगन्धा गन्धदायिनी ॥१३६॥
त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया । सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना ॥१३७॥
शान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना । आद्या हृत्कमलोद्भूता गवां माता रणप्रिया ॥१३८॥
सत्क्रिया गिरिशा शुद्धिर्नित्यपुष्टा निरन्तरा । दुर्गा कात्यायनी चण्डी चर्चिताङ्गा सुविग्रहा ॥१३९॥
हिरण्यवर्णा जगती जगद्यन्त्रप्रवर्त्तिका । मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ॥१४०॥
रत्नमाला रत्नगर्भा पुष्टिर्विश्वप्रमाथिनी । पद्मानना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ॥१४१॥
धुन्वती दुष्प्रकम्पा च सूर्यमाता दृषद्वती । महेन्द्रभगिनी सौम्या वरेण्या वरदायिका ॥१४२॥
कल्याणी कमलावासा पञ्चचूडा वरप्रदा । वाच्याऽमरेश्वरी वन्द्या दुर्जया दुरतिक्रमा ॥१४३॥

कालरात्रिर्महावेगा वीरभद्रप्रिया हिता । भद्रकाली जगन्माता भक्तानां भद्रदायिनी ॥१४४॥
कराला पिङ्गलाकारा कामभेदा महास्वना । यशस्विनी यशोदा च षडध्वपरिवर्त्तिका ॥१४५॥
शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्त्तिका । चैत्रा संवत्सरारूढा जगत्सम्पूरणीन्द्रजा ॥१४६॥
शुम्भारिः खेचरी स्वस्था कम्बुग्रीवा कलिप्रिया । खगध्वजा खगारूढा वाराही पूगमालिनी ॥१४७॥
ऐश्वर्यपद्मनिलया विरक्ता गरुडासना । जयन्ती हृद्गुहागम्या शंकरेष्ट-गणाग्रणीः ॥१४८॥
संकल्पसिद्धा साम्यस्था सर्वविज्ञानदायिनी । कलिः कल्कविहन्त्री च गुह्योपनिषदुत्तमा ॥१४९॥
निष्ठा दृष्टिः स्मृतिर्व्याप्तिः पुष्टिस्तुष्टिः क्रियावती । विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवाऽमृता ॥१५०॥
लोहिता सर्पमाला च भीषणी नरमालिनी । अनन्तशयनानन्ता नरनारायणोद्भवा ॥१५१॥
नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा । संकर्षणसमुत्पत्तिरम्बिका पादसंश्रया ॥१५२॥
महाज्वाला महाभूतिः सुमूर्त्तिः सर्वकामधुक् । सुप्रभा सुस्तना सौरी धर्मकामार्थमोक्षदा ॥१५३॥
भ्रूमध्यनिलया पूर्वा पुराणपुरुषारणिः । महाविभूतिदा मध्या सरोजनयना समा ॥१५४॥
अष्टादशभुजाऽनाद्या नीलोत्पलदलप्रभा । सर्वशक्त्यासनारूढा धर्माधर्मविवर्जिता ॥१५५॥
वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया । विचित्रगहनाधारा शाश्वतस्थानवासिनी ॥१५६॥
स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी । अशेषदेवतामूर्त्तिर्देवता वरदेवता ॥१५७॥
गणाम्बिका गिरेः पुत्री निशुम्भविनिपातिनी । अवर्णा वर्णरहिता त्रिवर्णा जीवसम्भवा ॥१५८॥
अनन्तवर्णाऽनन्यस्था शाङ्करी शान्तमानसा । अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणोत्तरा ॥१५९॥
गौर्गीर्गव्यप्रिया गौणी गणेश्वरनमस्कृता । सत्यभामा सत्यसन्धा त्रिसन्ध्या सन्धिवर्जिता१६०॥
सर्ववादाश्रया संख्या सांख्ययोगसमुद्भवा । असंख्येयाप्रमेयाख्या शून्या शुद्धकुलोद्भवा ॥१६१॥
बिन्दुनादसमुत्पत्तिः शम्भुवामा शशिप्रभा । पिशङ्गा भेदरहिता मनोज्ञा मधुसूदनी ॥१६२॥
महाश्रीः श्रीसमुत्पत्तिस्तमः पारे प्रतिष्ठिता । त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया ॥१६३॥
शान्त्यतीता मलातीता निर्विकारा निराश्रया । शिवाख्या चित्तनिलया शिवज्ञानस्वरूपिणी॥१६४॥
दैत्यदानवनिर्मथ्नी काश्यपी कालकर्णिका । शास्त्रयोनिः क्रियामूर्त्तिश्चतुर्वर्गप्रदर्शिका ॥१६५॥
नारायणी नरोद्भूतिः कौमुदी लिङ्गधारिणी । कामुकी कलिता भावा परावरविभूतिदा ॥१६६॥
परार्द्धजातमहिमा वडवा वामलोचना । सुभद्रा देवकी सीता वेदवेदाङ्गपारगा ॥१६७॥
मनस्विनी मन्युमाता महामन्युसमुद्भवा । अमन्युरमृतास्वादा पुरुहूता पुरुष्टुता ॥१६८॥
अशोच्या भिन्नविषया हिरण्यरजतप्रिया । हिरण्यरजनी हैमी हेमाभरणभूषिता ॥१६९॥
विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा । महानिद्रासमुद्भूतिरनिद्रा सत्यदेवता ॥१७०॥
दीर्घा ककुद्मिनी हृद्या शान्तिदा शान्तिवर्द्धनी । लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्त्तिका ॥१७१॥
त्रिशक्तिजननी जन्या षडूर्मिपरिवर्जिता । सुधामा कर्मकरणी युगान्तदहनात्मिका ॥१७२॥
सङ्कर्षणी जगद्धात्री कामयोनिः किरीटिनी । ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी ॥१७३॥
प्रद्युम्नदयिता दात्री युग्मदृष्टिस्त्रिलोचना । मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा ॥१७४॥
वृषावेशा वियन्मात्रा विन्ध्यपर्वतवासिनी । हिमवन्मेरुनिलया कैलासगिरिवासिनी ॥१७५॥
चाणूरहन्तृतनया नीतिज्ञा कामरूपिणी । वेदवेद्या व्रतस्नाता ब्रह्मशैलनिवासिनी ॥१७६॥
वीरभद्रप्रजा वीरा महाकामसमुद्भवा । विद्याधरप्रिया सिद्धा विद्याधरनिराकृतिः ॥१७७॥
आप्यायनी हरन्ती च पावनी पोषणी कला । मातृका मन्मथोद्भूता वारिजा वाहनप्रिया ॥१७८॥
करीषिणी सुधावाणी वीणावादनतत्परा । सेविता सेविका सेव्या सिनीवाली गरुत्मती॥१७९॥

अरुन्धती हिरण्याक्षी मृगाक्षी मानदायिनी । वसुप्रदा वसुमती वसोर्द्धारा वसुन्धरा ॥१८०॥
धाराधरा वरारोहा चराचरसहस्रदा । श्रीफला श्रीमती श्रीशा श्रीनिवासा शिवप्रिया॥१८१॥
श्रीधरा श्रीकरी कल्या श्रीधरार्द्धशरीरिणी । अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया ॥१८२॥
निहन्त्री दैत्यसङ्घानां सिंहिका सिंहवाहना । सुवर्चला च सुश्रोणी सुकीर्त्तिश्छिन्नसंशया ॥१८३॥
रसज्ञा रसदा रामा लेलिहानाऽमृतस्रवा । नित्योदिता स्वयंज्योतिरुत्सुका मृतजीवनी ॥१८४॥
वज्रतुण्डा वज्रजिह्वा वैदेही वज्रविग्रहा । मङ्गल्या मङ्गला माला निर्मला मलहारिणी॥१८५॥
गान्धर्वी गारुडी चान्द्री कम्बलाश्वतरप्रिया । सौदामिनी जनानन्दा भ्रुकुटीकुटिलानना ॥१८६॥
कर्णिकारकरा कक्ष्या कंसप्राणापहारिणी । युगन्धरा युगावर्त्ता त्रिसन्ध्या हर्षवर्द्धनी ॥१८७॥
प्रत्यक्षदेवता दिव्या दिव्यगन्धाधिवासना । शक्रासनगता शाक्री साध्या चारुशरासना ॥१८८॥
इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता । शतरूपा शतावर्त्ता विनता सुरभिः सुरा ॥१८९॥
सुरेन्द्रमाता सुद्युम्ना सुषुम्णा सूर्यसंस्थिता । समीक्षा सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा ॥१९०॥
धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना । धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा ॥१९१॥
धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी । धर्मान्तरा धर्ममयी धर्मपूर्वा धनावहा ॥१९२॥
धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या धराधरा । कपालीशा कलामूर्त्तिः कालाकलितविग्रहा ॥१९३॥
सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया । सर्वा सर्वेश्वरी सूक्ष्मा सूक्ष्मज्ञानस्वरूपिणी ॥१९४॥
प्रधानपुरुषेशेशा महादेवैकसाक्षिणी । सदाशिवा वियन्मूर्त्तिर्वेदमूर्त्तिरमूर्त्तिका ॥१९५॥
एवं नाम्नां सहस्रेण स्तुत्वासौ हिमवान् गिरिः । भूयः प्रणम्य भीतात्मा प्रोवाचेदं कृताञ्जलिः ॥१९६॥
यदेतदैश्वरं रूपं घोरं ते परमेश्वरि । भीतोऽस्मि साम्प्रतं दृष्ट्वा रूपमन्यत् प्रदर्शय ॥१९७॥
एवमुक्ताथ सा देवी तेन शैलेन पार्वती । संहृत्य दर्शयामास स्वं रूपमपरं पुनः ॥१९८॥
नीलोत्पलदलप्रख्यं नीलोत्पलसुगन्धि च । द्विनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ॥१९९॥
रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् । श्रीमद्विलाससद्वृत्तं ललाटतिलकोज्ज्वलम् ॥२००॥
भूषितं चारुसर्वाङ्गं भूषणैरतिकोमलम् । दधानमुरसा मालां विशालां हेमनिर्मिताम् ॥२०१॥
ईषत्स्मितं सुबिम्बोष्ठं नूपुरारावसंयुतम् । प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ॥२०२॥
तदीदृशं समालोक्य स्वरूपं शैलसत्तमः । भीतिं सन्त्यज्य हृष्टात्मा बभाषे परमेश्वरीम्॥२०३॥

## हिमवानुवाच

अद्य मे सफलं जन्म अद्य मे सफलं तपः । यन्मे साक्षात् त्वमव्यक्ता प्रपन्ना दृष्टिगोचरम् ॥२०४॥
त्वया सृष्टं जगत् सर्वं प्रधानाद्यं त्वयि स्थितम् । त्वय्येव लीयते देवि त्वमेव परमा गतिः ॥२०५॥
वदन्ति केचित् त्वामेव प्रकृतिं प्रकृतेः पराम् । अपरे परमार्थज्ञाः शिवेति शिवसंश्रयात् ॥२०६॥
त्वयि प्रधानं पुरुषो महान् ब्रह्मा तथेश्वरः । अविद्या नियतिर्माया कलाद्याःशतशोऽभवन्॥२०७॥
त्वं हि सा परमा शक्तिरनन्ता परमेष्ठिनी । सर्वभेदविनिर्मुक्ता सर्वभेदाश्रयाश्रया ॥२०८॥
त्वामधिष्ठाय योगेशि महादेवो महेश्वरः । प्रधानाद्यं जगत् सर्वं करोति विकरोति च ॥२०९॥
त्वयैव सङ्गतो देवः स्वात्मानन्दं समश्नुते । त्वमेव परमानन्दस्त्वमेवानन्ददायिनी ॥२१०॥
त्वमक्षरं परं व्योम महज्ज्योतिर्निरञ्जनम् । शिवं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् ॥२११॥
त्वं शक्रः सर्वदेवानां ब्रह्मा ब्रह्मविदामसि । वायुर्बलवतां देवि योगिनां त्वं कुमारकः ॥२१२॥
ऋषीणाञ्च वसिष्ठस्त्वं व्यासो वेदविदामसि । सांख्यानां कपिलो देवो रुद्राणामसि शङ्करः॥२१३॥

आदित्यानामुपेन्द्रस्त्वं वसूनाञ्चैव पावकः । वेदानां सामवेदस्त्वं गायत्री च्छन्दसामसि ॥२१४॥
अध्यात्मविद्या विद्यानां गतीनां परमा गतिः । माया त्वं सर्वशक्तीनां कालः कलयतामसि ॥२१५॥
ओंकारः सर्वगुह्याणां वर्णानाञ्च द्विजोत्तमः । आश्रमाणां गृहस्थस्त्वमीश्वराणां महेश्वरः ॥२१६॥
पुंसां त्वमेकः पुरुषः सर्वभूतहृदि स्थितः । सर्वोपनिषदां देवि गुह्योपनिषदुच्यसे ॥२१७॥
ईशानश्चासि कल्पानां युगानां कृतमेव च । आदित्यः सर्वमार्गाणां वाचां देवी सरस्वती ॥२१८॥
त्वं लक्ष्मीश्चारुरूपाणां विष्णुर्मायाविनामसि । अरुन्धती सतीनां त्वं सुपर्णः पततामसि ॥२१९॥
सूक्तानां पौरुषं सूक्तं साम ज्येष्ठञ्च सामसु । सावित्री चासि जाप्यानां यजुषां शतरुद्रियम् ॥२२०॥
पर्वतानां महामेरुरनन्तो भोगिनामपि । सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥२२१॥

रूपं तवाशेषविकारहीनमगोचरं निर्मलमेकरूपम् ।
अनादिमध्यान्तमनन्तमाद्यं नमामि सत्य तमसः परस्तात् ॥२२२॥
यदेव पश्यन्ति जगत्प्रसूतिं वेदान्तविज्ञानविनिश्चितार्थाः ।
आनन्दमात्रं प्रणवाभिधानं तदेव रूपं शरणं प्रपद्ये ॥२२३॥
अशेषभूतान्तरसन्निविष्टं प्रधान - पुंयोगवियोगहेतुम् ।
तेजोमयं जन्म - विनाशहीनं प्राणाभिधानं प्रणतोऽस्मि रूपम् ॥२२४॥
आद्यन्तहीनं जगदात्मरूपं विभिन्नसंस्थं प्रकृतेः परस्तात् ।
कूटस्थमव्यक्तवपुस्तवैव नमामि रूपं पुरुषाभिधानम् ॥२२५॥
सर्वाश्रयं सर्वजगद्विधानं सर्वत्रगं जन्म - विनाशहेतुम् ।
सूक्ष्मं विचित्रं त्रिगुणं प्रधानं नतोऽस्मि ते रूपमरूपभेदम् ॥२२६॥
आद्यं महान्तं पुरुषाभिधानं प्रकृत्यवस्थं त्रिगुणात्मबीजम् ।
ऐश्वर्यविज्ञानविरागधर्मैः समन्वितं देवि नतोऽस्मि रूपम् ॥२२७॥
द्विसप्तलोकात्मकमम्बुसंस्थं विचित्रभेदं पुरुषैकनाथम् ।
अनेकभेदैरधिवासितं ते नतोऽस्मि रूपं जगदण्डसंज्ञम् ॥२२८॥
अशेषवेदात्मकमेकमाद्यं स्वतेजसा पूरितलोकभेदम् ।
त्रिकालहेतुं परमेष्ठिसंज्ञं नमामि रूपं रविमण्डलस्थम् ॥२२९॥
सहस्रमूर्द्धानमनन्तशक्तिं सहस्रबाहुं पुरुषं पुराणम् ।
शयानमन्तः सलिले तवैव नारायणाख्यं प्रणतोऽस्मि रूपम् ॥२३०॥
दंष्ट्राकरालं त्रिदशाभिवन्द्यं युगान्तकालानलकर्त्तृरूपम् ।
अशेषभूताण्डविनाशहेतुं नमामि रूपं तव कालसंज्ञम् ॥२३१॥
फणासहस्रेण विराजमानं भोगीन्द्रमुख्यैरपि पूज्यमानम् ।
जनार्द्दनारूढतनुप्रसुप्तं नतोऽस्मि रूपं तव शेषसंज्ञम् ॥२३२॥
अव्याहतैश्वर्यमयुग्मनेत्रं ब्रह्मामृतानन्दरसज्ञमेकम् ।
युगान्तशेषं दिवि नृत्यमानं नतोऽस्मि रूपं तव रुद्रसंज्ञम् ॥२३३॥
प्रहीणशोकं प्रविहीनरूपं सुरासुरैरर्च्चितपादपद्मम् ।
सुकोमलं देवि विभासि शुभ्रं नमामि ते रूपमिदं भवानि ॥२३४॥

नमस्तेऽस्तु महादेवि नमस्ते परमेश्वरि । नमो भगवतीशानि शिवायै ते नमो नमः ॥२३५॥
त्वन्मयोऽहं त्वदाधारस्त्वमेव च गतिर्मम । त्वामेव शरणं यास्ये प्रसीद परमेश्वरि ॥२३६॥

मया नास्ति समो लोके देवो वा दानवोऽपि वा । जगन्मातैव मत्पुत्री सम्भूता तपसा यतः ॥२३७॥
एषा तवाम्बिके देवि किलाभूत् पितृकन्यका । मेनाऽशेषजगन्मातुरहो मे पुण्यगौरवम् ॥२३८॥
पाहि माममरेशानि मेनया सह सर्वदा । नमामि तव पादाब्जं व्रजामि शरणं शिवाम्॥२३९॥
अहो मे सुमहद्भाग्यं महादेवीसमागमात् । आज्ञापय महादेवि किं करिष्यामि शंकरि ॥२४०॥
एतावदुक्त्वा वचनं तदा हिमगिरीश्वरः । सम्प्रेक्षमाणो गिरिजां प्राञ्जलिः पार्श्वगोऽभवत्॥२४१॥
अथ सा तस्य वचनं निशम्य जगतोऽरणिः । सस्मितं प्राह पितरं स्मृत्वा पशुपतिं पतिम्॥२४२॥

## देव्युवाच

शृणुष्व चैतत् प्रथमं गुह्यमीश्वरगोचरम् । उपदेशं गिरिश्रेष्ठ सेवितं ब्रह्मवादिभिः ॥२४३॥
यन्मे साक्षात् परं रूपमैश्वरं दृष्टमद्भुतम् । सर्वशक्तिसमायुक्तमनन्तं प्रेरकं परम् ॥२४४॥
शान्तः समाहितमना मानाहङ्कारवर्जितः । तन्निष्ठस्तत्परो भूत्वा तदेव शरणं व्रज ॥२४५॥
भक्त्या त्वनन्यया तात मद्भावं परमाश्रितः । सर्वयज्ञतपोदानैस्तदेवार्चय सर्वदा ॥२४६॥
तदेव मनसा पश्य तद् ध्यायस्व यजस्व तत् । ममोपदेशात् संसारं नाशयामि तवानघ ॥२४७॥
अहं त्वां परया भक्त्या ऐश्वरं योगमास्थितम् । संसारसागरादस्मादुद्धराम्यचिरेण तु ॥२४८॥
ध्यानेन कर्मयोगेण भक्त्या ज्ञानेन चैव हि । प्राप्याहं ते गिरिश्रेष्ठ नान्यथा कर्मकोटिभिः ॥२४९॥
श्रुति-स्मृत्युदितं सम्यक् कर्म वर्णाश्रमात्मकम् । अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ॥२५०॥
धर्मात् सञ्जायते भक्तिर्भक्त्या सम्प्राप्यते परम् । श्रुति-स्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ॥२५१॥
नान्यतो जायते धर्मो वेदाद्धर्मो हि निर्बभौ । तस्मान्मुमुक्षुर्धर्मार्थी मद्रूपं वेदमाश्रयेत् ॥२५२॥
ममैवैषा परा शक्तिर्वेदसंज्ञा पुरातनी । ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्त्तते ॥२५३॥
तेषामेव च गुप्त्यर्थं वेदानां भगवानजः । ब्राह्मणादीन् ससर्जाथ स्वे स्वे कर्मण्ययोजयत् ॥२५४॥
ये न कुर्वन्ति तद्धर्मं तदर्थं ब्रह्मनिर्मितम् । तेषामधस्तान्नरकांस्तामिस्रादीनकल्पयत् ॥२५५॥
न च वेदादृते किञ्चिच्छास्त्रं धर्माभिधायकम् । योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्विजातिभिः॥२५६॥
यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु । श्रुति-स्मृतिविरुद्धानि निष्ठा तेषां हि तामसी॥२५७
कापालं भैरवञ्चैव यामलं वाममार्हतम् । कापिलं पाञ्चरात्रञ्च डामरं मोहनात्मकम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥२५८॥
ये कुशास्त्राभियोगेन मोहयन्तीह मानवान् । मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे॥२५९॥
वेदार्थवित्तमैः कार्यं यत् स्मृतं कर्म वैदिकम् । तत् प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः॥२६०॥
वर्णानामनुकम्पार्थं मन्नियोगाद्विराट् स्वयम् । स्वायम्भुवो मनुर्धर्मान् मुनीनां पूर्वमुक्तवान्॥२६१॥
श्रुत्वा चान्येऽपि मुनयस्तन्मुखाद्धर्ममुत्तमम् । चक्रुर्धर्मप्रतिष्ठार्थं धर्मशास्त्राणि चैव हि ॥२६२॥
तेषु चान्तर्हितेष्वेवं युगान्तेषु महर्षयः । ब्रह्मणो वचनात् तानि करिष्यन्ति युगे-युगे ॥२६३॥
अष्टादश पुराणानि व्यासेन कथितानि तु । नियोगाद् ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ॥२६४॥
अन्यान्युपपुराणानि तच्छिष्यैः कथितानि तु । युगेयुगेऽत्र सर्वेषां कर्त्ता वै धर्मशास्त्रवित् ॥२६५॥
शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च । ज्योतिःशास्त्रं न्यायविद्या सर्वेषामुपबृंहणम् ॥२६६॥
एवं चतुर्दशैतानि तथा हि द्विजसत्तमाः । चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥२६७॥
एवं पैतामहं धर्मं मनुव्यासादयः परम् । स्थापयन्ति ममादेशाद्यावदाभूतसंप्लवम् ॥२६८॥
ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्तं कृतात्मानः प्रविशन्ति परं पदम् ॥२६९॥

तस्मात् सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् । धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत् ॥२७०॥
ये तु सङ्गान् परित्यज्य मामेव शरणं गताः । उपासते सदा भक्त्या योगमैश्वरमास्थिताः ॥२७१॥
सर्वभूतदयावन्तः शान्ता दान्ता विमत्सराः । अमानिनो बुद्धिमन्तस्तापसाः शंसितव्रताः ॥२७२॥
मच्चित्ता मद्गतप्राणा मज्ज्ञानकथने रताः । संन्यासिनो गृहस्थाश्च वनस्था ब्रह्मचारिणः॥२७३॥
तेषां नित्याभियुक्तानां मायातत्त्वं समुत्थितम् । नाशयामि तमःकृत्स्नं ज्ञानदीपेन मा चिरात्॥२७४॥
ते सुनिर्धूततमसो ज्ञानेनैकेन मन्मयाः । सदानन्दास्तु संसारे न जायन्ते पुनः पुनः ॥२७५॥
तस्मात् सर्वप्रकारेण मद्भक्तो मत्परायणः । मामेवार्च्चय सर्वत्र मनसा शरणं गतः ॥२७६॥
अशक्तो यदि मे ध्यातुमैश्वरं रूपमव्ययम् । ततो मे परमं रूपं कालाद्यं शरणं व्रज ॥२७७॥
यद्यत् स्वरूपं मे तात मनसो गोचरं तव । तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव ॥२७८॥
यत् तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् । सर्वोपाधिविनिर्मुक्तमनन्तममृतं परम् ॥२७९॥
ज्ञानेनैकेन तल्लभ्यं क्लेशेन परमं पदम् । ज्ञानमेव प्रपश्यन्तो मामेव प्रविशन्ति ते ॥२८०॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१८१॥
मामनाश्रित्य परमं निर्वाणममलं पदम् । प्राप्यते न हि राजेन्द्र ततो मां शरणं व्रज ॥२८२॥
एकत्वेन पृथक्त्वेन तथा चोभयथापि वा । मामुपास्य महीपाल ततो यास्यसि तत् पदम्॥२८३॥
मामनाश्रित्य तत् तत्त्वं स्वभावविमलं शिवम् । ज्ञायते न हि राजेन्द्र ततो मा शरणं व्रज ॥२८४॥
तस्मात् त्वमक्षरं रूपं नित्यं वा रूपमैश्वरम् । आराधय प्रयत्नेन ततो बन्धं प्रहास्यासि ॥२८५॥
कर्मणा मनसा वाचा शिवं सर्वत्र सर्वदा । समाराधय भावेन ततो यास्यसि तत्पदम् ॥२८६॥
न वै पश्यन्ति तत् तत्त्वं मोहिता मम मायया । अनाद्यनन्तं परमं महेश्वरमजं शिवम् ॥२८७॥
सर्वभूतात्मभूतस्थं सर्वाधारं निरञ्जनम् । नित्यानन्दं निराभासं निर्गुणं तमसः परम् ॥२८८॥
अद्वैतमचलं ब्रह्म निष्कलं निष्प्रपञ्चकम् । स्वसंवेद्यमवेद्यं तत् परे व्योम्नि व्यवस्थितम् ॥२८९॥
सूक्ष्मेण तमसा नित्यं वेष्टिता मम मायया । संसारसागरे घोरे जायन्ते च पुनः पुनः ॥२९०॥
भक्त्या त्वनन्यया राजन् सम्यग्ज्ञानेन चैव हि । अन्वेष्टव्यं हि तद् ब्रह्म जन्म-बन्धनिवृत्तये ॥२९१॥
अहङ्कारञ्च मात्सर्यं कामं क्रोधं परिग्रहम् । अधर्माभिनिवेशञ्च त्यक्त्वा वैराग्यमास्थितः ॥२९२॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । अवेक्ष्य चात्मनात्मानं ब्रह्मभूयाय कल्पते ॥२९३॥
ब्रह्मभूतः प्रसन्नात्मा सर्वभूताभयप्रदः । ऐश्वरीं परमां भक्तिं विन्देतानन्यभाविनीम्॥२९४॥
वीक्ष्यते तत् परं तत्त्वमैश्वरं ब्रह्म निष्कलम् । सर्वसंसारनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥२९५॥
ब्रह्मणो हि प्रतिष्ठेयं परस्य परमः शिवः । अनन्यश्चाव्ययश्चैकश्चात्माधारो महेश्वरः ॥२९६॥
ज्ञानेन कर्मयोगेण भक्त्या योगेन वा नृप । सर्वसंसारमुक्त्यर्थमीश्वरं शरणं व्रज ॥२९७॥
एष गुह्योपदेशस्ते मया दत्तो गिरीश्वर । अन्वीक्ष्य चैतदखिलं यथेष्टं कर्त्तुमर्हसि ॥२९८॥
अहं वै याचिता देवैः सञ्जाता परमेश्वरात् । विनिन्द्य दक्षं पितरं महेश्वरविनिन्दकम् ॥२९९॥
धर्मसंस्थापनार्थाय तवाराधनकारणात् । मेनादेहसमुत्पन्ना त्वामेव पितरं श्रिता ॥३००॥
स त्वं नियोगाद् देवस्य ब्रह्मणः परमात्मनः । प्रदास्यसे मां रुद्राय स्वयंवरसमागमे ॥३०१॥
तत्सम्बन्धान्तरे राजन् सर्वे देवाः सवासवाः । त्वां नमस्यन्ति वै तात प्रसीदति च शंकरः॥३०२॥
तस्मात् सर्वप्रयत्नेन मां विद्धीश्वरगोचराम् । सम्पूज्य देवमीशानं शरण्यं शरणं व्रज ॥३०३॥
स एवमुक्तो हिमवान् देवदेव्या गिरीश्वरः । प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ॥३०४॥
विस्तरेण महेशानि योगं माहेश्वरं परम् । ज्ञानं वै चात्मनो योगं साधनानि प्रचक्ष्व मे ॥३०५॥

तस्यैतत् परमं ज्ञानमात्मनो योगमुत्तमम् । यथावद् व्याजहारेशा साधनानि च विस्तरात् ॥३०६॥
निशम्य वदनाम्भोजाद् गिरीन्द्रो लोकपूजितः । लोकमातुः परं ज्ञानं योगासक्तोऽभवत् पुनः ॥३०७॥
प्रददौ च महेशाय पार्वतीं भाग्यगौरवात् । नियोगाद् ब्रह्मणः साध्वीं देवानाञ्चैव सन्निधौ ॥३०८॥
य इमं पठतेऽध्यायं देव्या माहात्म्यकीर्त्तनम् । शिवस्य सन्निधौ भक्त्या शुचिस्तद्भावभावितः ॥३०९॥
सर्वपापविनिर्मुक्तो दिव्ययोगसमन्वितः । उल्लङ्घ्य ब्रह्मणो लोकं देव्याः स्थानमवाप्नुयात् ॥३१०॥
यश्चैतत् पठते स्तोत्रं ब्राह्मणानां समीपतः । समाहितमनाः सोऽपि सर्वपापैः प्रमुच्यते ॥३११॥
नाम्नामष्टसहस्रन्तु देव्या यत् समुदीरितम् । ज्ञात्वार्कमण्डलगतामावाह्य परमेश्वरीम् ॥३१२॥
अभ्यर्च्य गन्धपुष्पाद्यैर्भक्तियोगसमन्वितः । संस्मरन् परमं भावं देव्या माहेश्वरं परम् ॥३१३॥
अनन्यमानसो नित्यं जपेदामरणाद् द्विजः । सोऽन्तकाले स्मृतिं लब्ध्वा परं ब्रह्माधिगच्छति ॥३१४॥
अथवा जायते विप्रो ब्राह्मणस्य शुचौ कुले । पूर्वसंस्कारमाहात्म्याद् ब्रह्मविद्यामवाप्नुयात् ॥३१५॥
सम्प्राप्य योगं परमं दिव्यं तत् पारमेश्वरम् । शान्तः सुसंयतो भूत्वा शिवसायुज्यमाप्नुयात् ॥३१६॥
प्रत्येकञ्चाथ नामानि जुहुयात् सवनत्रयम् । महामारीकृतैर्दोषैर्ग्रहदोषैश्च मुच्यते ॥३१७॥
जपेद्वाऽहरहर्नित्यं संवत्सरमतन्द्रितः । श्रीकामः पार्वतीं देवीं पूजयित्वा विधानतः ॥३१८॥
सम्पूज्य पार्श्वतः शम्भुं त्रिनेत्रं भक्तिसंयुतः । लभते महतीं लक्ष्मीं महादेवप्रसादतः ॥३१९॥
तस्मात् सर्वप्रयत्नेन जप्तव्यं हि द्विजातिभिः । सर्वपापापनोदार्थं देव्या नामसहस्रकम् ॥३२०॥

## सूत उवाच

प्रसङ्गात् कथितं विप्रा देव्या माहात्म्यमुत्तमम् । अतः परं प्रजासर्गं भृग्वादीनां निबोधत ॥३२१॥

इति श्रीकौर्मे महापुराणे पूर्वभागे देवीमाहात्म्ये देव्या नामसहस्रकथनं
नाम द्वादशोऽध्यायः ॥ १२ ॥

—

# त्रयोदशोऽध्यायः

## सूत उवाच

भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया । देवौ धाताविधातारौ मेरोर्जामातरौ शुभौ ॥ १ ॥
आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः । धाताविधात्रोस्ते भार्ये तयोर्जातौ सुतावुभौ ॥ २ ॥
प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः । तथा वेदशिरा नाम प्राणस्य द्युतिमान्सुतः ॥ ३ ॥
मरीचेरपि सम्भूतिः पूर्णमासमसूयत । कन्याचतुष्टयं चैव सर्वलक्षणसंयुतम् ॥ ४ ॥
तुष्टिर्ज्येष्ठा तथा वृष्टिः कृष्टिश्चापचितिस्तथा । विरजाः पर्वतश्चैव पूर्णमासस्य तौ सुतौ ॥ ५ ॥
क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः । कर्दमञ्च वरीयांसं सहिष्णुं मुनिसत्तमम् ॥ ६ ॥
तथैव च कनीयांसं तपोनिर्धूतकल्मषम् । अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ॥ ७ ॥
सोमं दुर्वाससञ्चैव दत्तात्रेयञ्च योगिनम् । स्मृतिश्चाङ्गिरसः पुत्री जज्ञे लक्षणसंयुता ॥ ८ ॥
सिनीवालीं कुहूञ्चैव राकामनुमतीमपि । प्रीत्यां पुलस्त्यो भगवान् दत्तोलिमसृजत् प्रभुः ॥ ९ ॥
पूर्वजन्मनि योऽगस्त्यः स्मृतः स्वायम्भुवेऽन्तरे । देवबाहुस्तथा कन्या द्वितीया नाम नामतः ॥१०॥

पुत्राणां षष्टिसाहस्रं सन्ततिः सुषुवे क्रतोः । ते चोर्ध्वरेतसः सर्वे बालखिल्या इति स्मृताः ॥११॥
वसिष्ठश्च तथोर्जायां सप्त पुत्रानजीजनत् । कन्याञ्च पुण्डरीकाक्षां सर्वशोभासमन्विताम् ॥१२॥
रजोमात्रोर्ध्वबाहुश्च सवनश्चानघस्तथा । सुतपाः शुक्र इत्येते सप्त पुत्रा महौजसः ॥१३॥
योऽसौ रुद्रात्मको वह्निर्ब्रह्मणस्तनयो द्विजाः । स्वाहा तस्मात् सुतांल्लेभे त्रीनुदारान् महौजसः॥१४॥
पावकः पवमानश्च शुचिरग्निश्च रूपतः । निर्मथ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः ॥१५॥
यश्चासौ तपते सूर्ये शुचिरग्निस्त्वसौ स्मृतः । तेषान्तु सन्ततावन्ये चत्वारिंशच्च पञ्च च ॥१६॥
पवमानः पावकश्च शुचिस्तेषां पिता च यः । एते चैकोनपञ्चाशद्वह्नयः परिकीर्त्तिताः ॥१७॥
सर्वे तपस्विनः प्रोक्ताः सर्वे यज्ञेषु भागिनः । रुद्रात्मकाः स्मृताः सर्वे त्रिपुण्ड्राङ्कितमस्तकाः ॥१८॥
अयज्वानश्च यज्वानः पितरो ब्रह्मणः सुताः । अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः ॥१९॥
तेभ्यः स्वधा सुतां जज्ञे मेनां वैधारिणीं तथा । ते उभे ब्रह्मवादिन्यौ योगिन्यौ मुनिसत्तमाः ॥२०॥
असूत मेना मैनाकं क्रौञ्चं तस्यानुजं तथा । गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी ॥२१॥
स्वयोगाग्निबलाद्देवी पुत्रीं लेभे महेश्वरीम् । यथावत् कथितं पूर्वं देव्या माहात्म्यमुत्तमम् ॥२२॥
एषा दक्षस्य कन्यानां मयापत्यानुसन्ततिः । व्याख्याता भवतां सद्यो मनोः सृष्टिं निबोधत ॥२३॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भृग्वादिसर्गकथनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः

### सूत उवाच

प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु । धर्मज्ञौ तौ महावीर्यौ शतरूपा व्यजीजनत् ॥ १ ॥
ततस्तूत्तानपादस्य ध्रुवो नाम सुतोऽभवत् । भक्त्या नारायणे देवे प्राप्तवान् स्थानमुत्तमम् ॥ २ ॥
ध्रुवाच्छ्लिष्टिश्च भव्यश्च भव्याच्छम्भुर्व्यजायत । शिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥ ३ ॥
वसिष्ठवचनाद्देवी तपस्तप्त्वा सुदुश्चरम् । आराध्य पुरुषं विष्णुं शालग्रामे जनार्दनम् ॥ ४ ॥
रिपुं रिपुञ्जयं विप्रं वृकलं वृकतेजसम् । नारायणपरान् शुद्धान् स्वधर्मपरिपालकान् ॥ ५ ॥
रिपोराधत्त महिषी चक्षुषं सर्वतेजसम् । सोऽजीजनत् पुष्करिण्यां सुरूपं चाक्षुषं मनुम् ॥ ६ ॥
प्रजापतेरात्मजायां वीरणस्य महात्मनः । मनोरजायन्त दश नड्वलायां महौजसः ॥ ७ ॥
कन्यायां सुमहावीर्यो वैराजस्य प्रजापतेः । ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् शुचिः ॥ ८ ॥
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चाभिमन्युकः । ऊरोरजनयत् पुत्रान् षडाग्नेयी महाबलान् ॥ ९ ॥
अङ्गं सुमनसं ख्यातिं क्रतुमाङ्गिरसं शिवम् । अङ्गाद्वेणोऽभवत् पश्चाद्वैण्यो वेणादजायत ॥१०॥
योऽसौ पृथुरिति ख्यातः प्रजापालो महाबलः । येन दुग्धा मही पूर्वं प्रजानां हितकाम्यया ।
नियोगाद् ब्रह्मणः सार्द्धं देवेन्द्रेण महौजसा ॥११॥
वेणपुत्रस्य वितते पुरा पैतामहे मखे । सूतः पौराणिको जज्ञे मायारूपः स्वयं हरिः ॥१२॥
प्रवक्ता सर्वशास्त्राणां धर्मज्ञो गुरुवत्सलः । तं मां वित्त मुनिश्रेष्ठाः पूर्वोद्भूतं सनातनम् ॥१३॥
अस्मिन् मन्वन्तरे व्यासः कृष्णद्वैपायनः स्वयम् । श्रावयामास मां प्रीत्या पुराणपुरुषो हरिः ॥१४॥
मदन्वये तु ये सूताः सम्भूता वेदवर्जिताः । तेषां पुराणवक्तृत्वं वृत्तिरासीदजाज्ञया ॥१५॥

स च वैश्यः पृथुर्धीमान् सत्यसन्धो जितेन्द्रियः । सार्वभौमो महातेजाः स्वधर्मपरिपालकः ॥१६॥
तस्य बाल्यात् प्रभृत्येव भक्तिर्नारायणेऽभवत् । गोवर्धनगिरिं प्राप्तस्तपस्तेपे जितेन्द्रियः ॥१७॥
तपसा भगवान् प्रीतः शङ्ख - चक्र - गदाधरः । आगत्य देवो राजानं प्राह दामोदरः स्वयम् ॥१८॥
धार्मिकौ रूपसम्पन्नौ सर्वशस्त्रभृतां वरौ । मत्प्रसादादसन्दिग्धं पुत्रौ तव भविष्यतः ।
एवमुक्त्वा हृषीकेशः स्वकीयां प्रकृतिं गतः ॥१९॥
सोऽपि कृष्णे महातेजा निश्चलां भक्तिमुद्वहन् । सोऽपालयत् स्वकं राज्यं चिन्तयन् मधुसूदनम् ॥२०॥
अचिरादेव तन्वङ्गी भार्या तस्य शुचिस्मिता । शिखण्डिनं हविर्द्धानमन्तर्द्धानं व्यजायत ॥२१॥
शिखण्डिनोऽभवत् पुत्रः सुशील इति विश्रुतः । धार्मिको रूपसम्पन्नो वेदवेदाङ्गपारगः ॥२२॥
सोऽधीत्य विधिवद्वेदान् धर्मेण तपसि स्थितः । मतिं चक्रे भाग्ययोगात् संन्यासं प्रति धर्मवित् ॥२३॥
स कृत्वा तीर्थसंसेवां स्वाध्याये तपसि स्थितः । जगाम हिमवत्पृष्ठं कदाचित् सिद्धसेवितम् ॥२४॥
तत्र धर्मपदं नाम धर्मसिद्धिप्रदं वनम् । अपश्यद्योगिनां गम्यमगम्यं ब्रह्मविद्विषाम् ॥२५॥
तत्र मन्दाकिनी नाम सुपुण्या विमला नदी । पद्मोत्पलवनोपेता सिद्धाश्रमविभूषिता ॥२६॥
स तस्या दक्षिणे तीरे मुनीन्द्रैर्योगिभिर्युतम् । सुपुण्यमाश्रमं रम्यमपश्यत् प्रीतिसंयुतः ॥२७॥
मन्दाकिनीजले स्नात्वा सन्तर्प्य पितृ - देवताः । अर्चयित्वा महादेवं पुष्पैः पद्मोत्पलादिभिः ॥२८॥
ध्यात्वाऽर्कसंस्थमीशानं शिरस्याधाय चाञ्जलिम् । सम्प्रेक्षमाणो भास्वन्तं तुष्टाव परमेश्वरम् ॥२९॥
रुद्राध्यायेन गिरिशं रुद्रस्य चरितेन च । अन्यैश्च विविधैः स्तोत्रैः शाम्भवैर्वेदसम्भवैः ॥३०॥
अथास्मिन्नन्तरेऽपश्यत् समायान्तं महामुनिम् । श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥३१॥
भस्मसन्दिग्धसर्वाङ्गं कौपीनाच्छादनान्वितम् । तपसा कर्शितात्मानं शुक्लयज्ञोपवीतिनम् ॥३२॥
समाप्य संस्तवं शम्भोरानन्दास्राविलेक्षणः । ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत् ॥३३॥
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे साक्षान्मुनीश्वरः । योगीश्वरोऽद्य भगवान् दृष्टो योगविदांवरः ॥३४॥
अहो मे सुमहद्भाग्यं तपांसि सफलानि मे । किं करिष्यामि शिष्योऽहं तव मां पालयानघ ॥३५॥
सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम् । शिष्यत्वे प्रतिजग्राह तपसा क्षीणकल्मषम् ॥३६॥
सांन्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः । ददौ तदैश्वरं ज्ञानं स्वशाखाविहितव्रतम् ॥३७॥
अशेषं वेदसारं तत् पशुपाशविमोचनम् । अन्त्याश्रममिति ख्यातं ब्रह्मादिभिरनुष्ठितम् ॥३८॥
उवाच शिष्यान् सम्प्रेक्ष्य ये तदाश्रमवासिनः । ब्राह्मणाः क्षत्रिया वैश्या ब्रह्मचर्यपरायणाः ॥३९॥
मया प्रवर्त्तितां शाखामधीत्यैवेह योगिनः । समासते महादेवं ध्यायन्तो निष्कलं शिवम् ॥४०॥
इह देवो महादेवो रममाणः सहोमया । अध्यास्ते भगवानीशो भक्तानामनुकम्पया ॥४१॥
इहाशेषजगद्धाता पुरा नारायणः स्वयम् । आराधयन् महादेवं लोकानां हितकाम्यया ॥४२॥
इहैव देवमीशानं देवानामपि दैवतम् । आराध्य महतीं सिद्धिं लेभिरे देव-दानवाः ॥४३॥
इहैव मुनयः सर्वे मरीच्याद्या महेश्वरम् । दृष्ट्वा तपोबलाज्ज्ञानं लेभिरे सर्वकालिकम् ॥४४॥
तस्मात् त्वमपि राजेन्द्र तपोयोगसमन्वितः । तिष्ठ नित्यं मया सार्द्धं ततः सिद्धिमवाप्स्यसि ॥४५॥
एवमाभाष्य विप्रेन्द्रो देवं ध्यात्वा पिनाकिनम् । आचचक्षे महामन्त्रं यथावत् सर्वसिद्धये ॥४६॥
सर्वपापोपशमनं वेदसारं विमुक्तिदम् । अग्निरित्यादिकं पुण्यमृषिभिः सम्प्रवर्त्तितम् ॥४७॥
सोऽपि तद्वचनाद्राजा सुशीलः श्रद्धयान्वितः । साक्षात् पाशुपतो भूत्वा वेदाभ्यासरतोऽभवत् ॥४८॥
भस्मोद्धूलितसर्वाङ्गः कन्द - मूल - फलाशनः । शान्तो दान्तो जितक्रोधः संन्यासविधिमाश्रितः ॥४९॥
हविर्द्धानस्तथाग्नेय्यां जनयामास वै सुतम् । प्राचीनबर्हिषं नाम्ना धनुर्वेदस्य पारगम् ॥५०॥

प्राचीनबर्हिर्भगवान् सर्वशस्त्रभृतांवरः । समुद्रतनयायां वै दश पुत्रानजीजनत् ॥५१॥
प्रचेतसस्ते विख्याता राजानः प्रथितौजसः । अधीतवन्तः स्वं वेदं नारायणपरायणाः ॥५२॥
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । दक्षो जज्ञे महाभागो यः पूर्वं ब्रह्मणः सुतः ॥५३॥
स तु दक्षो महेशेन रुद्रेण सह धीमता । कृत्वा विवादं रुद्रेण शप्तः प्राचेतसोऽभवत् ॥५४॥
समायातं महादेवो दक्षं देव्या गृहं हरः । दृष्ट्वा यथोचितां पूजां दक्षाय प्रददौ स्वयम् ॥५५॥
तदा वै तमसाविष्टः सोऽधिकां ब्रह्मणः सुतः । पूजामनर्हामन्विच्छन् जगाम कुपितो गृहम् ॥५६॥
कदाचित् स्वगृहं प्राप्तां सतीं दक्षः सुदुर्मनाः । भर्त्रा सह विनिन्द्यैनां भर्त्सयामास वै रुषा ॥५७॥
अन्ये जामातरः श्रेष्ठा भर्तुस्तव पिनाकिनः । त्वमप्यसत्सुतास्माकं गृहाद् गच्छ यथागतम् ॥५८॥
तस्य तद्वाक्यमाकर्ण्य सा देवी शङ्करप्रिया । विनिन्द्य पितरं दक्षं ददाहात्मानमात्मना ॥५९॥
प्रणम्य पशुभर्तारं भर्तारं कृत्तिवाससम् । हिमवद्दुहिता साभूत् तपसा तस्य तोषिता ॥६०॥
ज्ञात्वा तु भगवान् रुद्रः प्रपन्नार्तिहरो हरः । शशाप दक्षं कुपितः समागत्याथ तद्गृहम् ॥६१॥
त्यक्त्वा देहमिमं ब्राह्मं क्षत्रियाणां कुले भव । स्वस्यां सुतायां मूढात्मा पुत्रमुत्पादयिष्यसि ॥६२॥
एवमुक्त्वा महादेवो ययौ कैलासपर्वतम् । स्वायम्भुवोऽपि कालेन दक्षः प्राचेतसोऽभवत् ॥६३॥
एतद्वः कथितं सर्वं मनोः स्वायम्भुवस्य तु । निसर्गं दक्षपर्यन्तं शृण्वतां पापनाशनम् ॥६४॥

इति श्रीकौर्मे महापुराणे पूर्वभागे स्वायम्भुवमनुसर्गकथनं नाम चतुर्दशोऽध्याय; ॥१४॥

---

## पञ्चदशोऽध्यायः

### नैमिषेया ऊचुः

देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम् । उत्पत्तिं विस्तराद् ब्रूहि सूत वैवस्वतेऽन्तरे ॥ १ ॥
स शप्तः शम्भुना पूर्वं दक्षः प्राचेतसो नृपः । किमकार्षीन्महाबुद्धे श्रोतुमिच्छाम साम्प्रतम् ॥ २ ॥

### सूत उवाच

वक्ष्ये नारायणेनोक्तं पूर्वकल्पानुषङ्गिकम् । त्रिकालबद्धपापघ्नं प्रजासर्गस्य विस्तरम् ॥ ३ ॥
स शप्तः शम्भुना पूर्वं दक्षः प्राचेतसो नृपः । विनिन्द्य पूर्ववैरेण गङ्गाद्वारेऽयजद्धरिम् ॥ ४ ॥
देवाश्च सर्वे भागार्थमाहूता विष्णुना सह । सहैव मुनिभिः सर्वैरागता मुनिपुङ्गवाः ॥ ५ ॥
दृष्ट्वा देवकुलं कृत्स्नं शङ्करेण विनागतम् । दधीचो नाम विप्रर्षिः प्राचेतसमथाब्रवीत् ॥ ६ ॥

### दधीच उवाच

ब्रह्मादयः पिशाचान्ता यस्याज्ञानुविधायिनः । स देवः साम्प्रतं रुद्रो विधिना किं न पूज्यते ॥ ७ ॥

### दक्ष उवाच

सर्वेष्वेव हि यज्ञेषु न भागः परिकल्पितः । न मन्त्रा भार्यया सार्द्धं शङ्करस्येति नेज्यते ॥ ८ ॥
विहस्य दक्षं कुपितो वचः प्राह महामुनिः । शृण्वतां सर्वदेवानां सर्वज्ञानमयः स्वयम् ॥ ९ ॥

## दधीच उवाच

यतः प्रवृत्तिर्विश्वात्मा यश्चासौ परमेश्वरः । सम्पूज्यते सर्वयज्ञैर्विदित्वा किं न शङ्करः ॥१०॥

## दक्ष उवाच

न ह्ययं शङ्करो रुद्रः संहर्त्ता तामसो हरः । नग्नः कपाली विदितो विश्वात्मा नोपपद्यते ॥११॥
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो हरिः । सत्त्वात्मकोऽसौ भगवानिज्यते सर्वकर्मसु ॥१२॥

## दधीच उवाच

किं त्वया भगवानेषु सहस्रांशुर्न दृश्यते । सर्वलोकैकसंहर्त्ता कालात्मा परमेश्वरः ॥१३॥
यं गृणन्तीह विद्वांसो धार्मिका ब्रह्मवादिनः । सोऽयं साक्षी तीव्ररोचिः कालात्मा शाङ्करी तनुः॥१४॥
एष रुद्रो महादेवः कपाली च घृणी हरः । आदित्यो भगवान् सूर्यो नीलग्रीवो विलोहितः॥१५॥
संस्तूयते सहस्रांशुः सामगाध्वर्युहोतृभिः । पश्यैनं विश्वकर्माणं रुद्रमूर्त्तिं त्रयीमयीम् ॥१६॥

## दक्ष उवाच

य एते द्वादशादित्या आगता यज्ञभागिनः । सर्वे सूर्या इति ख्याता न ह्यन्यो विद्यते रविः॥१७॥
एवमुक्ते तु मुनयः समायाता दिदृक्षवः । वाढमित्यब्रुवन् दक्षं तस्य साहाय्यकारिणः ॥१८॥
तमसाविष्टमनसो न पश्यन्तो वृषध्वजम् । सहस्रशोऽथ शतशो बहुशो भूय एव हि ॥१९॥
निदन्तो वैदिकान् मन्त्रान् सर्वभूतपतिं हरम् । अपूजयन् दक्षवाक्यं मोहिता विष्णुमायया ॥२०॥
देवाश्च सर्वे भागार्थमागता वासवादयः । नापश्यन् देवमीशानमृते नारायणं हरिम् ॥२१॥
हिरण्यगर्भो भगवान् ब्रह्मा ब्रह्मविदांवरः । पश्यतामेव सर्वेषां क्षणादन्तरधीयत ॥२२॥
अन्तर्हिते भगवति दक्षो नारायणं हरिम् । रक्षकं जगतां देवं जगाम शरणं स्वयम् ॥२३॥
प्रवर्तयामास च तं यज्ञं दक्षोऽथ निर्भयः । रक्षको भगवान् विष्णुः शरणागतरक्षकः ॥२४॥
पुनः प्राह च तं दक्षं दधीचो भगवानृषिः । सम्प्रेक्ष्यर्षिगणान् देवान् सर्वान् वै रुद्रविद्विषः ॥२५॥
अपूज्यपूजने चैव पूज्यानाञ्चाप्यपूजने । नरः पापमवाप्नोति महद्वै नात्र संशयः ॥२६॥
असतां प्रग्रहो यत्र सताञ्चैव विमानना । दण्डो दैवकृतस्तत्र सद्यः पतति दारुणः ॥२७॥
एवमुक्त्वाथ विप्रर्षिः शशापेश्वरविद्विषः । समागतान् ब्राह्मणांस्तान् दक्षसाहायकारिणः ॥२८॥
यस्माद् बहिष्कृतो वेदाद् भवद्भिः परमेश्वरः । विनिन्दितो महादेवः शङ्करो लोकवन्दितः ॥२९॥
भविष्यन्ति त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः । निन्दन्तीहैश्वरं मार्गं कुशास्त्रासक्तचेतसः ॥३०॥
मिथ्याधीतसमाचारा मिथ्याज्ञानप्रलापिनः । प्राप्य घोरं कलियुगं कलिजैः परिपीडिताः ॥३१॥
त्यक्त्वा तपोबलं कृत्स्नं गच्छध्वं नरकान् पुनः। भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः ॥३२॥
एवमुक्त्वाथ विप्रर्षिर्विरराम तपोनिधिः । जगाम मनसा रुद्रमशेषाघविनाशनम् ॥३३॥
एतस्मिन्नन्तरे देवी महादेवी महेश्वरी । पतिं पशुपतिं देवं ज्ञात्वैतत् प्राह सर्वदृक् ॥३४॥

## देव्युवाच

दक्षो यज्ञेन यजते पिता मे पूर्वजन्मनि । विनिन्द्य भवतो भावमात्मानञ्चापि शङ्कर ॥३५॥
देवा महर्षयश्चासंस्तत्र साहायकारिणः । विनाशयाशु तं यज्ञं वरमेतं वृणोम्यहम् ॥३६॥
एवं विज्ञापितो देव्या देवदेवः परः प्रभुः । ससर्ज सहसा रुद्रं दक्षयज्ञजिघांसया ॥३७॥

सहस्रशीर्षपादश्च सहस्राक्षं महाभुजम् । सहस्रपाणिं दुर्द्धर्षं युगान्तानलसन्निभम् ॥३८॥
दंष्ट्राकरालं दुष्प्रेक्ष्यं शङ्खचक्रधरं प्रभुम् । दण्डहस्तं महानादं शार्ङ्गिणं भूतिभूषणम् ॥३९॥
वीरभद्र इति ख्यातं देवदेवसमन्वितम् । स जातमात्रो देवेशमुपतस्थे कृताञ्जलिः ॥४०॥
तमाह दक्षस्य मखं विनाशय शिवोस्त्विति । विनिन्द्य मां स यजते गङ्गाद्वारे गणेश्वरः ॥४१॥
ततो बन्धप्रमुक्तेन सिंहेनेवेत्य लीलया । वीरभद्रेण दक्षस्य विनाशमगमत् क्रतुः ॥४२॥
मन्युना चोमया सृष्टा भद्रकाली महेश्वरी । तया च सार्धं वृषभं समारुह्य ययौ गणः ॥४३॥
अन्ये सहस्रशो रुद्रा निसृष्टास्तेन धीमता । रोमजा इति विख्यातास्तस्य साहायकारिणः ॥४४॥
शूल-शक्ति-गदाहस्ता दण्डोपलकरास्तथा । कालाग्निरुद्रसङ्काशा नादयन्तो दिशो दश ॥४५॥
सर्वे वृषभमारूढाः सभार्याश्चातिभीषणाः । समावृत्य गणश्रेष्ठं ययुर्दक्षमखं प्रति ॥४६॥
सर्वे सम्प्राप्य तं देशं गङ्गाद्वारमिति श्रुतम् । ददृशुर्यज्ञदेशं वै दक्षस्यामिततेजसः ॥४७॥
देवाङ्गनासहस्राढ्यमप्सरोगीतनादितम् । वीणावेणुनिनादाढ्यं वेदवादाभिनादितम् ॥४८॥
दृष्ट्वा सहर्षिभिर्देवैः समासीनं प्रजापतिम् । उवाच भद्रया रुद्रैर्वीरभद्रः स्मयन्निव ॥४९॥
वयं ह्यनुचराः सर्वे शर्वस्यामिततेजसः । भागार्थं लिप्सया प्राप्ता भागान् यच्छत्वभीप्सितान् ॥५०॥
अथ चेत् कस्यचिदियमाज्ञा मुनिवरोत्तमाः । भागो भवद्भ्यो देयस्तु नास्मभ्यमिति कथ्यताम् ।
तं ब्रूताज्ञापयति यो वेत्स्यामो हि वयं ततः ॥५१॥
एवमुक्ता गणेशेन प्रजापतिपुरःसराः । देवा ऊचुर्यज्ञभागे न च मन्त्रा इति प्रभो ॥५२॥
मन्त्रा ऊचुः सुरा यूयं तमोपहतचेतसः । ये नाध्वरस्य राजानं पूजयेयुर्महेश्वरम् ॥५३॥
ईश्वरः सर्वभूतानां सर्वदेवतनुर्हरः । पूज्यते सर्वयज्ञेषु सर्वाभ्युदयसिद्धिदः ॥५४॥
एवमुक्त्वा महेशानं मायया नष्टचेतनाः । न मेनिरे ययुर्मन्त्रा देवान् मुक्त्वा स्वमालयम् ॥५५॥
ततः स भद्रो भगवान् सभार्यः सगणेश्वरः । स्पृशन् कराभ्यां विप्रर्षिर्दधीचं प्राह देवताः ॥५६॥
मन्त्राः प्रमाणं न कृता युष्माभिर्बलदर्पितैः । यस्मात् प्रसह्य तस्माद्वो नाशयाम्यद्य गर्वितान् ॥५७॥
इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः । गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ॥५८॥
प्रस्तोत्रा सह होत्रा च अश्वश्चैव गणेश्वराः । गृहीत्वा भीषणाः सर्वे गङ्गास्रोतसि चिक्षिपुः ॥५९॥
वीरभद्रोऽपि दीप्तात्मा शक्रस्यैवोद्यतं करम् । व्यष्टम्भददीनात्मा तथान्येषां दिवौकसाम् ॥६०॥
भगस्य नेत्रे चोत्पाट्य करजाग्रेण लीलया । निहत्य मुष्टिना दन्तान् पूष्णश्चैवमपातयत् ॥६१॥
तथा चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया । धर्षयामास बलवान् स्मयमानो गणेश्वरः ॥६२॥
वह्नेर्हस्तद्वयं छित्त्वा जिह्वामुत्पाट्य लीलया । जघान मूर्ध्नि पादेन मुनीनपि मुनीश्वराः ॥६३॥
तथा विष्णुं सगरुडं समायान्तं महाबलः । विव्याध निशितैर्बाणैः स्तम्भयित्वा सुदर्शनम् ॥६४॥
समालोक्य महाबाहुरागत्य गरुडो गणम् । जघान पक्षैः सहसा ननादाम्बुनिधिर्यथा ॥६५॥
ततः सहस्रशो भद्रः ससर्ज गरुडान् स्वयम् । वैनतेयादभ्यधिकान् गरुडं ते प्रदुद्रुवुः ॥६६॥
तान् दृष्ट्वा गरुडो धीमान् पलायत महाजवः । विसृज्य माधवं वेगात् तदद्भुतमिवाभवत् ॥६७॥
अन्तर्हिते वैनतेये भगवान् पद्मसम्भवः । आगत्य वारयामास वीरभद्रञ्च केशवम् ॥६८॥
प्रसादयामास च तं गौरवात् परमेष्ठिनः । संस्तूय भगवानीशं शम्भुस्तत्रागमत् स्वयम् ॥६९॥
वीक्ष्य देवाधिदेवं तं साम्बं सर्वगुणैर्युतम् । तुष्टाव भगवान् ब्रह्मा दक्षः सर्वे दिवौकसः ॥७०॥
विशेषात् पार्वतीं देवीमीश्वरार्द्धशरीरिणीम् । स्तोत्रैर्नानाविधैर्दक्षः प्रणम्य च कृताञ्जलिः ॥७१॥
ततो भगवती देवी प्रहसन्ती महेश्वरम् । प्रसन्नमनसा रुद्रं वचः प्राह घृणानिधिः ॥७२॥

त्वमेव जगतः स्रष्टा शासिता चैव रक्षिता । अनुग्राह्यो भगवता दक्षश्चापि दिवौकसः ।७३।।
ततः प्रहस्य भगवान् कपर्द्दी नीललोहितः । उवाच प्रणतान् देवान् प्राचेतसमथो हरः ।।७४।।
गच्छध्वं देवताः सर्वाः प्रसन्नो भवतामहम् । सम्पूज्यः सर्वयज्ञेषु न निन्द्योऽहं विशेषतः ।।७५।।
त्वञ्चापि शृणु मे दक्ष वचनं सर्वरक्षणम् । त्यक्त्वा लोकैषणामेतां मद्भक्तो भव यत्नतः ।।७६।।
भविष्यसि गणेशानः कल्पान्तेऽनुग्रहान्मम । तावत् तिष्ठ ममादेशात् स्वाधिकारेषु निर्वृतः।।७७।।
एवमुक्त्वा तु भगवान् सपत्नीकः सहानुगः । अदर्शनमनुप्राप्तो दक्षस्यामिततेजसः ।।७८।।
अन्तर्हिते महादेवे शङ्करे पद्मसम्भवः । व्याजहार स्वयं दक्षमशेषजगतो हितम् ।।७९।।

## ब्रह्मोवाच

किं तवापगतो मोह प्रसन्ने वृषभध्वजे । यदा त्वं स्वयं देवः पालयैतदतन्द्रितः ।।८०।।
सर्वेषामेव भूतानां हृद्येष वसतीश्वरः । पश्यन्ति यं ब्रह्मभूता विद्वांसो वेदवादिनः ।।८१।।
स चात्मा सर्वभूतानां स बीजं परमा गतिः । स्तूयते वैदिकैर्मन्त्रैर्देवदेवो महेश्वरः ।।८२।।
तमर्चयन्ति ये रुद्र स्वात्मना च सनातनम् । चेतसा भावयुक्तेन ते यान्ति परमं पदम् ।।८३।।
तस्मादनादिमध्यान्तं विज्ञाय परमेश्वरम् । कर्मणा मनसा वाचा समाराधय यत्नतः ।।८४।।
यत्नात् परिहरेशस्य निन्दां स्वात्मविनाशनीम् । भवन्ति सर्वदोषाय निन्दकस्य क्रिया हि ताः।।८५।।
यस्तवैष महायोगी रक्षको विष्णुरव्ययः । स देवो भगवान् रुद्रो महादेवो न संशयः ।।८६।।
मन्यन्ते ये जगद्योनिं विभिन्नं विष्णुमीश्वरात् । मोहादवेदनिष्ठत्वात् ते यान्ति नरकं नराः ।।८७।।
वेदानुवर्त्तिनो रुद्रं देवं नारायणं तथा । एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते ।।८८।।
यो विष्णुः स स्वयं रुद्रो यो रुद्रः स जनार्दनः । इति मत्वा भजेद्देवं स याति परमां गतिम् ।।८९।।
सृजत्येष जगत् सर्वं विष्णुस्तत् पश्यतीश्वरः । इत्थं जगत् सर्वमिदं रुद्र - नारायणोद्भवम् ।।९०।।
तस्मात् त्यक्त्वा हरेर्निन्दां हरे चापि समाहितः । समाश्रय महादेवं शरण्यं ब्रह्मवादिनाम् ।।९१।।
उपश्रुत्याथ वचनं विरिञ्चस्य प्रजापतिः । जगाम शरणं देवं गोपतिं कृत्तिवाससम् ।।९२।।
येऽन्ये शापाग्निनिर्दग्धा दधीचस्य महर्षयः । द्विषन्तो मोहिता देवं सम्बभूवुः कलिष्वथ ।।९३।।
त्यक्त्वा तपोबलं कृत्स्नं विप्राणां कुलसम्भवाः । पूर्वसंस्कारमाहात्म्याद् ब्रह्मणो वचनादिह ।।९४।।
मुक्तशापास्ततः सर्वे कल्पान्ते रौरवादिषु । निपात्यमानाः कालेन सम्प्राप्यादित्यवर्चसम् ।।९५।।
ब्रह्माणं जगतामीशमनुज्ञाताः स्वयम्भुवा । समाराध्य तपोयोगादीशानं त्रिदशाधिपम् ।
भविष्यन्ति यथापूर्वं शङ्करस्य प्रसादतः ।।९६।।
एतद्वः कथितं सर्वं दक्षयज्ञनिसूदनम् । शृणुध्वं दक्षपुत्रीणां सर्वासाञ्चैव सन्ततिम् ।।९७।।

इति श्रीकौर्मे महापुराणे पूर्वभागे दक्षयज्ञविध्वंसो नाम पञ्चदशोऽध्यायः ।। १५ ।।

---

# षोडशोऽध्यायः

## सूत उवाच

प्रजाः सृजेति सन्दिष्टः पूर्वं दक्षः स्वयम्भुवा । ससर्ज देवान् गन्धर्वानृषींश्चैवासुरोरगान् ॥ १ ॥
यदास्य सृजतः पूर्वं न व्यवर्धन्त ताः प्रजाः । तदा ससर्ज भूतानि मैथुनेनैव धर्मतः ॥ २ ॥
असिक्न्यां जनयामास वीरणस्य प्रजापतेः । सुतायां धर्मयुक्तायां पुत्राणान्तु सहस्रकम् ॥ ३ ॥
तेषु पुत्रेषु नष्टेषु मायया नारदस्य तु । षष्टिं दक्षोऽसृजत् कन्या वैरिण्यां वै प्रजापतिः॥ ४ ॥
ददौ स दश धर्माय कश्यपाय त्रयोदश । विंशत् सप्त च सोमाय चतस्रोऽरिष्टनेमये ॥ ५ ॥
द्वे चैव बहुपुत्राय द्वे कृशाश्वाय धीमते । द्वे चैवाङ्गिरसे तद्वत् तासां वक्ष्येऽथ विस्तरम्॥ ६ ॥
मरुत्वती वसुर्यामी लम्बा भानुररुन्धती । सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च भामिनी॥७॥
धर्मपत्न्यो दश त्वेतास्तासां पुत्रान् निबोधत । विश्वेदेवास्तु विश्वायां साध्या साध्यानजीजनत्॥८॥
मरुत्वत्यां मरुत्वन्तो वसवोऽष्टौ वसोः सुताः । भानोस्तु भानवश्चैव मुहूर्त्तास्तु मुहूर्त्तजाः ॥ ९ ॥
लम्बायाश्चाथ घोषो वै नागवीथी तु यामिजा । पृथिवीविषयं सर्वमरुन्धत्यामजायत ॥१०॥
संकल्पायास्तु संकल्पो धर्मपुत्रा दश स्मृताः । ये त्वनेकवसुप्राणा देवा ज्योतिःपुरोगमाः ॥११॥
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् । आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ॥१२॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः । आपस्य पुत्रो वैतण्ड्यःश्रमःशान्तो ध्वनिस्तथा॥१३॥
ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः । सोमस्य भगवान् वर्चा धरस्य द्रविणः सुतः ॥१४॥
मनोजवोऽनिलस्यासीदविज्ञातगतिस्तथा । कुमारो ह्यनलस्यासीत् सेनापतिरिति स्मृतः ॥१५॥
देवलो भगवान् योगी प्रत्यूषस्याभवत् सुतः । विश्वकर्मा प्रभासस्य शिल्पकर्त्ता प्रजापतिः ॥१६॥
अदितिर्दितिर्दनुस्तद्वदरिष्टा सुरसा खसा । सुरभिर्विनता चैव ताम्रा क्रोधवशा त्विरा ।
कद्रुर्मुनिश्च धर्मज्ञा तत्पुत्रान् वै निबोधत ॥१७॥
अंशो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा । विवस्वान् सविता पूषा ह्यंशुमान् विष्णुरेव च॥१८॥
तुषिता नाम ते पूर्वं चाक्षुषस्यान्तरे मनोः । वैवस्वतेऽन्तरे प्राप्ते आदित्याश्चादितेः सुताः॥१९॥
दितिः पुत्रद्वयं लेभे कश्यपाद्बलगर्वितम् । हिरण्यकशिपुं ज्येष्ठं हिरण्याक्षं तथानुजम् ॥२०॥
हिरण्यकशिपुर्दैत्यो महाबलपराक्रमः । आराध्य तपसा देवं ब्रह्माणं परमेष्ठिनम् ।
दृष्ट्वा लेभे वरान् दिव्यान् स्तुत्वाऽसौ विविधैः स्तवैः ॥२१॥
अथ तस्य बलाद्देवाः सर्व एव महर्षयः । बाधितास्ताडिता जग्मुर्देवदेवं पितामहम् ॥२२॥
शरण्यं शरणं देवं शम्भुं सर्वजगन्मयम् । ब्रह्माणं लोककर्त्तारं त्रातारं पुरुषं परम् ।
कूटस्थं जगतामेकं पुराणं पुरुषोत्तमम् ॥२३॥
स याचितो देववरैर्मुनिभिश्च मुनीश्वराः । सर्वदेवहितार्थाय जगाम कमलासनः ॥२४॥
संस्तूयमानः प्रणतैर्मुनीन्द्रैरमरैरपि । क्षीरोदस्योत्तरं कूलं यत्रास्ते हरिरीश्वरः ॥२५॥
दृष्ट्वा देवं जगद्योनिं विष्णुं विश्वगुरुं शिवम् । ववन्दे चरणौ मूर्ध्ना कृताञ्जलिरभाषत ॥२६॥

## ब्रह्मोवाच

त्वं गतिः सर्वभूतानामनन्तोऽस्यखिलात्मकः । व्यापी सर्वामरवपुर्महायोगी सनातनः ॥२७॥
त्वमात्मा सर्वभूतानां प्रधानं प्रकृतिः परा । वैराग्यैश्वर्यनिरतो वागतीतो निरञ्जनः ॥२८॥

त्वं कर्त्ता चैव भर्त्ता च निहन्ता च सुरद्विषाम् । त्रातुमर्हस्यनन्तेश त्रातासि परमेश्वरः ॥२९॥
इत्थं स विष्णुर्भगवान् ब्रह्मणा सम्प्रबोधितः । प्रोवाचोन्निद्रपद्माक्षः पीतवासाः सुरान् द्विजाः॥३०॥
किमर्थं सुमहावीर्याः सप्रजापतिकाः सुराः । इमं देशमनुप्राप्ताः किं वा कार्यं करोमि वः ॥३१॥

## देवा ऊचुः

हिरण्यकशिपुर्नाम ब्रह्मणो वरदर्पितः । बाधते भगवन् दैत्यो देवान् सर्वान् महर्षिभिः॥३२॥
अवध्यः सर्वभूतानां त्वामृते पुरुषोत्तमम् । हन्तुमर्हसि सर्वेषां त्रातासि त्वं जगन्मय ॥३३॥
श्रुत्वा तद्दैवतैरुक्तं स विष्णुर्लोकभावनः । वधाय दैत्यमुख्यस्य सोऽसृजत् पुरुषं स्वयम् ॥३४॥
मेरुपर्वतवर्ष्माणं घोररूपं भयानकम् । शङ्ख-चक्र-गदापाणिं तं प्राह गरुडध्वजः ॥३५॥
हत्वा तं दैत्यराजानं हिरण्यकशिपुं पुनः । इमं देशं समागन्तुं क्षिप्रमर्हसि पौरुषात् ॥३६॥
निशम्य वैष्णवं वाक्यं प्रणम्य पुरुषोत्तमम् । महापुरुषमव्यक्तं ययौ दैत्यमहापुरम् ॥३७॥
विमुञ्चन् भैरवं नादं शङ्ख - चक्र - गदाधरः । आरुह्य गरुडं देवो महामेरुरिवापरः ॥३८॥
आकर्ण्य दैत्यप्रवरा महामेघरवोपमम् । समञ्च चक्रिरे नादं तथा दैत्यपतेर्भयात् ॥३९॥

## असुरा ऊचुः

कश्चिदागच्छति महान् पुरुषो देवनोदितः । विमुञ्चन् भैरवं नादं तं जानीमो जनार्दनम् ॥४०॥
ततः सहासुरवरैर्हिरण्यकशिपुः स्वयम् । सन्नद्धैः सायुधैः पुत्रैः प्रह्लादाद्यैस्तदा ययौ ॥४१॥
दृष्ट्वा तं गरुडारूढं सूर्यकोटिसमप्रभम् । पुरुषं पर्वताकारं नारायणमिवापरम् ।
दुद्रुवुः केचिदन्योन्यमूचुः सम्भ्रान्तलोचनाः ॥४२॥
अयं स देवो देवानां गोप्ता नारायणो रिपुः । अस्माकमव्ययो नूनं तत्सुतो वा समागतः ॥४३॥
इत्युक्त्वा शस्त्रवर्षाणि ससृजुः पुरुषाय ते । स तानि चाक्षतो देवो नाशयामास लीलया ॥४४॥
तदा हिरण्यकशिपोश्चत्वारः प्रथितौजसः । पुत्रा नारायणोद्भूतं युयुधुर्मेघनिस्वनाः ॥४५॥
प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद एव च ॥४६॥
प्रह्लादः प्राहिणोद् ब्राह्ममनुह्लादोऽथ वैष्णवम् । संह्लादश्चापि कौमारमाग्नेयं ह्लाद एव च ॥४७॥
तानि तं पुरुषं प्राप्य चत्वार्यस्त्राणि वैष्णवम् । न शेकुश्चालितुं विष्णुं वासुदेवं यथातथम् ॥४८॥
अथासौ चतुरः पुत्रान् महाबाहुर्महाबलः । प्रगृह्य पादेषु करैश्चिक्षेप च ननाद च ॥४९॥
विमुक्तेष्वथ पुत्रेषु हिरण्यकशिपुः स्वयम् । पादेन ताडयामास वेगेनोरसि तं बली ॥५०॥
स तेन पीडितोऽत्यर्थं गरुडेन सहानुगः । अदृश्यः प्रययौ तूर्णं यत्र नारायणः प्रभुः ॥५१॥
गत्वा विज्ञापयामास प्रवृत्तमखिलं तदा । सञ्चिन्त्य मनसा देवः सर्वज्ञानमयोऽमलः ॥५२॥
नरस्यार्धतनुं कृत्वा सिंहस्यार्द्धतनुं तथा । नृसिंहवपुरव्यक्तो हिरण्यकशिपोः पुरे ॥५३॥
आविर्बभूव सहसा मोहयन् दैत्य-दानवान् । दंष्ट्राकरालो योगात्मा युगान्तदहनोपमः ॥५४॥
समारुह्यात्मनः शक्तिं सर्वसंहारकारिकाम् । भाति नारायणोऽनन्तो यथा मध्यन्दिने रविः॥५५॥
दृष्ट्वा नृसिंहं पुरुषं प्रह्लादं ज्येष्ठपुत्रकम् । वधाय प्रेरयामास नरसिंहस्य सोऽसुरः ॥५६॥
इमं नृसिंहं पुरुषं पूर्वस्मादूनशक्तिकम् । सहैव तेऽनुजैः सर्वैर्नाशयाशु मयेरितः ॥५७॥
स तन्नियोगादसुरः प्रह्लादो विष्णुमव्ययम् । युयुधे सर्वयत्नेन नरसिंहेन निर्जितः ॥५८॥
ततः सञ्चोदितो दैत्यो हिरण्याक्षस्तदानुजः । ध्यात्वा पशुपतेरस्त्रं ससर्ज च ननाद च ॥५९॥

तस्य देवाधिदेवस्य विष्णोरमिततेजसः । न हानिमकरोदस्त्रं यथा देवस्य शूलिनः ॥६०॥
दृष्ट्वा पराहतं त्वस्त्रं प्रह्लादो भाग्यगौरवात् । मेने सर्वात्मकं देवं वासुदेवं सनातनम् ॥६१॥
सन्त्यज्य सर्वशस्त्राणि सत्त्वयुक्तेन चेतसा । ननाम शिरसा देवं योगिनां हृदयेशयम् ॥६२॥
स्तुत्वा नारायणं स्तोत्रैर्ऋग्यजुःसामसम्भवैः । निवार्य पितरं भ्रातॄन् हिरण्याक्षं तदाऽब्रवीत् ॥६३॥
अयं नारायणोऽनन्तः शाश्वतो भगवानजः । पुराणः पुरुषो देवो महायोगी जगन्मयः ॥६४॥
अयं धाता विधाता च स्वयंज्योतिर्निरञ्जनः । प्रधानं पुरुषं तत्त्वं मूलप्रकृतिरव्यया ॥६५॥
ईश्वरः सर्वभूतानामन्तर्यामी गुणातिगः । गच्छध्वमेनं शरणं विष्णुमव्यक्तमच्युतम् ॥६६॥
एवमुक्ते सुदुर्बुद्धिर्हिरण्यकशिपुः स्वयम् । प्रोवाच पुत्रमत्यर्थं मोहितो विष्णुमायया ॥६७॥
अयं सर्वात्मना वध्यो नृसिंहोऽल्पपराक्रमः । समागतोऽस्मद्भवनमिदानीं कालचोदितः ॥६८॥
विहस्य पितरं पुत्रो वचः प्राह महामतिः । मा निन्दस्वैनमीशानं भूतानामेकमव्ययम् ॥६९॥
कथं देवो महादेवः शाश्वतः कालवर्जितः । कालेन हन्यते विष्णुः कालात्मा कालरूपधृक् ॥७०॥
ततः सुवर्णकशिपुर्दुरात्मा कालचोदितः । निवारितोऽपि पुत्रेण युयुधे हरिमव्ययम् ॥७१॥
संरक्तनयनोऽनन्तो हिरण्यनयनाग्रजम् । नखैर्विदारयामास प्रह्लादस्यैव पश्यतः ॥७२॥
हते हिरण्यकशिपौ हिरण्याक्षो महाबलः । विसृज्य पुत्रं प्रह्लादं दुद्रुवे भयविह्वलः ॥७३॥
अनुह्लादादयः पुत्रा अन्ये च शतशोऽसुराः । नृसिंहदेहसम्भूतैः सिंहैर्नीता यमक्षयम् ॥७४॥
ततः संहृत्य तद्रूपं हरिर्नारायणः प्रभुः । स्वमेव परमं रूपं ययौ नारायणाह्वयम् ॥७५॥
गते नारायणे दैत्यः प्रह्लादोऽसुरसत्तमः । अभिषेकेण युक्तेन हिरण्याक्षमयोजयत् ॥७६॥
स बाधयामास सुरान् रणे जित्वा मुनीनपि । लब्ध्वाऽन्धकं महापुत्रं तपसाराध्य शङ्करम् ॥७७॥
देवाञ् जित्वा सदेवेन्द्रान् बध्वा च धरणीमिमाम् । नीत्वा रसातलं चक्रे वेदान् वै निष्प्रभांस्तथा ॥७८॥
ततः सब्रह्मका देवाः परिम्लानमुखश्रियः । गत्वा विज्ञापयामासुर्विष्णवे हरिमन्दिरम् ॥७९॥
स चिन्तयित्वा विश्वात्मा तद्वधोपायमव्ययः । सर्वदेवमयं शुभ्रं वाराहं वपुरादधे ॥८०॥
गत्वा हिरण्यनयनं हत्वा तं पुरुषोत्तमः । दंष्ट्रयोद्धारयामास कल्पादौ धरणीमिमाम् ॥८१॥
त्यक्त्वा वाराहसंस्थानं संस्थाप्यैवं सुरद्विषः । स्वामेव प्रकृतिं दिव्यां ययौ विष्णुः परं पदम् ॥८२॥
तस्मिन् हतेऽमररिपौ प्रह्लादो विष्णुतत्परः । अपालयत् स्वकं राज्यं भावं त्यक्त्वा तदासुरम् ॥८३॥
इयाज विधिवद् देवान् विष्णोराराधने रतः । निःसपत्नं सदा राज्यं तस्यासीद्विष्णुवैभवात् ॥८४॥
ततः कदाचिदसुरो ब्राह्मणं गृहमागतम् । तापसं नार्चयामास देवानाञ्चैव मायया ॥८५॥
स तेन तापसोऽत्यर्थं मोहितेनावमानितः । शशापासुरराजं तं क्रोधसंरक्तलोचनः ॥८६॥
यत्तद्बलं समाश्रित्य ब्राह्मणानवमन्यसे । सा शक्तिर्वैष्णवी दिव्या विनाशं ते गमिष्यति ॥८७॥
इत्युक्त्वा प्रययौ तूर्णं प्रह्लादस्य गृहाद् द्विजः । मुमोह राज्यसंसक्तः सोऽपि शापबलात् ततः ॥८८॥
बाधयामास विप्रेन्द्रान् न विवेद जनार्दनम् । पितुर्वधमनुस्मृत्य क्रोधं चक्रे हरिं प्रति ॥८९॥
तयोः समभवद् युद्धं सुघोरं रोमहर्षणम् । नारायणस्य देवस्य प्रह्लादस्यामरद्विषः ।
कृत्वा स सुमहद् युद्धं विष्णुना तेन निर्जितः ॥९०॥
पूर्वसंस्कारमाहात्म्यात् परस्मिन् पुरुषे हरौ । सञ्जातं तस्य विज्ञानं शरण्यं शरणं ययौ ॥९१॥
ततः प्रभृति दैत्येन्द्रो ह्यनन्यां भक्तिमुद्वहन् । नारायणे महायोगमवाप पुरुषोत्तमे ॥९२॥
हिरण्यकशिपोः पुत्रे योगसंसक्तचेतसि । अवाप तन्महद्राज्यमन्धकोऽसुरपुङ्गवः ॥९३॥
हिरण्यनेत्रतनयः शम्भोर्देहसमुद्भवः । मन्दरस्थामुमां देवीं चकमे पर्वतात्मजाम् ॥९४॥

पुरा दारुवने पुण्ये मुनयो गृहमेधिनः । ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ॥९५॥
ततः कदाचिन्महती कालयोगेन दुस्तरा । अनावृष्टिरतीवोग्रा ह्यासीद्भूतविनाशिनी ॥९६॥
समेत्य सर्वे मुनयो गौतमं तपसां निधिम् । अयाचन्त क्षुधाविष्टा आहारं प्राणधारणम् ॥९७॥
स तेभ्यः प्रददावन्नं मृष्टं बहुतरं बुधः । सर्वे बुभुजिरे विप्रा निर्विशङ्केन चेतसा ॥९८॥
गते च द्वादशे वर्षे कल्पान्त इव शङ्करी । बभूव वृष्टिर्महती यथापूर्वमभूज्जगत् ॥९९॥
ततः सर्वे मुनिवराः समामन्त्र्य परस्परम् । महर्षिं गौतमं प्रोचुर्गच्छाम इति वेगतः ॥१००॥
निवारयामास च तान् कञ्चित् कालं यथासुखम् । उषित्वा मद्गृहेऽवश्यं गच्छध्वमिति पण्डिताः॥१०१॥
ततो मायामयीं सृष्ट्वा कृष्णां गां सर्व एव ते । समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥१०२॥
सोऽनुवीक्ष्य कृपाविष्टस्तस्याः संरक्षणोत्सुकः । गोष्ठे तां बन्धयामास स्पृष्टमात्रा ममार सा ॥१०३॥
स शोकेनाभिसन्तप्तः कार्याकार्यं महामुनिः । न पश्यति स्म सहसा तमूचि मुनयोऽब्रुवन् ॥१०४॥
गोवध्येयं द्विजश्रेष्ठ यावत् तव शरीरगा । तावत् तेऽन्नं न भोक्तव्यं गच्छामो वयमेव हि ॥१०५॥
तेन तेऽनुमताः सन्तो देवदारुवनं शुभम् । जग्मुः पापवशं नीतास्तपश्चर्तुं यथा पुरा ॥१०६॥
स तेषां मायया जातां गोवध्यां गौतमो मुनिः । केनापि हेतुना ज्ञात्वा शशापातीव कोपतः ॥१०७॥
भविष्यध्वं त्रयीबाह्या महापातकिभिः समाः । बहुशस्ते तथा शापाज् जायमानाः पुनः पुनः॥१०८॥
सर्वे सम्प्राप्य देवेशं शंकरं विष्णुमव्ययम् । अस्तुवल्ँलौकिकैः स्तोत्रैरुच्छिष्टा इव सर्वगौ ॥१०९॥
देवदेवौ महादेवौ भक्तानामार्तिनाशनौ । कामवृत्त्या महायोगौ पापान्नस्त्रातुमर्हतः ॥११०॥
तदा पार्श्वस्थितं विष्णुं सम्प्रेक्ष्य वृषभध्वजः । किमेतेषां भवेत् कार्यं प्राह पुण्यैषिणामिति ॥१११॥
ततः स भगवान् विष्णुः शरण्यो भक्तवत्सलः । गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान् हरिः॥११२॥
न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर । सङ्गच्छते महादेव धर्मो वेदाद्विनिर्बभौ ॥११३॥
तथापि भक्तवात्सल्याद्रक्षितव्या महेश्वर । अस्माभिः सर्व एवैते गन्तारो नरकानपि ॥११४॥
तस्माद्धि वेदबाह्यानां रक्षणार्थाय पापिनाम् । विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ॥११५॥
एवं सम्बोधितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥११६॥
कापालं नाकुलं वामं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥११७॥
सृष्ट्वा तानाह निर्वेदाः कुर्वाणाः शास्त्रचोदितम् । पतन्तो नरके घोरे बहून् कल्पान् पुनःपुनः ॥११८॥
जायन्तो मानुषे लोके क्षीणपापचयास्ततः । ईश्वराराधनबलाद् गच्छध्वं सुकृतां गतिम् ॥११९॥
वर्त्तध्वं मत्प्रसादेन नान्यथा निष्कृतिर्हि वः । एवमीश्वर - विष्णुभ्यां चोदितास्ते महर्षयः ।
आदेशं प्रत्यपद्यन्त शिवस्यासुरविद्विषः ॥१२०॥
चक्रुस्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः । शिष्यानध्यापयामासुर्दर्शयित्वा फलानि च ॥१२१॥
मोहयन्त इमं लोकमवतीर्य महीतले । चकार शंकरो भिक्षां हितायैषां द्विजैः सह ॥१२२॥
कपालमालाभरणः प्रेतभस्मावगुण्ठितः । विमोहयँल्लोकमिमं जटामण्डलमण्डितः ॥१२३॥
निक्षिप्य पार्वतीं देवीं विष्णावमिततेजसि । नियोज्य भगवान् रुद्रो भैरवं दुष्टनिग्रहे ॥१२४॥
दत्त्वा नारायणे देव्या नन्दनं कुलनन्दनम् । संस्थाप्य तत्र च गणान् देवानिन्द्रपुरोगमान्॥१२५॥
प्रस्थिते च महादेवे विष्णुर्विश्वतनुः स्वयम् । स्त्रीरूपधारी नियतं सेवते स्म महेश्वरीम् ॥१२६॥
ब्रह्मा हुताशनः शक्रो यमोऽन्ये सुरपुङ्गवाः । सिषेविरे महादेवीं स्त्रीरूपं शोभनं गताः ॥१२७॥
नन्दीश्वरश्च भगवान् शम्भोरत्यन्तवल्लभः । द्वारदेशे गणाध्यक्षो यथापूर्वमतिष्ठत ॥१२८॥
एतस्मिन्नन्तरे दैत्यो ह्यन्धको नाम दुर्मतिः । आहर्तुकामो गिरिजामाजगामाथ मन्दरम् ॥१२९॥

सम्प्राप्तमन्धकं दृष्ट्वा शङ्करः कालभैरवः । न्यषेधयदमेयात्मा कालरूपधरो हरः ॥१३०॥
तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् । शूलेनोरसि तं दैत्यमाजघान वृषध्वजः ॥१३१॥
ततः सहस्रशो दैत्यः ससर्जान्धकसंज्ञितान् । नन्दीश्वरादयो दैत्यैरन्धकैरभिनिर्जिताः ॥१३२॥
घण्टाकर्णो मेघनादश्चण्डेशश्चण्डतापनः । विनायको मेघवाहः सोमनन्दी च वैद्युतः ॥१३३॥
सर्वेऽन्धकं दैत्यवरं सम्प्राप्यातिबलान्विताः । युयुधुः शूल - शक्त्यृष्टि-गिरिकूटपरश्वधैः ॥१३४॥
भ्रामयित्वा तु हस्ताभ्यां गृहीत्वा चरणद्वये । दैत्येन्द्रेणातिबलिना क्षिप्तास्ते शतयोजनम् ॥१३५॥
ततोऽन्धकनिसृष्टा ये शतशोऽथ सहस्रशः । कालसूर्यप्रतीकाशा भैरवञ्चाभिदुद्रुवुः ॥१३६॥
हा हेति शब्दः सुमहान् बभूवातिभयङ्करः । युयुधे भैरवो देवः शूलमादाय भीषणम् ॥१३७॥
दृष्ट्वान्धकानां सुबलं दुर्जयं निर्जितो हरः । जगाम शरणं देवं वासुदेवमजं विभुम् ॥१३८॥
सोऽसृजद्भगवान् विष्णुर्देवीनां शतमुत्तमम् । देवीपार्श्वस्थितो देवो विनाशाय सुरद्विषाम्॥१३९॥
तदान्धकसहस्रन्तु देवीभिर्यमसादनम् । नीतं केशवमाहात्म्याल्लीलयैव रणाजिरे ॥१४०॥
दृष्ट्वा पराहतं सैन्यमन्धकोऽपि महासुरः । पराङ्मुखो रणात् तस्मात् पलायत महाजवः॥१४१॥
ततः क्रीडां महादेवः कृत्वा द्वादशवार्षिकीम् । हिताय भक्तलोकानामाजगामाथ मन्दरम् ॥१४२॥
सम्प्राप्तमीश्वरं ज्ञात्वा सर्व एव गणेश्वराः । समागम्योपतिष्ठन्त भानुमन्तमिव द्विजाः ॥१४३॥
प्रविश्य भवनं पुण्यमयुक्तानां दुरासदम् । ददर्श नन्दिनं देवं भैरवं केशवं शिवः ॥१४४॥
प्रणामप्रवणं देवं सोऽनुगृह्याथ नन्दिनम् । प्रीत्यैनं पूर्वमीशानः केशवं परिषस्वजे ॥१४५॥
दृष्ट्वा देवी महादेवं प्रीतिविस्फारितेक्षणा । ननाम शिरसा तस्य पादयोरीश्वरस्य च ॥१४६॥
न्यवेदयज् जयं तस्मै शङ्करायाथ शङ्करः । भैरवो विष्णुमाहात्म्यं प्रतीतः पार्श्वगोऽभवत्॥१४७॥
श्रुत्वा तं विजयं शम्भुर्विक्रमं केशवस्य च । समास्ते भगवानीशो देव्या सह वरासने ॥१४८॥
ततो देवगणाः सर्वे मरीचिप्रमुखा द्विजाः । आजग्मुर्मन्दरं द्रष्टुं देवदेवं त्रिलोचनम् ॥१४९॥
येन तद्विजितं पूर्वं देवीनां शतमुत्तमम् । समागतं दैत्यसैन्यमीशदर्शनकाङ्क्षया ॥१५०॥
दृष्ट्वा वरासनासीनं देव्या चन्द्रविभूषणम् । प्रणेमुरादराद् देव्यो गायन्ति स्मातिलालसा॥१५१॥
प्रणेमुर्गिरिजां देवीं वामपार्श्वे पिनाकिनः । देवासनगतं देवं नारायणमनामयम् ॥१५२॥
दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च । प्रणम्य देवमीशानं पृष्टवत्यो वराङ्गनाः ॥१५३॥

## कन्या ऊचुः

कस्त्वं विभ्राजसे कान्त्या केयं बाला रविप्रभा । को न्वयं भाति वपुषा पङ्कजायतलोचनः ॥१५४॥
निशम्य तासां वचनं वृषेन्द्रवरवाहनः । व्याजहार महायोगी भूताधिपतिरव्ययः ॥१५५॥
अयं नारायणो गौरी जगन्माता सनातनः । विभज्य संस्थितो देवः स्वात्मानं बहुधेश्वरः ॥१५६॥
न मे विदुः परं तत्त्वं देव्याश्च न महर्षयः । एकोऽयं वेद विश्वात्मा भवानी विष्णुरेव च ॥१५७॥
अहं हि निःस्पृहः शान्तः केवलो निष्परिग्रहः । मामेव केशवं प्राहुर्लक्ष्मीं देवीमथाम्बिकाम् ॥१५८॥
एष धाता विधाता च कारणं कार्यमेव च । कर्त्ता कारयिता विष्णुर्भुक्ति-मुक्तिफलप्रदः ॥१५९॥
भोक्ता पुमानप्रमेयः संहर्त्ता कालरूपधृक् । स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः ॥१६०॥
कूटस्थो ह्यक्षरो व्यापी योगी नारायणोऽव्ययः । तारकः पुरुषो ह्यात्मा केवलं परमं पदम् ॥१६१॥
सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना । शान्ता सत्या सदानन्दा परंपदमिति श्रुतिः ॥१६२॥
अस्याः सर्वमिदं जातमत्रैव लयमेष्यति । एषैव सर्वभूतानां गतीनामुत्तमा गतिः ॥१६३॥

तयाहं सङ्गतो देव्या केवलो निष्कलः परः । पश्याम्यशेषमेवाहं परमात्मानमव्ययम् ॥१६४॥
तस्मादनादिमद्वैतं विष्णुमात्मानमीश्वरम् । एकमेव विजानीथ ततो यास्यथ निर्वृतिम् ॥१६५॥
मन्यन्ते विष्णुमव्यक्तमात्मानं श्रद्धयान्विताः । ये भिन्नदृष्टया चेशानं पूजयन्तो न मे प्रिया ॥१६६॥
द्विषन्ति ये जगत्सूतिं मोहिता रौरवादिषु । पच्यमाना न मुच्यन्ते कल्पकोटिशतैरपि ॥१६७॥
तस्मादशेषभूतानां रक्षको विष्णुरव्ययः । यथावदिह विज्ञाय ध्येयः सर्वापदि प्रभुः ॥१६८॥
श्रुत्वा भगवतो वाक्यं देवाः सर्वे गणेश्वराः । नेमुर्नारायणं देवं देवीञ्च हिमशैलजाम् ॥१६९॥
प्रार्थयामासुरीशाने भक्तिं भक्तजनप्रिये । भवानीपादयुगले नारायणपदाम्बुजे ॥१७०॥
ततो नारायणं देवं गणेशा मातरोऽपि च । न पश्यन्ति जगत्सूतिं तदद्भुतमिवाभवत् ॥१७१॥
तदन्तरे महादैत्यो ह्यन्धको मन्मथान्धकः । मोहितो गिरिजां देवीमाहर्तुं गिरिमाययौ ॥१७२॥
अथानन्तवपुः श्रीमान् योगी नारायणोऽमलः । तत्रैवाविरभूद् दैत्यैर्युद्धाय पुरुषोत्तमः ॥१७३॥

कृत्वाथ पार्श्वे भगवन्तमीशो युद्धाय विष्णुं गणदेवमुख्यैः ।
शिलादपुत्रेण च मातृकाभिः सकालरुद्रोऽपि जगाम देवः ॥१७४॥
त्रिशूलमादाय कृशानुकल्पं स देवदेवः प्रययौ पुरस्तात् ।
तमन्वयुस्ते गणराजवर्या जगाम देवोऽपि सहस्रबाहुः ॥१७५॥
रराज मध्ये भगवान् सुराणां विवाहनो वारिजपर्णवर्णः ।
तदा सुमेरोः शिखराधिरूढस्त्रिलोकदृष्टिर्भगवानिवार्कः ॥१७६॥
जयन्ननादिर्भगवानमेयो हरः सहस्राकृतिराविरासीत् ।
त्रिशूलपाणिर्गगने सुघोषः पपात देवोपरि पुष्पवृष्टिः ॥१७७॥
समागतं वीक्ष्य गणेशराजं समावृतं दैत्यरिपुं गणेशैः ।
युयोध शक्रेण स मातृकाभिर्गणैरशेषैरमरप्रधानैः ॥१७८॥
विजित्य सर्वानपि बाहुवीर्यात् स संयुगे शम्भुरनन्तधामा ।
समाययौ यत्र स कालरुद्रो विमानमारुह्य विहीनसत्त्वः ॥१७९॥

दृष्ट्वान्धकं समायान्तं भगवान् गरुडध्वजः । व्याजहार महादेवं भैरवं भूतिभूषणम् ॥१८०॥
हन्तुमर्हसि दैत्येशमन्धकं लोककण्टकम् । त्वामृते भगवान् शक्तो हन्ता नान्योऽस्य विद्यते॥१८१॥
त्वं हर्त्ता सर्वलोकानां कालात्मा ह्यैश्वरी तनुः । स्तूयसे विविधैर्मन्त्रैर्वेदविद्भिर्विचक्षणैः ॥१८२॥
स वासुदेवस्य वचो निशम्य भगवान् हरः । निरीक्ष्य विष्णुं हनने दैत्येन्द्रस्य मतिं दधौ ॥१८३॥
जगाम देवतानीकं गणानां हर्षवर्द्धनम् । स्तुवन्ति भैरवं देवमन्तरीक्षचरा जनाः ॥१८४॥
जयानन्त महादेव कालमूर्त्ते सनातन । त्वमग्निः सर्वभूतानामन्तस्तिष्ठसि सर्वगः ॥१८५॥
त्वमन्तको लोककर्त्ता त्वं धाता हरिरव्ययः । त्वं ब्रह्मा त्वं महादेवस्त्वं धाम परमं पदम् ॥१८६॥
ओङ्कारमूर्त्तिर्योगात्मा त्रयीनेत्रस्त्रिलोचनः । महाविभूतिर्विश्वेशो जयानन्त जगत्पते ॥१८७॥
ततः कालाग्निरुद्रोऽसौ गृहीत्वान्धकमीश्वरः । त्रिशूलाग्रेषु विन्यस्य प्रननर्त्त सतां गतिः ॥१८८॥
दृष्ट्वान्धकं देवगणाः शूलप्रोतं पितामहः । प्रणेमुरीश्वरं देवं भैरवं भवमोचनम् ॥१८९॥
अस्तुवन् मुनयः सिद्धा जगुर्गन्धर्व - किन्नराः । अन्तरीक्षेऽप्सरःसङ्घा नृत्यन्ति स्म मनोहराः॥१९०॥
संस्थापितोऽथ शूलाग्रे सोऽन्धको दग्धकिल्विषः । उत्पन्नाखिलविज्ञानस्तुष्टाव परमेश्वरम् ॥१९१॥

## अन्धक उवाच

नमामि मूर्ध्ना भगवन्तमेकं समाहिता यं विदुरीशतत्त्वम् ।
पुरातनं पुण्यमनन्तरूपं कालं कविं योग-वियोगहेतुम् ॥१९२॥
दंष्ट्राकरालं दिवि नृत्यमानं हुताशवक्त्रं ज्वलनार्करूपम् ।
सहस्रपादाक्षिशिरोऽभियुक्तं भवन्तमेकं प्रणमामि रुद्रम् ॥१९३॥
जयादिदेवामरपूजिताङ्घ्रे विभागहीनामलतत्त्वरूप ।
त्वमग्निरेको बहुधाभिपूज्यो वाय्वादिभेदैरखिलात्मरूपः ॥१९४॥
त्वामेकमाहुः पुरुषं पुराणमादित्यवर्णं तमसः परस्तात् ।
त्वं पश्यसीदं परिपास्यजस्रं त्वमन्तको योगिगणानुजुष्टः ॥१९५॥
एकोऽन्तरात्मा बहुधा निविष्टो देहेषु देहादिविशेषहीनः ।
त्वमात्मतत्त्वं परमात्मशब्दं भवन्तमाहुः शिवमेव केचित् ॥१९६॥
त्वमक्षरं ब्रह्म परं पवित्रमानन्दरूपं प्रणवाभिधानम् ।
त्वमीश्वरो वेदविदां प्रसिद्धः स्वायम्भुवोऽशेषविशेषहीनः ॥१९७॥
त्वमिन्द्ररूपो वरुणोऽग्निरूपो हंसः प्राणो मृत्युरन्तोऽधियज्ञः ।
प्रजापतिर्भगवानेकरूपो नीलग्रीवः स्तूयसे वेदविद्भिः ॥१९८॥
नारायणस्त्वं जगतामनादिः पितामहस्त्वं प्रपितामहश्च ।
वेदान्तगुह्योपनिषत्सु गीतः सदाशिवस्त्वं परमेश्वरोऽसि ॥१९९॥
नमः परस्मै तमसः परस्तात् परात्मने पञ्चनवान्तराय ।
त्रिशक्त्यतीताय निरञ्जनाय सहस्रशक्त्यासनसंस्थिताय ॥२००॥
त्रिमूर्त्तयेऽनन्तपरात्ममूर्त्ते जगन्निवासाय जगन्मयाय ।
नमो जनानां हृदि संस्थिताय फणीन्द्रहाराय नमोऽस्तु तुभ्यम् ॥२०१॥
मुनीन्द्रसिद्धार्चितपादपद्म ऐश्वर्यधर्मासनसंस्थिताय ।
नमः परान्ताय भवोद्भवाय सहस्रचन्द्रार्कसहस्रमूर्त्ते ॥२०२॥
नमोऽस्तु सोमाय सुमध्यमाय नमोऽस्तु देवाय हिरण्यबाहो ।
नमोऽग्निचन्द्रार्कविलोचनाय नमोऽम्बिकायाः पतये मृडाय ॥२०३॥
नमोऽस्तु गुह्याय गुहान्तराय वेदान्तविज्ञानविनिश्चिताय ।
त्रिकालहीनामलधामधाम्ने नमो महेशाय नमः शिवाय ॥२०४॥

एवं स्तुतः स भगवान् शूलाग्रादवतार्य तम् । तुष्टः प्रोवाच हस्ताभ्यां स्पृष्ट्वा च परमेश्वरः ॥२०५॥
प्रीतोऽहं सर्वथा दैत्य स्तवेनानेन साम्प्रतम् । सम्प्राप्य गाणपत्यं मे सन्निधाने सदा वस ॥२०६॥
अरोगश्छिन्नसन्देहो देवैरपि सुपूजितः । नन्दीश्वरस्यानुचरः सर्वदुःखविवर्जितः ॥२०७॥
एवं व्याहृतमात्रे तु देवदेवेन देवताः । गणेश्वरं महादैत्य मन्धकं देवसन्निधौ ॥२०८॥
सहस्रसूर्यसङ्काशं त्रिनेत्रं चन्द्रचिह्नितम् । नीलकण्ठं जटामौलिं शूलासक्तं महाकरम् ॥२०९॥
दृष्ट्वा तं तुष्टुवुर्दैत्यमाश्चर्यं परमं गताः । उवाच भगवान् विष्णुर्देवदेवं स्मयन्निव ॥ २१०॥
स्थाने तव महादेव प्रभावः पुरुषो महान् । नेक्षते ज्ञातिजान् दोषान् गृह्णाति च गुणानपि ॥२११॥
इतीरितोऽथ भैरवो गणेशदेवपुङ्गवः । सकेशवः सहान्धको जगाम शङ्करान्तिकम् ॥२१२॥

निरीक्ष्य देवमागतं स शङ्करः सहान्धकम् । समाधवं समातृकं जगाम निर्वृतिं हरः ॥२१३॥
प्रगृह्य पाणिनेश्वरो हिरण्यलोचनात्मजम् । जगाम यत्र शैलजा विमानमीशवल्लभा ॥२१४॥
विलोक्य सा समागतं पतिं भवार्त्तिहारिणम् । उवाच सान्त्वकं मुखं प्रसादमन्धकं प्रति ॥२१५॥
अथान्धको महेश्वरीं ददर्श देवपार्श्वगाम् । पपात दण्डवत् क्षितौ ननाम पादपद्मयोः ॥२१६॥
नमामि देववल्लभामनादिमद्रिजामिमाम् । यतः प्रधानपूरुषौ निहन्ति याऽखिलं जगत् ॥२१७॥
विभाति या शिवासने शिवेन साकमव्यया । हिरण्मयेऽतिनिर्मले नमामि तां हिमाद्रिजाम् ॥२१८॥
यदन्तराखिलं जगज् जगन्ति यान्ति सङ्क्षयम् । नमामि यत्र तामुमामशेषभेदवर्जिताम् ॥२१९॥
न जायते न हीयते न वर्द्धते च तामुमाम् । नमामि तां गुणातिगां गिरीशपुत्रिकामिमाम् ॥२२०॥
क्षमस्व देवि शैलजे कृतं मया विमोहितम् । सुरासुरैर्नमस्कृतं नमामि ते पदाम्बुजम् ॥२२१॥
इत्थं भगवती देवी भक्तिनम्रेण पार्वती । संस्तुता दैत्यपतिना पुत्रत्वे जगृहेऽन्धकम् ॥२२२॥
ततः स मातृभिः सार्द्धं भैरवो रुद्रसम्भवः । जगामानुज्ञया शम्भोः पातालं परमेश्वरः ॥२२३॥
यत्र सा तामसी विष्णोर्मूर्त्तिः संहारकारिका । समास्ते हरिरव्यक्तो नृसिंहाकृतिरीश्वरः ॥२२४॥
ततोऽनन्ताकृतिः शम्भुः शेषेणापि सुपूजितः । कालाग्निरुद्रो भगवान् युयोजात्मानमात्मनि ॥२२५॥
युञ्जतस्तस्य देवस्य सर्वा एवाथ मातरः । बुभुक्षिता महादेवं प्रणम्याहुस्त्रिलोचनम् ॥२२६॥

## मातर ऊचुः

बुभुक्षिता महादेव त्वमनुज्ञातुमर्हसि । त्रैलोक्यं भक्षयिष्यामो नान्यथा तृप्तिरस्ति नः॥२२७॥
एतावदुक्त्वा वचनं मातरो विष्णुसम्भवाः । भक्षयाञ्चक्रिरे सर्वं त्रैलोक्यं सचराचरम् ॥२२८॥
ततः स भैरवो देवो नृसिंहवपुषं हरिम् । दध्यौ नारायणं देवं प्रणम्य च कृताञ्जलिः ॥२२९॥
उमेशचिन्तितं ज्ञात्वा क्षणात् प्रादुरभूद्धरिः । विज्ञापयामास च तं भक्षयन्तीह मातरः ।
निवारयाशु त्रैलोक्यं त्वदीया भगवन्निति ॥२३०॥
संस्मृता विष्णुना देव्यो नृसिंहवपुषा पुनः । उपतस्थुर्महादेवं नरसिंहाकृतिं ततः ॥२३१॥
सम्प्राप्य सन्निधिं विष्णोः सर्वाः संहारकारिकाः । प्रददुः शम्भवे शक्तिं भैरवायातितेजसे ॥२३२॥
अपश्यंस्ता जगत्सूतिं नृसिंहमतिभैरवम् । क्षणादेकत्वमापन्नं शेषाहिश्चापि मातरः ॥२३३॥
व्याजहार हृषीकेशो ये भक्ताः शूलपाणये । ये च मां संस्मरन्तीह पालनीयाः प्रयत्नतः ॥२३४॥
ममैव मूर्त्तिरतुला सर्वसंहारकारिका । महेश्वराङ्गसम्भूता भुक्ति-मुक्तिप्रदायिनी ॥२३५॥
अनन्तो भगवान् कालो द्विधावस्था ममैव तु । तामसी राजसी मूर्त्तिर्देवदेवश्चतुर्मुखः ॥२३६॥
सोऽहं देवो दुराधर्षः कालो लोकप्रकालनः । भक्षयिष्यामि कल्पान्ते रौद्रेण निखिलं जगत् ॥२३७॥
या सा विमोहिनी मूर्त्तिर्मम नारायणाह्वया । सत्त्वोद्रिक्ता जगत् सर्वं संस्थापयति नित्यदा ॥२३८॥
स विष्णुः परमं ब्रह्म परमात्मा परा गतिः । मूलप्रकृतिरव्यक्ता सदानन्देति कथ्यते ॥२३९॥
इत्येवं बोधिता देव्यो विष्णुना विष्णुमातरः । प्रपेदिरे महादेवं तमेव शरणं परम् ॥२४०॥
एतद्वः कथितं सर्वं मयान्धकनिसूदनम् । माहात्म्यं देवदेवस्य भैरवस्यामितौजसः ॥२४१॥

इति श्रीकौर्मे महापुराणे पूर्वभागे दक्षसुतावंशकीर्त्तनं नाम षोडशोऽध्यायः ॥ १६ ॥

# सप्तदशोऽध्यायः

## सूत उवाच

अन्धके निगृहीते वै प्रह्लादस्य महात्मनः । विरोचनो नाम बली बभूव नृपतिः सुतः ॥ १ ॥
देवान् जित्वा सदेवेन्द्रान् बहून् वर्षान् महासुरः । पालयामास धर्मेण त्रैलोक्यं सचराचरम् ॥ २ ॥
तस्यैवं वर्त्तमानस्य कदाचिद्विष्णुचोदितः । सनत्कुमारो भगवान् पुरं प्राप महामुनिः ॥ ३ ॥
दृष्ट्वा सिंहासनगतो ब्रह्मपुत्रं महासुरः । नानामोत्थाय शिरसा प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥
धन्योऽस्म्यानुगृहीतोऽस्मि सम्प्राप्तो मे पुरोत्तमम् । योगीश्वरोऽद्य भगवान् यतोऽसौ ब्रह्मवित् स्वयम् ॥५॥
किमर्थमागतो ब्रह्मन् स्वय देवः पितामहः । ब्रूहि मे ब्रह्मणः पुत्र किं कार्यं करवाण्यहम् ॥ ६ ॥
सोऽब्रवीद्भगवान् देवो धर्मयुक्तं महासुरम् । द्रष्टुमभ्यागतोऽहं वै भवन्तं भाग्यवानसि ॥ ७ ॥
सुदुर्लभा नीतिरेषा दैत्यानां दैत्यसत्तम । त्रिलोके धार्मिको नूनं त्वादृशोऽन्यो न विद्यते ॥ ८ ॥
इत्युक्तोऽसुरराजोऽसौ पुनः प्राह महामुनिम् । धर्माणां परमं धर्मं ब्रूहि मे ब्रह्मवित्तम ॥ ९ ॥
सोऽब्रवीद्भगवान् योगी दैत्येन्द्राय महात्मने । सर्वगुह्यतमं धर्ममात्मज्ञानमनुत्तमम् ॥१०॥
स लब्ध्वा परमं ज्ञानं दत्त्वा च गुरुदक्षिणाम् । निधाय पुत्रे तद्राज्यं योगाभ्यासरतोऽभवत् ॥१ ॥
स तस्य पुत्रो मतिमान् बलिर्नाम महासुरः । ब्रह्मण्यो धार्मिकोऽत्यर्थं विजिग्येऽथ पुरन्दरम् ॥१२॥
कृत्वा तेन महद्युद्धं शक्रः सर्वामरैर्वृतः । जगाम निर्जितो विष्णुं देवं शरणमच्युतम् ॥१३॥
तदन्तरेऽदितिर्देवी देवमाता सुदुःखिता । दैत्येन्द्राणां वधार्थाय पुत्रो मे स्यादिति स्वयम् ॥१४॥
तताप सुमहाघोरं तपोराशिं ततः परम् । प्रपन्ना विष्णुमव्यक्तं शरण्यं शरणं हरिम् ॥१५॥
कृत्वा हृत्पद्मकिञ्जल्के निष्कलं परमं पदम् । वासुदेवमनाद्यन्तमानन्दं व्योम केवलम् ॥१६॥
प्रसन्नो भगवान् विष्णुः शङ्ख - चक्र - गदाधरः । आविर्बभूव योगात्मा देवमातुः पुरो हरिः ॥१७॥
दृष्ट्वा समागतं विष्णुमदितिर्भक्तिसंयुता । मेने कृतार्थमात्मानं तोषयामास केशवम् ॥१८॥

## अदितिरुवाच

जयाशेषदुःखौघनाशैकहेतो जयानन्तमाहात्म्य योगाभियुक्त ।
जयानादिमध्यान्त विज्ञानमूर्त्ते जयाकाशकल्पामलानन्दरूप ॥१९॥
नमो विष्णवे कालरूपाय तुभ्यं नमो नारसिंहाय शेषाय तुभ्यम् ।
नमः कालरुद्राय संहारकर्त्रे नमो वासुदेवाय तुभ्यं नमस्ते ॥२०॥
नमो विश्वमायाविधानाय तुभ्यं नमो योगगम्याय सत्याय तुभ्यम् ।
नमो धर्मविज्ञाननिष्ठाय तुभ्यं नमस्ते वराहाय भूयो नमस्ते ॥२१॥
नमस्ते सहस्रार्कचन्द्राभमूर्त्ते नमो वेदविज्ञानधर्माभिगम्य ।
नमो भूधरायाप्रमेयाय तुभ्यं प्रभो विश्वयोनेऽथ भूयो नमस्ते ॥२२॥
नमः शम्भवे सत्यनिष्ठाय तुभ्यं नमो हेतवे विश्वरूपाय तुभ्यम् ।
नमो योगपीठान्तरस्थाय तुभ्यं शिवायैकरूपाय भूयो नमस्ते ॥२३॥

एवं स भगवान् विष्णुर्देवमात्रा जगन्मयः । तोषितश्छन्दयामास वरेण प्रहसन्निव ॥२४॥
प्रणम्य शिरसा भूमौ सा वव्रे वरमुत्तमम् । त्वामेव पुत्रं देवानां हिताय वरये वरम् ॥२५॥
तथास्त्वित्याह भगवान् प्रपन्नजनवत्सलः । दत्त्वा वरानप्रमेयस्तत्रैवान्तरधीयत ॥२६॥

ततो बहुतिथे काले भगवन्तं जनार्दनम् । दधार गर्भं देवानां माता नारायणं स्वयम् ॥२७॥
समाविष्टे हृषीकेशे देवमातुरथोदरम् । उत्पाता जज्ञिरे घोरा बलेर्वैरोचनेः पुरे ॥२८॥
निरीक्ष्य सर्वानुत्पातान् दैत्येन्द्रो भयविह्वलः । प्रह्लादमसुरं वृद्धं प्रणम्याह पितामहम् ॥२९॥

## बलिरुवाच

पितामह महाप्राज्ञ जायन्तेऽस्मत्पुरेऽधुना । किमुत्पाता भवेत् कार्यमस्माकं किं निमित्तकाः ॥३०॥
निशम्य तस्य वचनं चिरं ध्यात्वा महासुरः । नमस्कृत्य हृषीकेशमिदं वचनमब्रवीत् ॥३१॥

## प्रह्लाद उवाच

यो यज्ञैरिज्यते विष्णुर्यस्य सर्वमिदं जगत् । दधारासुरनाशार्थं माता तं त्रिदिवौकसाम् ॥३२॥
यस्मादभिन्नं सकलं भिद्यते योऽखिलादपि । स वासुदेवो देवानां मातुर्देहं समाविशत् ॥३३॥
न यस्य देवा जानन्ति स्वरूपं परमार्थतः । स विष्णुरदितेर्देहं स्वेच्छयाद्य समाविशत् ॥३४॥
यस्माद्भवन्ति भूतानि यत्र संयान्ति संक्षयम् । सोऽवतीर्णो महायोगी पुराणपुरुषो हरिः ॥३५॥
न यत्र विद्यते नाम - जात्यादिपरिकल्पना । सत्तामात्रात्मरूपोऽसौ विष्णुरंशेन जायते ॥३६॥
यस्य सा जगतां माता शक्तिस्तद्धर्मधारिणी । माया भगवती लक्ष्मीः सोऽवतीर्णो जनार्दनः ॥३७॥
यस्य सा तामसी मूर्त्तिः शङ्करो राजसी तनुः । ब्रह्मा सञ्जायते विष्णुरंशेनैकेन सत्त्वधृक् ॥३८॥
इति सञ्चिन्त्य गोविन्दं भक्तिनम्रेण चेतसा । तमेव गच्छ शरणं ततो यास्यसि निर्वृतिम् ॥३९॥
ततः प्रह्लादवचनाद्बलिर्वैरोचनिर्हरिम् । जगाम शरणं विश्वं पालयामास धर्मतः ॥४०॥
काले प्राप्ते महाविष्णुं देवानां हर्षवर्द्धनम् । असूत कश्यपाच्चैनं देवमाताऽदितिः स्वयम् ॥४१॥
चतुर्भुजं विशालाक्षं श्रीवत्साङ्कितवक्षसम् । नीलमेघप्रतीकाशं भ्राजमानं श्रिया वृतम् ॥४२॥
उपतस्थुः सुराः सर्वे सिद्धाः साध्याश्च चारणाः । उपेन्द्रमिन्द्रप्रमुखा ब्रह्मा चर्षिगणैर्वृतः ॥४३॥
कृतोपनयनो वेदानध्यैष्ट भगवान् हरिः । सदाचारं भरद्वाजात् त्रिलोकाय प्रदर्शयन् ॥४४॥
एवञ्च लौकिकं मार्गं प्रदर्शयति स प्रभुः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥४५॥
ततः कालेन मतिमान् बलिर्वैरोचनिः स्वयम् । यज्ञैर्यज्ञेश्वरं विष्णुमर्चयामास सर्वगम् ॥४६॥
ब्राह्मणान् पूजयामास दत्त्वा बहुतरं धनम् । ब्रह्मर्षयः समाजग्मुर्यज्ञवाटं महात्मनः ॥४७॥
विज्ञाय विष्णुर्भगवान् भरद्वाजप्रचोदितः । आस्थाय वामनं रूपं यज्ञदेशमथागमत् ।४८॥
कृष्णाजिनोपवीताङ्ग आषाढेन विराजितः । ब्राह्मणो जटिलो वेदानुदगिरन् सुमहाद्युतिः ॥४९॥
सम्प्राप्यासुरराजस्य समीपं भिक्षुको हरिः । स्वपदभ्यां क्रमितं देशमयाचत बलिं त्रिभिः ॥५०॥
प्रक्षाल्य चरणौ विष्णोर्बलिर्भावसमन्वितः । आचामयित्वा भृङ्गारमादाय स्वर्णनिर्मितम् । ५१॥

दास्ये तथेदं भवते पदत्रयं प्रीणातु देवो हरिरव्ययाकृतिः ।
विचिन्त्य देवस्य कराग्रपल्लवे निपातयामास सुशीतलं जलम् ॥५२॥
विचक्रमे पृथिवीमेष चैतामथान्तरीक्षं दिवमादिदेवः ।
व्यपेतरागं दितिजेश्वरं तं प्रकर्त्तुकामः शरणं प्रपन्नम् ॥५३॥
आक्रम्य लोकत्रयमीशपादः प्राजापत्याद् ब्रह्मलोकं जगाम ।
प्रणेमुरादित्यमुखाः सुरेन्द्रा ये तत्र लोके निवसन्ति सिद्धाः ॥५४॥

अथोपतस्थे भगवाननादिः पितामहस्तोषयामास विष्णुम् ।
भित्त्वा तदण्डस्य कपालमूर्द्धं जगाम दिव्याभरणोऽथ भूयः ॥५५॥
अथाण्डभेदान्निपपात शीतलं महाजलं तत् पुण्यकृद्भिश्च जुष्टम् ।
प्रवर्त्तिता चापि सरिद्वरा सा गङ्गेत्युक्ता ब्रह्मणा व्योमसंस्था ॥५६॥
गत्वा महान्तं प्रकृतिं ब्रह्मयोनिं ब्रह्माणमेकं पुरुषं विश्वयोनिम् ।
अतिष्ठदीशस्य पदं तदव्ययं दृष्ट्वा देवास्तत्र तत्र स्तुवन्ति ॥५७॥
आलोक्य तं पुरुषं विश्वकायं महान् बलिर्भक्तियोगेन विष्णुम् ।
ननाम नारायणमेकमव्ययं स्वचेतसा यं प्रणमन्ति वेदाः ॥५८॥
तमब्रवीद्भगवानादिकर्त्ता भूत्वा पुनर्वामनो वासुदेवः ।
ममैव दैत्याधिपतेऽधुनेदं लोकत्रयं भवता भावदत्तम् ॥५९॥
प्रणम्य मूर्ध्ना पुनरेव दैत्यो निपातयामास जलं कराग्रे ।
दास्ये तवात्मानमनान्तधाम्ने त्रिविक्रमायामितविक्रमाय ॥६०॥
प्रगृह्य सूनोरपि सम्प्रदत्तं प्रह्लादसूनोरथ शङ्खपाणिः ।
जगाद वश्यं जगदन्तरात्मा पातालमूलं प्रविशेति भूयः ॥६१॥
समास्यतो भवता तत्र नित्यं भुक्त्वा भोगान् देवतानामलभ्यान् ।
ध्यायस्व मां सततं भक्तियोगात् प्रवेक्ष्यसे कल्पदाहे पुनर्माम् ॥६२॥

उक्त्वैवं दैत्यसिंहं तं विष्णुः सत्यपराक्रमः । पुरन्दराय त्रैलोक्यं ददौ जिष्णुरुरुक्रमः ॥६३॥
संस्तुवन्ति महायोगं सिद्धा देवर्षि - किन्नराः । ब्रह्मा शक्रोऽथ भगवान् रुद्रादित्य-मरुद्गणाः ॥६४॥
कृत्वेतदद्भुतं कर्म विष्णुर्वामनरूपधृक् । पश्यतामेव सर्वेषां तत्रैवान्तरधीयत ॥६५॥
सोऽपि दैत्यवरः श्रीमान् पातालं प्राप नोदितः । प्रह्लादेनासुरवरैर्विष्णुभक्तस्तु तत्परः ॥६६॥
अपृच्छद्विष्णुमाहात्म्यं भक्तियोगमनुत्तमम् । पूजाविधानं प्रह्लादं तदाहासौ चकार सः ॥६७॥

अथ रथचरणाब्जशङ्खपाणिं सरसिजलोचनमीशमप्रमेयम् ।
शरणमुपययौ स भावयोगात् प्रणयगतिं प्रणिधाय कर्मयोगम् ॥६८॥

एष वः कथितो विप्रा वामनस्य पराक्रमः । स देवकार्याणि सदा करोति पुरुषोत्तमः ॥६९॥

इति श्रीकौर्मे महापुराणे पूर्वभागे दक्षसूतावंशानुकीर्त्तने
त्रिविक्रमचरितं नाम सप्तदशोऽध्यायः ॥१७॥

— ——

# अष्टादशोऽध्यायः

## सूत उवाच

बलेः पुत्रशतन्त्वासीन्महाबलपराक्रमम् । तेषां प्रधानो द्युतिमान् बाणो नाग महाबलः ॥ १ ॥
सोऽतीव शङ्करे भक्तो राजा राज्यमपालयत् । त्रैलोक्यं वशमानीय बाधयामास वासवम् ॥ २ ॥
ततः शक्रादयो देवा गत्वोचुः कृत्तिवाससम् । त्वदीयो बाधते ह्यस्मान् बाणो नाम महासुरः ॥ ३ ॥
व्याहृतो दैवतैः सर्वैर्देवदेवो महेश्वरः । ददाह बाणस्य पुरं शरेणैकेन लीलया ॥ ४ ॥
दह्यमाने पुरे तस्मिन् बाणो रुद्रं त्रिशूलिनम् । ययौ शरणमीशानं गोपतिं नीललोहितम् ॥ ५ ॥
मूर्द्धन्याधाय तल्लिङ्गं शाम्भवं रागवर्जितः । निर्गत्य तु पुरात् तस्मात् तुष्टाव परमेश्वरम् ॥ ६ ॥
संस्तुतो भगवानीशः शङ्करो नीललोहितः । गाणपत्येन बाणं तं योजयामास भावतः ॥ ७ ॥
अथैवञ्च दनोः पुत्रास्ताराद्याश्चातिभीषणाः । तारस्तथा शम्बरश्च कपिलः शङ्करस्तथा ।
स्वर्भानुर्वृषपर्वा च प्राधान्येन प्रकीर्त्तिताः ॥ ८ ॥
सुरसायाः सहस्रन्तु सर्पाणामभवद् द्विजाः । अनेकशिरसां तद्वत् खेचराणां महात्मनाम् ॥ ९ ॥
अरिष्टा जनयामास गन्धर्वाणां सहस्रकम् । अनन्ताद्या महानागाः काद्रवेयाः प्रकीर्तिताः ॥१०॥
ताम्रा च जनयामास षट् कन्या द्विजपुङ्गवाः । शुकीं श्येनीञ्च भासीञ्च सुग्रीवीं गृध्रिकां शुचिम् ॥११॥
गास्तथा जनयामास सुरभिर्महिषीस्तथा । इरा वृक्षलतावली-तृणजातीश्च सर्वशः ॥१२॥
खसा वै यक्ष-रक्षांसि मुनिरप्सरसस्तथा । रक्षोगणं क्रोधवशा जनयामास सत्तमाः ॥१३॥
विनतायाश्च पुत्रौ द्वौ प्रख्यातौ गरुडारुणौ । तयोश्च गरुडो धीमान् तपस्तप्त्वा सुदुश्चरम् ।
प्रसादाच्छूलिनः प्राप्तो वाहनत्वं हरेः स्वयम् ॥१४॥
आराध्य तपसा देवं महादेवं तथारुणः । सारथ्ये कल्पितः पूर्वं प्रीतेनार्कस्य शम्भुना ॥१५॥
एते कश्यपदायादाः कीर्तिताः स्थाणुजङ्गमाः । वैवस्वतेऽन्तरे ह्यस्मिन् शृणवतां पापनाशनाः ॥१६॥
सप्तविंशसुताः प्रोक्ताः सोमपत्न्यश्च सुव्रताः । अरिष्टनेमिपत्नीनामपत्यानां ह्यनेकशः ॥१७॥
बहुपुत्रस्य विदुषश्चत्वारो वैद्युताः स्मृताः । प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ॥१८॥
कृशाश्वस्य तु देवर्षेर्देव-प्रहरणाः सुताः । एते युगसहस्रान्ते जायन्ते पुनरेव हि ।
मन्वन्तरेषु नियतं तुल्यकार्यैः स्वनामभिः ॥१९॥

इति श्रीकौर्मे महापुराणे पूर्वभागे दक्षसुतावंशनुकीर्त्तनं नामाष्टादशोऽध्यायः ॥१८॥

---

# एकोनविंशोऽध्यायः

## सूत उवाच

एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात् । कश्यपः पुत्रकामस्तु चचार सुमहत् तपः ॥ १ ॥
तस्यैवं तपतोऽत्यर्थं प्रादुर्भूतौ सुताविमौ । वत्सरश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ॥ २ ॥
वत्सरान्नैध्रुवो जज्ञे रैभ्यश्च सुमहायशाः । रैभ्यस्य जज्ञिरे शूद्राः पुत्रा द्युतिमतां वराः ॥ ३ ॥
च्यवनस्य सुता भार्या नैध्रुवस्य महात्मनः । सुमेधा जनयामास पुत्रान् वै कुण्डपायिनः ॥ ४ ॥

असितस्यैकपर्णायां ब्रह्मिणी समपद्यत । नाम्ना वै देवलः पुत्रो योगाचार्यो महातपाः ॥ ५ ॥
शाण्डिल्योऽप्यपरः श्रीमान् सर्वतत्त्वार्थविच्छुचिः । प्रसादात् पार्वतीशस्य योगमुत्तममाप्नवान् ॥ ६ ॥
शाण्डिल्यो नैध्रुवो रैभ्यस्त्रयः पक्षास्तु काश्यपाः । नवप्रकृतयो विप्राः पुलस्त्यस्य वदामि वः ॥ ७ ॥
तृणबिन्दोः सुता विप्रा नाम्ना त्विलविला स्मृता । पुलस्त्याय तु राजर्षिस्तां कन्यां प्रत्यपादयत् ॥८॥
ऋषिस्त्वैलविलस्तस्यां विश्रवाः समपद्यत । तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्धिकाः ॥ ९ ॥
पुष्पोत्कटा च वाका च कैकसी देववर्णिनी । रूपलावण्यसम्पन्नास्तासाञ्च शृणुत प्रजाः ॥१०॥
ज्येष्ठं वैश्रवणं तस्य सुषुवे देववर्णिनी । कैकस्यजनयत् पुत्रं रावणं राक्षसाधिपम् ॥११॥
कुम्भकर्णं शूर्पणखां तथैव च विभीषणम् । पुष्पोत्कटाप्यजनयत् पुत्रान् विश्रवसः शुभान् ॥१२॥
महोदरं प्रहस्तञ्च महापार्श्वं खरं तथा । कुम्भीनसीं तथा कन्यां वाकायाः शृणुत प्रजाः ॥१३॥
त्रिशिरा दूषणश्चैव विद्युज्जिह्वो महाबलः । इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश ॥१४॥
सर्वे तपोबलोत्कृष्टा रुद्रभक्ताः सुभीषणाः । पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ॥१५॥
भूताः पिशाचा ऋक्षाश्च शूकरा हस्तिनस्तथा । अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेऽन्तरे ।
मरीचेः कश्यपः पुत्रः स्वयमेव प्रजापतिः ॥१६॥
भृगोरथाभवच्छुक्रो दैत्याचार्यो महातपाः । स्वाध्याययोगनिरतो हरभक्तो महाद्युतिः ॥१७॥
अत्रेः पुत्रोऽभवद्वह्निः सोदर्यस्तस्य नैध्रुवः । कृशाश्वस्य तु विप्रर्षेर्घृताच्यामिति नः श्रुतम् ॥१८॥
स तस्यां जनयामास स्वस्त्यत्रेयान् महौजसः । वेदवेदाङ्गनिरतांस्तपसा हतकिल्विषान् ॥१९॥
नारदस्तु वसिष्ठाय ददौ देवीमरुन्धतीम् । ऊर्ध्वरेतास्तु तत्रैव शापाद्दक्षस्य नारदः ॥२०॥
हर्यश्वेषु तु नष्टेषु मायया नारदस्य तु । शशाप नारदं दक्षः क्रोधसंरक्तलोचनः ॥२१॥
यस्मान्मम सुताः सर्वे भवता मायया द्विज । क्षयं नीतास्त्वशेषेण निरपत्यो भविष्यसि ॥२२॥
अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयत् सुतम् । शक्तेः पराशरः श्रीमान् सर्वज्ञस्तपतां वरः ॥२३॥
आराध्य देवदेवेशमीशानं त्रिपुरान्तकम् । लेभे त्वप्रतिमं पुत्रं कृष्णद्वैपायनं प्रभुम् ॥२४॥
द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः । अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदम् ॥२५॥
शुकस्यास्याभवन् पुत्राः पञ्चात्यन्ततपस्विनः । भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ॥२६॥
कन्या कीर्त्तिमती चैव योगमाता धृतव्रता । एतेऽत्रिवंशाः कथिता ब्रह्मणा ब्रह्मवादिनाम् ।
अत ऊर्ध्वं निबोधध्वं कश्यपाद्राजसन्ततिम् ॥२७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे ऋषिवंशकीर्त्तनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

# विंशोऽध्यायः

## सूत उवाच

अदितिः सुषुवे पुत्रमादित्यं कश्यपात् प्रभुम् । तस्यादित्यस्य चैवासीद्भार्याणान्तु चतुष्टयम् ॥ १ ॥
संज्ञा राज्ञी प्रभा छाया पुत्रांस्तासां निबोधत । संज्ञा त्वाष्ट्री तु सुषुवे सूर्यान्मनुमनुत्तमम् ॥ २ ॥
यमञ्च यमुनाञ्चैव राज्ञी रेवन्तमेव च । प्रभा प्रभातमादित्याच्छाया सावर्णिमात्मजम् ॥ ३ ॥
शनिञ्च तपतीञ्चैव विष्टिञ्चैव यथाक्रमम् । मनोस्तु प्रथमस्यासन् नव पुत्रास्तु तत्समाः ॥ ४ ॥

इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च । नरिष्यन्तश्च नाभागो ह्यरिष्टः करुषस्तथा ॥ ५ ॥
पृषध्रश्च महातेजा नवैते शक्रसन्निभाः । इला ज्येष्ठा वरिष्ठा च सोमवंशं व्यवर्धयत् ॥ ६ ॥
बुधस्य गत्वा भवनं सोमपुत्रेण सङ्गता । असूत सोमजाद्देवी पुरूरवसमुत्तमम् ॥ ७ ॥
पितॄणां तृप्तिकर्त्तारं बुधादिति हि नः श्रुतम् । प्राप्य पुत्रं सुविमलं सुद्युम्न इति विश्रुतः ॥ ८ ॥
इला पुत्रत्रयं लेभे पुनः स्त्रीत्वमविन्दत । उत्कलश्च गयश्चैव विनतश्च तथैव च ॥ ९ ॥
सर्वे तेऽप्रतिमप्रख्याः प्रपन्नाः कमलोद्भवम् । इक्ष्वाकोश्चाभवद्वीरो विकुक्षिर्नाम पार्थिवः ॥१०॥
ज्येष्ठपुत्रः स तस्यासीद्दश पञ्च च तत्सुताः । तेषां ज्येष्ठः ककुत्स्थोऽभूत् काकुत्स्थस्तु सुयोधनः॥११॥
सुयोधनात् पृथुः श्रीमान् विश्वकश्च पृथोः सुतः । विश्वकादार्द्रको धीमान् युवनाश्वश्च तत्सुतः ॥१२॥
स गोकर्णमनुप्राप्य युवनाश्वः प्रतापवान् । दृष्ट्वासौ गौतमं विप्रं तपन्तमनलप्रभम् ॥१३॥
प्रणम्य दण्डवद्भूमौ पुत्रकामो महीपतिः । अपृच्छत् कर्मणा केन धार्मिकं प्राप्नुयात् सुतम्॥१४॥

## गौतम उवाच

आराध्य पुरुषं पूर्वं नारायणमनामयम् । अनादिनिधनं देवं धार्मिकं प्राप्नुयात् सुतम् ॥१५॥
यस्य पुत्रः स्वयं ब्रह्मा पौत्रः स्यान्नीललोहितः । तमादिकृष्णमीशानमाराध्याप्नोति तत्सुतम् ॥१६॥
न यस्य भगवान् ब्रह्मा प्रभावं वेत्ति तत्त्वतः । तमाराध्य हृषीकेशं प्राप्नुयाद्धार्मिकं सुतम् ॥१७॥
स गौतमवचः श्रुत्वा युवनाश्वो महीपतिः । आराधयन् हृषीकेशं वासुदेवं सनातनम् ॥१८॥
तस्य पुत्रोऽभवद्वीरः श्रावस्तिरिति विश्रुतः । निर्मिता येन श्रावस्तीर्गौडदेशे महापुरी ॥१९॥
तस्माच्च बृहदश्वोऽभूत् तस्मात् कुवलयाश्वकः । धुन्धुमारः समभवद्धुन्धुं हत्वा महासुरम् ॥२०॥
धुन्धुमारस्य तनयास्त्रयः प्रोक्ता द्विजोत्तमाः । दृढाश्वश्चैव दण्डाश्वः कपिलाश्वस्तथैव च ॥२१॥
दृढाश्वस्य प्रमोदस्तु हर्यश्वस्तस्य चात्मजः । हर्यश्वस्य निकुम्भस्तु निकुम्भात् संहताश्वकः ॥२२॥
कृशाश्वोऽथारुणाश्वश्च संहताश्वस्य वै सुतौ । युवनाश्वोऽरुणाश्वस्य शक्रतुल्यबलो युधि ॥२३॥
कृत्वा तु वारुणीमिष्टिमृषीणां वै प्रसादतः । लेभे त्वप्रतिमं पुत्रं विष्णुभक्तमनुत्तमम् ॥२४॥
मान्धातारं महाप्राज्ञं सर्वशस्त्रभृतां वरम् । मान्धातुः पुरुकुत्सोऽभूदम्बरीषश्च वीर्यवान् ॥२५॥
मुचुकुन्दश्च पुण्यात्मा सर्वे शक्रसमा युधि । अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ॥२६॥
हरितो युवनाश्वस्य हारितस्तत्सुतोऽभवत् । पुरुकुत्सस्य दायादस्त्रसदस्युर्महायशाः ॥२७॥
नर्मदायां समुत्पन्नः सम्भूतिस्तत्सुतः स्मृतः । विष्णुवृद्धः सुतस्तस्य त्वनरण्योऽभवत् ततः ॥२८॥
बृहदश्वोऽनरण्यस्य हर्यश्वस्तत्सुतोऽभवत् । सोऽतीव धार्मिको राजा कर्दमस्य प्रजापतेः ।
प्रसादाद्धार्मिकं पुत्रं लेभे सूर्यपरायणम् ॥२९॥
स तु सूर्यं समभ्यर्च्य राजा वसुमनाः शुभम् । लेभे त्वप्रतिमं पुत्रं त्रिधन्वानमरिन्दमम् ॥३०॥
अयजच्चाश्वमेधेन शत्रून् जित्वा द्विजोत्तमाः । स्वाध्यायवान् दानशीलस्तितिक्षुर्धर्मतत्परः ॥३१॥
ऋषयस्तु समाजग्मुर्यज्ञवाटं महात्मनः । वसिष्ठ-कश्यपमुखा देवाश्चेन्द्रपुरोगमाः ॥३२॥
तान् प्रणम्य महाराजः पप्रच्छ विनयान्वितः । समाप्य विधिवद्यज्ञं वसिष्ठादीन् द्विजोत्तमान् ॥३३॥

## वसुमना उवाच

किं हि श्रेयस्करतरं लोकेऽस्मिन् ब्राह्मणर्षभाः । यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥३४॥

## वसिष्ठ उवाच

अधीत्य वेदान् विधिवत् सुतांश्चोत्पाद्य यत्नतः । इष्ट्वा यज्ञेश्वरं यज्ञैर्गच्छेद्वनमथात्मवान् ॥३५॥

## पुलस्त्य उवाच

आराध्य तपसा देवं योगिनं परमेश्वरम् । प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥३६॥

## पुलह उवाच

यमाहुरेकं पुरुषं पुराणं परमेश्वरम् । तमाराध्य सहस्रांशुं तपसा मोक्षमाप्नुयात् ॥३७॥

## जमदग्निरुवाच

अजो विश्वस्य कर्त्ता यो जगद्बीजं सनातनः । अन्तर्यामी च भूतानां स देवस्तपसेज्यते ॥३८॥

## विश्वामित्र उवाच

योऽग्निः सर्वात्मकोऽनन्तः स्वयम्भूर्विश्वतोमुखः । स रुद्रस्तपसोग्रेण पूज्यते नेतरैर्मखैः ॥३९॥

## भरद्वाज उवाच

यो यज्ञैरिज्यते देवो वासुदेवः सनातनः । स सर्वदैवततनुः पूज्यते परमेश्वरः ॥४०॥

## अत्रिरुवाच

यतः सर्वमिदं जातं यस्यापत्यं प्रजापतिः । तपः सुमहदास्थाय पूज्यते स महेश्वरः ॥४१॥

## गौतम उवाच

यतः प्रधान - पुरुषौ यस्य शक्तिरिदं जगत् । स देवदेवस्तपसा पूजनीयः सनातनः ॥४२॥

## कश्यप उवाच

सहस्रनयनो देवः साक्षी शम्भुः प्रजापतिः । प्रसीदति महायोगी पूजितस्तपसा परः ॥४३॥

## क्रतुरुवाच

प्राप्ताध्ययनयज्ञस्य लब्धपुत्रस्य चैव हि । नान्तरेण तपः कश्चिद्धर्मः शास्त्रेषु दृश्यते ॥४४॥
इत्याकर्ण्य स राजर्षिस्तान् प्रणम्यातिहृष्टधीः । विसर्जयित्वा सम्पूज्य त्रिधन्वानमथाब्रवीत् ॥४५॥
आराधयिष्ये तपसा देवमेकाक्षराह्वयम् । प्राणं बृहन्तं पुरुषमादित्यान्तरसंस्थितम् ॥४६॥
त्वन्तु धर्मरतो नित्यं पालयैतदतन्द्रितः । चातुर्वर्ण्यसमायुक्तमशेषं क्षितिमण्डलम् ॥४७॥
एवमुक्त्वा स तद्राज्यं निधायात्मभवे नृपः । जगामारण्यमनघस्तपस्तप्तुमनुत्तमम् ॥४८॥
हिमवच्छिखरे रम्ये देवदारुवनाश्रये । कन्द - मूल - फलाहारैरुत्पन्नैरयजत् सुरान् ॥४९॥
संवत्सरशतं साग्रं तपोनिर्द्धूतकिल्विषः । जजाप मनसा देवीं सावित्रीं वेदमातरम् ॥५०॥
तस्यैवं जपतो देवः स्वयम्भूः परमेश्वरः । हिरण्यगर्भो विश्वात्मा त देशमगमत् स्वयम् ॥५१॥
दृष्ट्वा देवं समायान्तं ब्रह्माणं विश्वतोमुखम् । ननाम शिरसा तस्य पादयोर्नाम कीर्तयन् ॥५२॥
नमो देवाधिदेवाय ब्रह्मणे परमात्मने । हिरण्यमूर्त्तये तुभ्यं सहस्राक्षाय वेधसे ॥५३॥
नमो धात्रे विधात्रे च नमो देवात्ममूर्त्तये । सांख्ययोगाधिगम्याय नमस्ते ज्ञानमूर्त्तये ॥५४॥
नमस्त्रिमूर्त्तये तुभ्यं स्रष्ट्रे सर्वार्थवेदिने । पुरुषाय पुराणाय योगिनां गुरवे नमः ॥५५॥
ततः प्रसन्नो भगवान् विरिञ्चो विश्वभावनः । वरं वरय भद्रं ते वरदोऽस्मीत्यभाषत ॥५६॥

## राजोवाच

जपेयं देवदेवेश गायत्रीं वेदमातरम् । भूयो वर्षशतं साग्रं तावदायुर्भवेन्मम ॥५७॥
वाढमित्याह विश्वात्मा समालोक्य नराधिपम् । स्पृष्ट्वा कराभ्यां सुप्रीतस्तत्रैवान्तरधीयत ॥५८॥

सोऽपि लब्धवरः श्रीमान् जजापातिप्रसन्नधीः । शान्तस्त्रिषवणस्नायी कन्द - मूल - फलाशनः ॥५९॥
तत्सम्पूर्णे वर्षशते भगवानुग्रदीधितिः । प्रादुरासीन्महायोगी भानोर्मण्डलमध्यगः ॥६०॥
तं दृष्ट्वा वेदवपुषं मण्डलस्थं सनातनम् । स्वयम्भुवमनाद्यन्तं ब्रह्माणं विस्मयं गतः ॥६१॥
तुष्टाव वैदिकैर्मन्त्रैः सावित्र्या च विशेषतः । क्षणादपश्यत् पुरुषं तमेव परमेश्वरम् ॥६२॥
चतुर्मुखं जटामौलिमष्टहस्तं त्रिलोचनम् । चन्द्रावयवलक्ष्माणं नरनारीतनुं हरम् ॥६३॥
भासयन्तं जगत् कृत्स्नं नीलकण्ठं स्वरश्मिभिः । रक्ताम्बरधरं रक्तं रक्तमाल्यानुलेपनम् ॥६४॥
तद्भावभावितो दृष्ट्वा सद्भावेन परेण हि । ननाम शिरसा रुद्रं सावित्र्यानेन चैव हि ॥६५॥
नमस्ते नीलकण्ठाय भास्वते परमेष्ठिने । त्रयीमयाय रुद्राय कालरूपाय हेतवे ॥६६॥
तदा प्राह महादेवो राजानं प्रीतमानसः । इमानि मे रहस्यानि नामानि शृणु चानघ ॥६७॥
सर्ववेदेषु गीतानि संसारशमनानि तु । नमस्कुरुष्व नृपते एभिर्मां सततं शुचिः ॥६८॥
अध्यायं शतरुद्रीयं यजुषां सारमुद्धृतम् । जपस्वानन्यचेतस्को मय्यासक्तमना नृप ॥६९॥
ब्रह्मचारी मिताहारो भस्मनिष्ठः समाहितः । जपेदामरणाद्रुद्रं स याति परमं पदम् ॥७०॥
इत्युक्त्वा भगवान् रुद्रो भक्तानुग्रहकाम्यया । पुनः संवत्सरशतं राज्ञे ह्यायुरकल्पयत् ॥७१॥
दत्त्वास्मै तत् परं ज्ञानं वैराग्यं परमेश्वरः । क्षणादन्तर्दधे रुद्रस्तदद्भुतमिवाभवत् ॥७२॥
राजापि तपसा रुद्रं जजापानन्यमानसः । भस्मच्छन्नस्त्रिषवणं स्नात्वा शान्तःसमाहितः॥७३॥
जपतस्तस्य नृपतेः पूर्णे वर्षशते पुनः । योगप्रवृत्तिरभवत् कालात् कालपरं पदम् ॥७४॥
विवेशैतद्वेदसारं स्थानं वै परमेष्ठिनः । भानोः स मण्डलं शुभ्रं ततो यातो महेश्वरम्॥७५॥
यः पठेच्छृणुयाद्वापि राज्ञश्चरितमुत्तमम् । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥७६॥

इति श्री कौर्मे महापुराणे पूर्वभागे राजवंशकीर्त्तनं नाम विंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः

## सूत उवाच

त्रिधन्वा राजपुत्रस्तु धर्मेणापालयन्महीम् । तस्य पुत्रोऽभवद्विद्वांस्त्रय्यारुण इति श्रुतः ॥ १ ॥
तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः । भार्या सत्यधना नाम हरिश्चन्द्रमजीजनत् ॥ २ ॥
हरिश्चन्द्रस्य पुत्रोऽभूद्रोहितो नाम वीर्यवान् । हरितो रोहितस्याथ धुन्धुस्तस्य सुतोऽभवत् ॥ ३ ॥
विजयश्च सुदेवश्च धुन्धुपुत्रौ बभूवतुः । विजयस्याभवत् पुत्रः कारुको नाम वीर्यवान् ॥ ४ ॥
कारुकस्य वृकः पुत्रस्तस्माद्बाहुरजायत । सगरस्तस्य पुत्रोऽभूद्राजा परमधार्मिकः ॥ ५ ॥
द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा । ताभ्यामाराधितो वह्निः प्रददौ वरमुत्तमम् ॥ ६ ॥
एकं भानुमती पुत्रमगृह्णादसमञ्जसम् । प्रभा षष्टिसहस्रन्तु पुत्राणां जगृहे शुभा ॥ ७ ॥
असमञ्जसपुत्रोऽभूदंशुमान् नाम पार्थिवः । तस्य पुत्रो दिलीपस्तु दिलीपात् तु भगीरथः ॥ ८ ॥
येन भागीरथी गङ्गा तपः कृत्वावतारिता । प्रसादाद्देवदेवस्य महादेवस्य धीमतः ॥ ९ ॥
भगीरथस्य तपसा देवः प्रीतमना हरः । बभार शिरसा गङ्गां सोमान्ते सोमभूषणः ॥१०॥

भगीरथसुतश्चापि श्रुतो नाम बभूव ह । नाभागस्तस्य दायादः सिन्धुद्वीपस्ततोऽभवत् ॥११॥
अयुतायुः सुतस्तस्य ऋतुपर्णो महाबलः । ऋतुपर्णस्य पुत्रोऽभूत् सुदासो नाम धार्मिकः ॥१२॥
सौदासस्तस्य तनयः ख्यातः कल्माषपादकः । वसिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके ॥१३॥
अश्मकं जनयामास तमिक्ष्वाकुकुलध्वजम् । अश्मकस्योत्कलायान्तु नकुलो नाम पार्थिवः ॥१४॥
स हि रामभयाद्राजा वनं प्राप सदुःखितः । दधत् स नारीकवचं तस्माच्छतरथोऽभवत् ॥१५॥
तस्माद्दिलिविलिः श्रीमान् वृद्धशर्मा च तत्सुतः । तस्माद्विश्वसहस्तस्मात् खट्वाङ्ग इति विश्रुतः ॥१६॥
दीर्घबाहुः सुतस्तस्माद्रघुस्तस्मादजायत । रघोरजः समुत्पन्नो राजा दशरथस्ततः ॥१७॥
रामो दाशरथिर्वीरो धर्मज्ञो लोकविश्रुतः । भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ॥१८॥
सर्वे शक्रसमा युद्धे विष्णुशक्तिसमन्विताः । जज्ञे रावणनाशार्थं विष्णुरंशेन विश्वभुक् ॥१९॥
रामस्य भार्या सुभगा जनकस्यात्मजा सुता । सीता त्रिलोकविख्याता शीलौदार्यगुणान्विता ॥२०॥
तपसा तोषिता देवी जनकेन गिरीन्द्रजा । प्रायच्छज्जानकीं सीतां राममेवाश्रितां पतिम् ॥२१॥
प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ॥२२॥
स राजा जनको धीमान् दातुकामः सुतामिमाम् । अघोषयदमित्रघ्नो लोकेऽस्मिन् द्विजपुङ्गवाः ॥२३॥
इदं धनुः समादातुं यः शक्नोति जगत्त्रये । देवो वा दानवो वापि स सीतां लब्धुमर्हति ॥२४॥
विज्ञाय रामो बलवान् जनकस्य गृहं प्रभुः । भञ्जयामास चादाय गत्वासौ लीलयैव हि ॥२५॥
उद्वावाहाथ तां कन्यां पार्वतीमिव शङ्करः । रामः परमधर्मात्मा सेनामिव च षण्मुखः ॥२६।
ततो बहुतिथे काले राजा दशरथः स्वयम् । रामं ज्येष्ठसुतं वीरं राजानं कर्त्तुमारभत् ॥२७॥
तस्याथ पत्नी सुभगा कैकेयी चारुहासिनी । निवारयामास पतिं प्राह सम्भ्रान्तमानसा ॥२८॥
मत्सुतं भरतं वीरं राजानं कर्त्तुमर्हसि । पूर्वमेव वरो यस्माद्दत्तो मे भवतानघ ॥२९॥
स तस्या वचनं श्रुत्वा राजा दुःखितमानसः । वाढमित्यब्रवीद्वाक्यं तथा रामोऽपि धर्मवित् ॥३०॥
प्रणम्याथ पितुः पादौ लक्ष्मणेन सहाच्युतः । ययौ वनं सपत्नीकः कृत्वा समयमात्मवान् ॥३१॥
संवत्सराणां चत्वारि दश चैव महाबलः । उवास तत्र भगवान् लक्ष्मणेन सह प्रभुः ॥३२॥
कदाचिद्वसतोऽरण्ये रावणो नाम राक्षसः । परिव्राजकवेषेण सीतां हृत्वा ययौ पुरीम् ॥३३॥
अदृष्ट्वा लक्ष्मणो रामः सीतामाकुलितेन्द्रियौ । दुःखशोकाभिसन्तप्तौ बभूवतुररिन्दमौ ॥३४॥
ततः कदाचित् कपिना सुग्रीवेण द्विजोत्तमाः । वानराणामभूत् सख्यं रामस्याक्लिष्टकर्मणः ॥३५॥
सुग्रीवस्यानुगो वीरो हनूमान् नाम वानरः । वायुपुत्रो महातेजा रामस्यासीत् प्रियः सदा ॥३६॥
स कृत्वा परमं धैर्यं रामाय कृतनिश्चयः । आनयिष्यामि तां सीतामित्युक्त्वा विचचार ह ॥३७॥
महीं सागरपर्यन्तां सीतादर्शनतत्परः । जगाम रावणपुरीं लङ्कां सागरसंस्थिताम् ॥३८॥
तत्राथ निर्जने देशे वृक्षमूले शुचिस्मिताम् । अपश्यदमलां सीतां राक्षसीभिः समावृताम् ॥३९॥
अश्रुपूर्णेक्षणां हृद्यां संस्मरन्तीमनिन्दिताम् । राममिन्दीवरश्यामं लक्ष्मणञ्चात्मसंस्थितम् ॥४०॥
निवेदयित्वा चात्मानं सीतायै रहसि प्रभुः । असंशयाय प्रददावस्यै रामाङ्गुलीयकम् ॥४१॥
दृष्ट्वाङ्गुलीयकं सीता पत्युः परमशोभनम् । मेने समागतं रामं प्रीतिविस्फुरितेक्षणा ॥४२॥
समाश्वास्य तदा सीतां दृष्ट्वा रामस्य चान्तिकम् । नयिष्ये त्वां महाबाहुमुक्त्वा रामं ययौ पुनः ॥४३॥
निवेदयित्वा रामाय सीतादर्शनमात्मवान् । तस्थौ रामेण पुरतो लक्ष्मणेन च पूजितः ॥४४॥
ततः स रामो बलवान् सार्द्धं हनूमता स्वयम् । लक्ष्मणेन च युद्धाय बुद्धिं चक्रे हि रक्षसा ॥४५॥
कृत्वाथ वानरशतैर्लङ्कामार्गं महोदधेः । सेतुं परमधर्मात्मा रावणं हतवान् प्रभुः ॥४६॥

सपत्नीकं हि सपूतं सभ्रातृकमरिन्दमः । आनयामास तां सीतां वायुपुत्रसहायवान् ॥४७॥
सेतुमध्ये महादेवमीशानं कृत्तिवाससम् । स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥४८॥
तस्य देवो महादेवः पार्वत्या सह शङ्करः । प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥४९॥
ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीदं द्विजातयः । महापातकसंयुक्तास्तेषां पापं विनंक्ष्यति ॥५०॥
अन्यानि चैव पापानि स्नातस्यात्र महोदधौ । दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥५१॥
यावत् स्थास्यन्ति गिरयो यावदेषा च मेदिनी । यावत् सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥५२॥
स्नानं दानं तपः श्राद्धं सर्वं भवतु चाक्षयम् । स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥५३॥
इत्युक्त्वा भगवाञ्छम्भुः परिष्वज्य तु राघवम् । सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥५४॥
रामोऽपि पालयामास राज्यं धर्मपरायणः । अभिषिक्तो महातेजा भरतेन महाबलः ॥५५॥
विशेषाद् ब्राह्मणान् सर्वान् पूजयामास चेश्वरम् । यज्ञेन यज्ञहन्तारमश्वमेधेन शङ्करम् ॥५६॥
रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः । लवश्च सुमहाभागः सर्वतत्त्वार्थवित् सुधीः ॥५७॥
अतिथिस्तु कुशाज्जज्ञे निषधस्तत्सुतोऽभवत् । नलश्च निषधस्यासीन्नभास्तस्मादजायत ॥५८॥
नभसः पुण्डरीकाक्षः क्षेमधन्वा तु तत्सुतः । तस्य पुत्रोऽभवद्वीरो देवानीकः प्रतापवान् ॥५९॥
अहीनगुस्तस्य सुतो महस्वांस्तत्सुतोऽभवत् । तस्माच्चन्द्रावलोकस्तु तारापीडश्च तत्सुतः ॥६०॥
तारापीडाच्चन्द्रगिरिर्भानुवित्तस्ततोऽभवत् । श्रुतायुरभवत् तस्मादेते चेक्ष्वाकुवंशजाः ।
सर्वे प्राधान्यतः प्रोक्ताः समासेन द्विजोत्तमाः ॥६१॥
य इमं शृणुयान्नित्यमिक्ष्वाकोर्वंशमुत्तमम् । सर्वपापविनिर्मुक्तो देवलोके महीयते ॥६२॥

इति श्रीकौर्मे महापुराणे पूर्वभागे सूर्यवंशे इक्ष्वाकुवंशकथनं नामैकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः

## सूत उवाच

ऐलः पुरूरवाश्चाथ राजा राज्यमपालयत् । तस्य पुत्रा बभूवुर्हि षडिन्द्रसमतेजसः ॥ १ ॥
आयुर्मायुरमायुश्च विश्वायुश्चैव वीर्यवान् । शतायुश्च श्रुतायुश्च दिव्याश्चैवोर्वशीसुताः ॥ २ ॥
आयुषस्तनया वीराः पञ्चैवासन् महौजसः । स्वर्भानुतनयायां वै प्रभायामिति नः श्रुतम् ॥ ३ ॥
नहुषः प्रथमस्तेषां धर्मज्ञो लोकविश्रुतः । नहुषस्य तु दायादाः पञ्चेन्द्रोपमतेजसः ।
उत्पन्नाः पितृकन्यायां विरजायां महाबलाः ॥ ४ ॥
यतिर्ययातिः संयातिरायातिः पञ्चमोऽश्वकः । तेषां ययातिः पञ्चानां महाबलपराक्रमः ॥ ५ ॥
देवयानीमुशनसः सुतां भार्यामवाप सः । शर्मिष्ठामासुरीञ्चैव तनयां वृषपर्वणः ॥ ६ ॥
यदुञ्च तुर्वसुञ्चैव देवयानी व्यजायत । द्रुह्युञ्चानुञ्च पूरुञ्च शर्मिष्ठा चाप्यजीजनत् ॥ ७ ॥
सोऽभ्यषिञ्चदतिक्रम्य ज्येष्ठं यदुमनिन्दितम् । पूरुमेव कनीयांसं पितुर्वचनपालकम् ॥ ८ ॥
दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत् । दक्षिणापरयो राजा यदुं श्रेष्ठं न्ययोजयत् ॥ ९ ॥
प्रतीच्यामुत्तरायाञ्च द्रुह्युञ्चानुमकल्पयत् । तैरियं पृथिवी सर्वा धर्मतः परिपालिता ॥१०॥

राजापि दारसहितो वनं प्राप महायशाः । यदोरप्यभवन् पुत्राः पञ्च देवसुतोपमाः ॥११॥
सहस्रजित् तथा श्रेष्ठः क्रोष्टुर्नीलो जिनो रघुः । सहस्रजित्सुतस्तद्वच्छतजिन्नाम पार्थिवः ॥१२॥
सुताः शतजितोऽप्यासंस्त्रयः परमधार्मिकाः । हैहयश्च हयश्चैव राजा वेणुहयश्च यः ॥१३॥
हैहयस्याभवत् पुत्रो धर्म इत्यभिविश्रुतः । तस्य पुत्रोऽभवद्विप्राः धर्मनेत्रः प्रतापवान् ॥१४॥
धर्मनेत्रस्य कीर्त्तिस्तु सञ्जितस्तत्सुतोऽभवत् । महिष्मान् सञ्जितस्याभूद्भद्रश्रेण्यस्तदन्वयः ॥१५॥
भद्रश्रेण्यस्य दायादो दुर्मदो नाम पार्थिवः । दुर्मदस्य सुतो धीमानन्धको नाम वीर्यवान् ॥१६॥
अन्धकस्य तु दायादाश्चत्वारो लोकसम्मताः । कृतवीर्यः कृताग्निश्च कृतवर्मा तथैव च ॥१७॥
कृतौजाश्च चतुर्थोऽभूत् कार्त्तवीर्यस्तथार्जुनः । सहस्रबाहुर्द्युतिमान् धनुर्वेदविदांवरः ॥१८॥
तस्य रामोऽभवन्मृत्युर्जामदग्न्यो जनार्दनः । तस्य पुत्रशतान्यासन् पञ्च तत्र महारथाः ॥१९॥
कृतास्त्रा बलिनः शूरा धर्मात्मानो मनस्विनः । शूरश्च शूरसेनश्च कृष्णो धृष्णस्तथैव च ।
जयध्वजश्च बलवान् नारायणपरो नृपः ॥२०॥
शूरसेनादयः पूर्वे चत्वारः प्रथितौजसः । रुद्रभक्ता महात्मानः पूजयन्ति स्म शङ्करम् ॥२१॥
जयध्वजस्तु मतिमान् देवं नारायणं हरिम् । जगाम शरणं विष्णुं दैवतं धर्मतत्परः ॥२२॥
तमूचुरितरे पुत्रा नायं धर्मस्तवानघ । ईश्वराराधनरतः पितास्माकमिति श्रुतिः ॥२३॥
तानब्रवीन्महातेजा ह्येष धर्मः परो मम । विष्णोरंशेन सम्भूता राजानो यन्महीतले ॥२४॥
राज्यं पालयितावश्यं भगवान् पुरुषोत्तमः । पूजनीयो यतो विष्णुः पालको जगतां हरिः॥२५॥
सात्त्विकी राजसी चैव तामसी च स्वयम्भुवः । तिस्रस्तु मूर्त्तयः प्रोक्ताः सृष्टिस्थित्यन्तहेतवः ॥२६॥
सत्त्वात्मा भगवान् विष्णुः संस्थापयति सर्वदा । सृजेद् ब्रह्मा रजोमूर्त्तिः संहरेत् तामसो हरः ॥२७॥
तस्मान्महीपतीनान्तु राज्यं पालयतामिदम् । आराध्यो भगवान् विष्णुः केशवः केशिमर्दनः ॥२८॥
निशम्य तस्य वचनं भ्रातरोऽन्ये मनस्विनः । प्रोचुः संहारको रुद्रः पूजनीयो मुमुक्षुभिः ॥२९॥
अयं हि भगवान् रुद्रः सर्वं जगदिदं शिवः । तमोगुणं समाश्रित्य कालान्ते संहरेत् प्रभुः ॥३०॥
या सा घोरतमा मूर्त्तिरस्य तेजोमयी परा । संहरेद्विद्यया पूर्वं संसारं शूलभृत् तया ॥३१॥
ततस्तानब्रवीद्राजा विचिन्त्यासौ जयध्वजः । सत्त्वेन मुच्यते जन्तुः सत्त्वात्मा भगवान् हरिः ॥३२॥
तमूचुर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः । मोचयेत् सत्त्वसंयुक्तं पूजयेच्च ततो हरम् ॥३३॥
अथाब्रवीद्राजपुत्रः प्रहसन् वै जयध्वजः । स्वधर्मो मुक्तये पन्था नान्यो मुनिभिरुच्यते ॥३४॥
तथा च वैष्णवीं शक्तिं नृपाणां दधतां सदा । आराधनं परो धर्मो मुरारेरमितौजसः ॥३५॥
तमब्रवीद्राजपुत्रः कृष्णो मतिमतां वरः । यदर्जुनोऽस्मज्जनकः स धर्मं कृतवानिति ॥३६॥
एवं विवादे वितते शूरसेनोऽब्रवीद्वचः । प्रमाणमृषयो ह्यत्र ब्रूयुस्ते यत् तथैव तत् ॥३७॥
ततस्ते राजशार्दूलाः पप्रच्छुर्ब्रह्मवादिनः । गत्वा सर्वे सुसंरब्धाः सप्तर्षीणां तदाश्रमम् ॥३८॥
तानब्रुवंस्ते मुनयो वसिष्ठाद्या यथार्थतः । या यस्याभिमता पुंसः सा हि तस्यैव देवता ॥३९॥
किन्तु कार्यविशेषेण पूजिता चेष्टदा नृणाम् । विशेषात् सर्वदा नायं नियमो ह्यन्यथा नृपाः ॥४०॥
नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः । विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक् ॥४१॥
देवानां दैवतं विष्णुर्दानवानां त्रिशूलभृत् । गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते ॥४२॥
विद्याधराणां वाग्देवी सिद्धानां भगवान् हरिः । रक्षसां शङ्करो रुद्रः किन्नराणाञ्च पार्वती ॥४३॥
ऋषीणां भगवान् ब्रह्मा महादेवस्त्रिशूलभृत् । मान्या स्त्रीणामुमा देवी तथा विष्णवीशभास्कराः॥४४॥
गृहस्थानाञ्च सर्वे स्युर्ब्रह्म वै ब्रह्मचारिणाम् । वैखानसानामर्कः स्याद्यतीनाञ्च महेश्वरः ॥४५॥

भूतानां भगवान् रुद्रः कुष्माण्डानां विनायकः । सर्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः ॥४६॥
इत्येवं भगवान् ब्रह्मा स्वयं देवोऽभ्यभाषत । तस्माज् जयध्वजो नूनं विष्णवाराधनमर्हति ॥४७॥
किन्तु रुद्रेण तादात्म्यबुद्ध्या पूज्यो हरिर्नरैः । अन्यथा नृपतेः शत्रून् न हरिः संहरेद्यतः ॥४८॥
तान् प्रणम्याथ ते जग्मुः पुरीं परमशोभनाम् । पालयाञ्चक्रिरे पृथ्वीं जित्वा सर्वान् रिपून् रणे॥४९॥
ततः कदाचिद्विप्रेन्द्रा विदेहो नाम दानवः । भीषणः सर्वसत्त्वानां पुरीं तेषां समाययौ ॥५०॥
दंष्ट्राकरालो दीप्तात्मा युगान्तदहनोपमः । शूलमादाय सूर्याभं नादयन् वै दिशो दश ॥५१॥
तन्नादश्रवणान्मर्त्यास्तत्र ये निवसन्ति ते । तत्यजुर्जीवितन्त्वन्ये दुद्रुवुर्भयविह्वलाः ॥५२॥
ततः सर्वे सुसंयत्ताः कार्त्तवीर्यात्मजास्तदा । शूरसेनादयः पञ्च राजानस्तु महाबलाः ।
युद्धाय कृतसंरम्भा विदेहन्त्वभिदुद्रुवुः ॥५३॥
शूरोऽस्त्रं प्राहिणोद्रौद्रं शूरसेनस्तु वारुणम् । प्राजापत्यं तथा कृष्णो वायव्यं धृष्ट एव च ॥५४॥
जयध्वजश्च कौबेरमैन्द्रमाग्नेयमेव च । भञ्जयामास शूलेन तान्यस्त्राणि स दानवः ॥५५॥
ततः कृष्णो महावीर्यो गदामादाय भीषणाम् । स्पृष्टमात्रेण तरसा चिक्षेप च ननाद च ॥५६॥
सम्प्राप्य सा गदास्योरो विदेहस्य शिलोपमम् । न दानवं चालयितुं शशाकान्तकसन्निभम् ॥५७॥
दुद्रुवुस्ते भयग्रस्ता दृष्ट्वा तस्यातिपौरुषम् । जयध्वजस्तु मतिमान् सस्मार जगतः पतिम्॥५८॥
विष्णुं जयिष्णुं लोकादिमप्रमेयमनामयम् । त्रातारं पुरुषं पूर्वं श्रीपतिं पीतवाससम् ॥५९॥
ततः प्रादुरभूच्चक्रं सूर्यायुतसमप्रभम् । आदेशाद्वासुदेवस्य भक्तानुग्रहकारणात् ॥६०॥
जग्राह जगतां योनिं स्मृत्वा नारायणं नृपः । प्राहिणोद्वै विदेहाय दानवेभ्यो यथा हरिः ॥६१॥
सम्प्राप्य तस्य घोरस्य स्कन्धदेशं सुदर्शनम् । पृथिव्यां पातयामास शिरोऽद्रिशिखराकृति ॥६२॥
तद्धि चक्रं पुरा विष्णुस्तपसाराध्य शङ्करम् । यस्मादवाप तत् तस्मादसुराणां विनाशकम् ॥६३॥
तस्मिन् हते देवरिपौ शूराद्या भ्रातरो नृपाः । समाययुः पुरीं रम्यां भ्रातरञ्चाप्यपूजयन् ॥६४॥
श्रुत्वा जगाम भगवान् जयध्वजपराक्रमम् । कार्तवीर्यसुतं द्रष्टुं विश्वामित्रो महामुनिः ॥६५॥
तमागतमथो दृष्ट्वा राजा सम्भ्रान्तलोचनः । समावेश्यासने रम्ये पूजयामास भावतः ॥६६॥
उवाच भगवन् घोरः प्रसादाद्भवतोऽसुरः । निपातितो मया सोऽथ विदेहो दानवेश्वरः ॥६७॥
त्वद्वाक्याच्छिन्नसन्देहो विष्णुं सत्यपराक्रमम् । प्रपन्नः शरणं तेन प्रसादो मे कृतः शुभः ॥६८॥
यक्ष्यामि परमेशानं विष्णुं पद्मदलेक्षणम् । कथं केन विधानेन सम्पूज्यो हरिरीश्वरः ॥६९॥
कोऽयं नारायणो देवः किम्प्रभावश्च सुव्रत । सर्वमेतन्ममाचक्ष्व परं कौतूहलं हि मे ॥७०॥

## विश्वामित्र उवाच

यतः प्रवृत्तिर्भूतानां यस्मिन् सर्वं यतो जगत् । स विष्णुः सर्वभूतात्मा तमाश्रित्य विमुच्यते ॥७१॥
यमक्षरात् परतरात् परं प्राहुर्गुहाशयम् । आनन्दं परमं व्योम स वै नारायणः स्मृतः ॥७२॥
नित्योदितो निर्विकल्पो नित्यानन्दो निरञ्जनः । चतुर्व्यूहधरो विष्णुरव्यूहः प्रोच्यते स्वयम् ॥७३॥
परमात्मा परं धाम परं व्योम परं पदम् । त्रिपादमक्षरं ब्रह्म तमाहुर्ब्रह्मवादिनः ॥७४॥
स वासुदेवो विश्वात्मा योगात्मा पुरुषोत्तमः । यस्यांशसम्भवो ब्रह्मा रुद्रोऽपि परमेश्वरः ॥७५॥
स्ववर्णाश्रमधर्मेण पुंसायं पुरुषोत्तमः । अकामहतभावेन समाराध्यो न चान्यथा ॥७६॥
एतावदुक्त्वा भगवान् विश्वामित्रो महातपाः । शूराद्यैः पूजितो विप्रो जगामाथ स्वमाश्रमम् ॥७७॥
अथ शूरादयो देवमयजन्त महेश्वरम् । यज्ञेन यज्ञगम्यं तं निष्कामा रुद्रमव्ययम् ॥७८॥

तान् वसिष्ठस्तु भगवान् याजयामास धर्मवित् । गौतमोऽगस्तिरत्रिश्च सर्वे रुद्रपरायणाः ॥७९॥
विश्वामित्रस्तु भगवान् जयध्वजमरिन्दम् । याजयामास भूतादिमादिदेवं जनार्दनम् ॥८०॥
जयध्वजोऽपि तं विष्णुं रुद्रस्य परमां तनुम् । इत्येवं स तदा बुद्ध्वा यत्नेनार्चयदच्युतम् ॥८१॥
तस्य यज्ञे महायोगी साक्षाद्देवः स्वयं हरिः । आविरासीत् स भगवांस्तदद्भुतमिवाभवत् ॥८२॥
य इमं शृणुयान्नित्यं जयध्वजपराक्रमम् । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥८३॥

इति श्रीकौर्मे महापुराणे पूर्वभागे सोमवंशानुकीर्त्तनं नाम द्वाविंशोऽध्यायः ॥२२॥

---

# त्रयोविंशोऽध्यायः

## सूत उवाच

जयध्वजस्य पुत्रोऽभूत् तालजङ्घ इति स्मृतः । शतं पुत्रास्तु तस्यासन् तालजङ्घा इति स्मृताः ॥ १ ॥
तेषां ज्येष्ठो महावीर्यो वीतिहोत्रोऽभवन्नृपः । वृषप्रभृतयश्चान्ये यादवाः पुण्यकर्मिणः ॥ २ ॥
वृषो वंशकरस्तेषां तस्य पुत्रोऽभवन्मधुः । मधोः पुत्रशतन्त्वासीद्वृषणस्तस्य वंशभाक् ॥ ३ ॥
वीतिहोत्रसुतश्चापि विश्रुतोऽनन्त इत्यतः । दुर्जयस्तस्य पुत्रोऽभूत् सर्वशास्त्रविशारदः ॥ ४ ॥
तस्य भार्या रूपवती गुणैः सर्वैरलंकृता । पतिव्रतासीत् पतिना स्वधर्मपरिपालिका ॥ ५ ॥
स कदाचिन्महाराजः कालिन्दीतीरसंस्थिताम् । अपश्यदुर्वशीं देवीं गायन्तीं मधुरस्वराम् ॥ ६ ॥
ततः कामाहतमनास्तत्समीपमुपेत्य वै । प्रोवाच सुचिरं कालं देवि रन्तुं मयार्हसि ॥ ७ ॥
सा देवी नृपतिं दृष्ट्वा रूपलावण्यसंयुतम् । रेमे तेन चिरं कालं कामदेवमिवापरम् ॥ ८ ॥
कालात् प्रबुद्धो राजासावुर्वशीं प्राह शोभनाम् । गमिष्यामि पुरीं रम्यां हसन्ती साब्रवीद्वचः ॥ ९ ॥
न ह्यनेनोपभोगेन भवतो राजसुन्दर । प्रीतिः सञ्जायते मह्यं स्थातव्यं वत्सरं पुनः ॥१०॥
तामब्रवीत् स मतिमान् गत्वा शीघ्रतरं पुरीम् । आगमिष्यामि भूयोऽत्र तन्मेऽनुज्ञातुमर्हसि ॥११॥
तमब्रवीत् सा सुभगा तथा कुरु विशांपते । नान्ययाऽप्सरसा तावद्रन्तव्यं भवता पुनः ॥१२॥
ओमित्युक्त्वा ययौ तूर्णं पुरीं परमशोभनाम् । गत्वा पतिव्रतां पत्नीं दृष्ट्वा भीतोऽभवन्नृपः ॥१३॥
सम्प्रेक्ष्य सा गुणवती भार्या तस्य पतिव्रता । भीतं प्रसन्नया प्राह वाचा पीनपयोधरा ॥१४॥
स्वामिन् किमत्र भवतो भीतिरद्य प्रवर्त्तते । तद् ब्रूहि मे यथातत्त्वं न भयं कर्तुमर्हसि ॥१५॥
स तस्या वाक्यमाकर्ण्य लज्जावनतमानसः । नोवाच किञ्चिन्नृपतिर्ज्ञानदृष्ट्या विवेद सा ॥१६॥
न भेतव्यं त्वया राजन् कार्यं पापविशोधनम् । भीते त्वयि महाराज राष्ट्रं ते नाशमेष्यति ॥१७॥
ततः स राजा द्युतिमान् निर्गत्य तु पुरात् ततः । गत्वा कण्वाश्रमं पुण्यं दृष्ट्वा तत्र महामुनिम् ॥१८॥
निशम्य कण्ववदनात् प्रायश्चित्तविधिं शुभम् । जगाम हिमवत्पृष्ठं समुद्दिश्य महाबलः ॥१९॥
सोऽपश्यत् पथि राजेन्द्रो गन्धर्ववरमुत्तमम् । भ्राजमानं श्रिया व्योम्नि भूषितं दिव्यमालया ॥२०॥
वीक्ष्य मालाममित्रघ्नः सस्माराप्सरसां वराम् । उर्वशीं तां मनश्चक्रे तस्या एवेयमर्हति ॥२१॥
सोऽतीव कामुको राजा गन्धर्वेणाथ तेन हि । चकार सुमहद् युद्धं मालामादातुमुद्यतः ॥२२॥
विजित्य समरे मालां गृहीत्वा दुर्जयो द्विजाः । जगाम तामप्सरसं कालिन्दीं द्रष्टुमादरात् ॥२३॥
अदृष्ट्वाऽप्सरसं तत्र कामबाणाभिपीडितः । बभ्राम सकलां पृथ्वीं सप्तद्वीपसमन्विताम् ॥२४॥

आक्रम्य हिमवत्पार्श्वमुर्वशीदर्शनोत्सुकः । जगाम शैलप्रवरं हेमकूटमिति श्रुतम् ॥२५॥
तत्र तत्राप्सरोवर्या दृष्ट्वा तं सिंहविक्रमम् । कामं सन्दधिरे घोरं भूषितं चित्रमालया ॥२६॥
संस्मरन्नुर्वशीवाक्यं तस्यां संसक्तमानसः । न पश्यति स्म ताः सर्वा गिरेः शृङ्गाणि जग्मिवान् ॥२७॥
तत्राप्यप्सरसं दिव्यामदृष्ट्वा कामपीडितः । देवलोकं महामेरुं ययौ देवपराक्रमः ॥२८॥
स तत्र मानसं नाम सरस्त्रैलोक्यविश्रुतम् । भेजे शृङ्गमतिक्रम्य स्वबाहुबलभावितः ॥२९॥
स तस्य तीरे सुभगां चरन्तीमतिलालसाम् । दृष्टवाननवद्याङ्गीं तस्यै मालां ददौ पुनः ॥३०॥
स मालया तदा देवीं भूषितां प्रेक्ष्य मोहितः । रेमे कृतार्थमात्मानं जानानः सुचिरं तया ॥३१॥
अथोर्वशी राजवर्यं रतान्ते वाक्यमब्रवीत् । किं कृतं भवता वीर पुरीं गत्वा तदा नृप ॥३२॥
स तस्यै सर्वमाचष्ट पत्न्या यत् समुदीरितम् । कण्वस्य दर्शनञ्चैव मालापहरणं तथा ॥३३॥
श्रुत्वैतद्व्याहृतं तेन गच्छेत्याह हितैषिणी । शापं दास्यति ते कण्वो ममापि भवतः प्रिया॥३४॥
तयाऽसकृन्महाराजः प्रोक्तोऽपि मदमोहितः । न तत्याजाथ तत्पार्श्वं तत्र संन्यस्तमानसः ॥३५॥
तदोर्वशी कामरूपा राज्ञे स्वं रूपमुत्कटम् । सुरोमशं पिङ्गलाक्षं दर्शयामास सर्वदा ॥३६॥
तस्यां विरक्तचेतस्कः स्मृत्वा कण्वाभिभाषितम् । धिङ्मामिति विनिश्चित्य तपः कर्त्तुं समारभत् ॥३७॥
संवत्सरद्वादशकं कन्दमूलफलाशनः । भूय एव द्वादशकं वायुभक्षोऽभवन्नृपः ॥३८॥
गत्वा कण्वाश्रमं भीत्या तस्मै सर्वं न्यवेदयत् । वासमप्सरसा भूयस्तपोयोगमनुत्तमम् ॥३९॥
वीक्ष्य तं राजशार्दूलं प्रसन्नो भगवानृषिः । कर्त्तुकामो हि निर्बीजं तस्याघमिदमब्रवीत् ॥४०॥

## कण्व उवाच

गच्छ वाराणसीं दिव्यामीश्वराध्युषितां पुरीम् । आस्ते मोचयितुं लोकं तत्र देवो महेश्वरः ॥४१॥
स्नात्वा सन्तर्प्य विधिवद् गङ्गायां देवतान् पितॄन् । दृष्ट्वा विश्वेश्वरं लिङ्गं किल्बिषान्मोक्ष्यसे क्षणात् ॥४२॥
प्रणम्य शिरसा कण्वमनुज्ञाप्य च दुर्जयः । वाराणस्यां हरं दृष्ट्वा पापान्मुक्तोऽभवत् ततः ॥४३॥
जगाम स्वपुरीं शुभ्रां पालयामास मेदिनीम् । याजयामास तं कण्वो याचितो घृणया मुनिः ॥४४॥
तस्य पुत्रोऽथ मतिमान् सुप्रतीक इति स्मृतः । बभूव जातमात्रं तं राजानमुपतस्थिरे ॥४५॥
उर्वश्याञ्च महावीर्याः सप्त देवसुतोपमाः । कन्या जगृहिरे सर्वा गन्धर्व्यो दयिता द्विजाः ॥४६॥
एष वः कथितः सम्यक् सहस्रजित उत्तमः । वंशः पापहरो नृणां क्रोष्टोरपि निबोधत ॥४७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे सोमवंशानुकीर्तनं नाम त्रयोविंशोऽध्यायः ॥२३॥

---

# चतुर्विंशोऽध्यायः

## सूत उवाच

क्रोष्टोरेकोऽभवत् पुत्रो वृजिनीवानिति श्रुतः । तस्य पुत्रोऽभवत् स्वातिः कुशिकस्तत्सुतोऽभवत् ॥ १ ॥
कुशिकादभवत् पुत्रो नाम्ना चित्ररथो बली । अथ चैत्ररथिर्लोके शशबिन्दुरिति स्मृतः ॥ २ ॥
तस्य पुत्रः पृथुयशा राजाभूद्धर्मतत्परः । पृथुकर्मा च तत्पुत्रस्तस्मात् पृथुजयोऽभवत् ॥ ३ ॥
पृथुकीर्त्तिरभूत् तस्मात् पृथुदानस्ततोऽभवत् । पृथुश्रवास्तस्य पुत्रस्तस्यासीत् पृथुसत्तमः ॥ ४ ॥

उशना तस्य पुत्रोऽभूच्छितेषुस्तत्सुतोऽभवत् । तस्माद्वै रुक्मकवचः परावृत्तश्च यत्सुतः ॥ ५ ॥
परावृत्तसुतो जज्ञे ज्यामघो लोकविश्रुतः । तस्माद्विदर्भः सञ्जज्ञे विदर्भात् क्रथ कौशिकौ ।
लोमपादस्तृतीयस्तु बभ्रुस्तस्यात्मजो नृपः ॥ ६ ॥
धृतिस्तस्याभवत् पुत्रः श्वेतस्तस्याप्यभूत् सुतः । श्वेतस्य पुत्रो बलवान् नाम्ना विश्वसहः स्मृतः ॥ ७ ॥
तस्य पुत्रो महावीर्यः प्रजावान् कौशिकस्ततः । अभूत् तस्य सुतो धीमान् सुमन्तुश्च ततो नलः॥ ८ ॥
कौशिकस्य सुतश्चेदिश्चैद्यास्तस्याभवन् सुताः । तेषां प्रधानो द्युतिमान् वपुष्मांस्तत्सुतोऽभवत् ॥९॥
वपुष्मती बृहन्मेधाः श्रीदेवस्तत्सुतोऽभवत् । तस्य वीतरथो विप्रा रुद्रभक्तो महाबलः ॥१०॥
क्रथस्याप्यभवत् कुन्तिर्धृष्टिस्तस्याभवत् सुतः । धृष्टेर्नाधृतिरुत्पन्नो दशार्हस्तत्सुतो द्विजाः ॥११॥
दशार्हपुत्रो व्योमा स्याजीमूतस्तत्सुतोऽभवत् । तस्य भीमरथः पुत्रस्तस्मान्नवरथः स्मृतः ॥१२॥
दानधर्मरतो नित्यं सत्यशीलपरायणः । अथ भैमरथिर्वीरो विकृतिः परवीरहा ॥१३॥
कदाचिन्मृगयां यातो दृष्ट्वा राक्षसमूर्जितम् । दुद्राव महताविष्टो भयेन मुनिपुङ्गवाः ॥१४॥
अन्वधावत संक्रुद्धो राक्षसस्तं महाबलः । दुर्योधनोऽग्निसङ्काशः शूलासक्तमहाकरः ॥१५॥
राजा नवरथो भीतो नातिदूरादवस्थितम् । अपश्यत् परमं स्थानं सरस्वत्याः सुगोपितम् ॥१६॥
स तद्वेगेन महता सम्प्राप्य मतिमान् नृपः । ववन्दे शिरसा दृष्ट्वा साक्षाद्देवीं सरस्वतीम् ॥१७॥
तुष्टाव वाग्भिरिष्टाभिर्बद्धाञ्जलिरमित्रजित् । पपात दण्डवद्भूमौ त्वामहं शरणं गतः ॥१८॥
नमस्यामि महादेवीं साक्षाद्देवीं सरस्वतीम् । वाग्देवतामनाद्यन्तामीश्वरीं ब्रह्मचारिणीम् ॥१९॥
नमस्ये जगतां योनिं योगिनीं परमां कलाम् । हिरण्यगर्भसम्भूतां त्रिनेत्रां चन्द्रशेखराम् ॥२०॥
नमस्ये परमानन्दां चित्कलां ब्रह्मरूपिणीम् । पाहि मां परमेशानि भीतं शरणमागतम् ॥२१॥
एतस्मिन्नन्तरे क्रुद्धो राजानं राक्षसेश्वरः । हन्तुं समागतः स्थानं यत्र देवी सरस्वती ॥२२॥
समुद्यम्य तदा शूलं प्रविष्टो बलगर्वितः । त्रिलोकमातुर्हि स्थानं शशाङ्कादित्यसन्निभम् ॥२३॥
तदन्तरे महद्भूतं युगान्तादित्यसन्निभम् । शूलेनोरसि निर्भिद्य पातयामास तं भुवि ॥२४॥
गच्छेत्याह महाराज न स्थातव्यं त्वया पुनः । इदानीं निर्भयस्तूर्णं स्थानेऽस्मिन् राक्षसो हतः ॥२५॥
ततः प्रणम्य हृष्टात्मा राजा नवरथः पराम् । पुरीं जगाम विप्रेन्द्राः पुरन्दरपुरोपमाम् ॥२६॥
स्थापयामास देवेशीं तत्र भक्तिसमन्वितः । ईजे च विविधैर्यज्ञैर्होमैर्देवीं सरस्वतीम् ॥२७॥
तस्य चासीद्दशरथः पुत्रः परमधार्मिकः । देव्या भक्तो महातेजाः शकुनिस्तस्य चात्मजः ॥२८॥
तस्मात् करम्भः सम्भूतो देवरातोऽभवत् ततः । ईजे स चाश्वमेधेन देवदत्तश्च तत्सुतः ॥२९॥
मधुस्तस्य तु दायादस्तस्मात् कुरुरजायत । पुत्रद्वयमभूत् तस्य सुत्रामा चानुरेव च ॥३०॥
अनोस्तु पुरुकुत्सोऽभूदंशुस्तस्य च रिक्थभाक् । अथांशोः सत्वतो नाम विष्णुभक्तः प्रतापवान् ॥३१॥
महात्मा दाननिरतो धनुर्वेदविदां वरः । स नारदस्य वचनाद्वासुदेवार्चने रतः ॥३२॥
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् । तस्य नाम्ना तु विख्यातं सात्वतानाञ्च शोभनम् ॥३३॥
प्रवर्तते महच्छास्त्रं कुण्डादीनां हितावहम् । सात्त्वतस्तस्य पुत्रोऽभूत् सर्वशास्त्रविशारदः ॥३४॥
पुण्यश्लोको महाराजस्तेन वै तत् प्रवर्त्तितम् । सात्त्वतान् सत्त्वसम्पन्नान् कौशल्या सुषुवे सुतान्॥३५॥
अन्धकं वै महाभोजं वृष्णिं देवावृधं नृपम् । ज्येष्ठञ्च भजमानाख्यं धनुर्वेदविदां वरम् ॥३६॥
तेषां देवावृधो राजा चचार परमं तपः । पुत्रः सर्वगुणोपेतो मम भूयादिति प्रभुः ॥३७॥
तस्य बभ्रुरिति ख्यातः पुण्यश्लोकोऽभवन् नृपः । धार्मिको रूपसम्पन्नस्तत्त्वज्ञानरतः सदा ॥३८॥
भजमानाः श्रियं दिव्यां भजमानाद्द्विजज्ञिरे । तेषां प्रधानौ विख्यातौ निमिः कृकण एव च ॥३९॥

महाभोजकुले जाता भोजा वैमातृकास्तथा । वृष्णेः सुमित्रो बलवाननमित्रः शिनिस्तथा ॥४०॥
अनमित्रादभूत्रिघ्नो निघ्नस्य द्वौ बभूवतुः । प्रसेनस्तु महाभागः सत्राजिन्नाम चोत्तमः ॥४१॥
अनमित्राच्छिनेर्जज्ञे कनिष्ठाद् वृष्णिनन्दनात् । सत्यवाक् सत्यसम्पन्नः सत्यकस्तत्सुतोऽभवत् ॥४२॥
सात्यकिर्युयुधानस्तु तस्यासङ्गोऽभवत् सुतः । कुणिस्तस्य सुतो धीमांस्तस्य पुत्रो युगन्धरः ॥४३॥
माद्र्यां वृष्णिः सुतो जज्ञे वृष्णे वै यदुनन्दनः । जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तु हि ॥४४॥
श्वफल्कः काशिराजस्य सुतां भार्यामविन्दत । तस्यामजनयत् पुत्रमक्रूरं नाम धार्मिकम् ॥४५॥
उपमङ्गुं तथा मङ्गुमन्ये च बहवः सुताः । अक्रूरस्य स्मृतः पुत्रो देववानिति विश्रुतः ॥४६॥
उपदेवश्च देवात्मा तयोर्विश्वप्रमाथिनौ । चित्रकस्याभवत् पुत्रः पृथुर्विपृथुरेव च ॥४७॥
अश्वग्रीवः सुबाहुश्च सुपार्श्वक - गवेषणौ । अन्धकात् काश्यदुहिता लेभे च चतुरः सुतान् ॥४८॥
कुकुरं भजमानञ्च शमीकं बलगर्वितम् । कुकुरस्य सुतो वृष्णिर्वृष्णेस्तु तनयोऽभवत् ॥४९॥
कपोतरोमा विख्यातस्तस्य पुत्रो विलोमकः । तस्यासीत् तुम्बुरुसखा विद्वान् पुत्रस्तमः किल ।
तमस्याप्यभवत् पुत्रस्तथैवानकदुन्दुभिः ॥५०॥
स गोवर्धनमासाद्य तताप विपुलं तपः । वरं तस्मै ददौ देवो ब्रह्मा लोकमहेश्वरः ॥५१॥
वंशस्य चाक्षयां कीर्त्तिं ज्ञानयोगं तथोत्तमम् । गुरोरप्यधिकं विप्राः कामरूपित्वमेव च ॥५२॥
स लब्ध्वा वरमव्यग्रो वरेण्यो वृषवाहनात् । पूजयामास गानेन स्थाणुं त्रिदशपूजितम् ॥५३॥
तस्य गानरतस्याथ भगवानम्बिकापतिः । कन्यारत्नं ददौ देवो दुर्लभं त्रिदशैरपि ॥५४॥
तया स सङ्गतो राजा गानयोगमनुत्तमम् । अशिक्षयदमित्रघ्नः प्रियां तां भ्रान्तलोचनाम् ॥५५॥
तस्यामुत्पादयामास सुभुजं नाम शोभनम् । रूपलावण्यसम्पन्नां ह्रीमतीमिति कन्यकाम् ॥५६॥
ततस्तं जननी पुत्रं बाल्ये वयसि शोभनम् । शिक्षयामास विधिवद्गानविद्याञ्च कन्यकाम् ॥५७॥
कृतोपनयनो वेदानधीत्य विधिवद् गुरोः । उद्ववाहात्मजां कन्यां गन्धर्वाणान्तु मानसीम् ॥५८॥
तस्यामुत्पादयामास पञ्च पुत्राननुत्तमान् । वीणावादनतत्त्वज्ञान् गानशास्त्रविशारदान् ॥५९॥
पुत्रैः पौत्रैः सपत्नीको राजा गानविशारदः । पूजयामास गानेन देवं त्रिपुरनाशनम् ॥६०॥
ह्रीमतीं चारुसर्वाङ्गीं श्रीमिवायतलोचनाम् । सुबाहुनामा गन्धर्वस्तामादाय ययौ पुरीम् ॥६१॥
तस्यामप्यभवन् पुत्रा गन्धर्वस्य सुतेजसः । सुषेण - वेण - सुग्रीव - सुभोज - नरवाहनाः ॥६२॥
अथासीदभिजित् पुत्रश्चन्दनोदकदुन्दुभेः । पुनर्वसुश्चाभिजितः सम्बभूवाहुकस्ततः ॥६३॥
आहुकस्योग्रसेनश्च देवकश्च द्विजोत्तमाः । देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ।
देववानुपदेवश्च सुदेवो देवरक्षितः ॥६४॥
तेषां स्वसारः सप्तासन् वसुदेवाय ता ददौ । धृतदेवोपदेवा च तथान्या देवरक्षिता ॥६५॥
श्रीदेवा शान्तिदेवा च सहदेवा च सुव्रता । देवकी चापि तासान्तु वरिष्ठाभूत् सुमध्यमा ॥६६॥
उग्रसेनस्य पुत्रोऽभून्न्यग्रोधः कंस एव च । सुभूमी राष्ट्रपालश्च तुष्टिमान् शंकुरेव च ॥६७॥
भजमानादभूत् पुत्रः प्रख्यातोऽसौ विदूरथः । तस्य शूरः समिस्तस्मात् प्रतिक्षत्रश्च तत्सुतः॥६८॥
स्वयंभोजस्ततस्तस्माद् धृतिकः शत्रुतापनः । कृतवर्माथ तत्पुत्रो देवलस्तत्सुतः स्मृतः ।
स शूरस्तत्सुतो धीमान् वसुदेवोऽथ तत्सुतः ॥६९॥
वसुदेवान्महाबाहुर्वासुदेवो जगद्गुरुः । बभूव देवकीपुत्रो देवैरभ्यर्थितो हरिः ॥७०॥
रोहिणी च महाभागा वसुदेवस्य शोभना । असूत पत्नी सङ्कर्षं रामं ज्येष्ठं हलायुधम् ॥७१॥
स एव परमात्मासौ वासुदेवो जगन्मयः । हलायुधः स्वयं साक्षाच्छेषः सङ्कर्षणः प्रभुः ॥७२॥

भृगुशापच्छलेनैव मानयन् मानुषीं तनुम् । बभूव तस्यां देवक्यां रोहिण्यामपि माधवः ।।७३।।
उमादेहसमुद्भूता योगनिद्रा च कौशिकी । नियोगाद्वासुदेवस्य यशोदातनया ह्यभूत् ।।७४।।
ये चान्ये वसुदेवस्य वासुदेवाग्रजाः सुताः । प्रागेव कंसस्तान् सर्वान् जघान मुनिसत्तमाः ।।७५।।
सुषेणश्च तथोदायिर्भद्रसेनो महाबलः । ऋजुदासो भद्रदासः कीर्त्तिमानपि पूजितः ।।७६।।
हतेष्वेतेषु सर्वेषु रोहिणी वसुदेवतः । असूत रामं लोकेशं बलभद्रं हलायुधम् ।।७७।।
जातेऽथ रामे देवानामादिमात्मानमच्युतम् । असूत देवकी कृष्णं श्रीवत्साङ्कितवक्षसम् ।।७८।।
रेवती नाम रामस्य भार्याऽसीत् सुगुणान्विता । तस्यामुत्पादयामास पुत्रौ द्वौ निशठोल्मुकौ ।।७९।।
षोडश - स्त्रीसहस्राणि कृष्णस्याक्लिष्टकर्मणः । बभूवुश्चात्मजास्तासु शतशोऽथ सहस्रशः ।।८०।।
चारुदेष्णः सुचारुश्च चारुवेशो यशोधरः । चारुश्रवाश्चारुयशाः प्रद्युम्नः साम्ब एव च ।।८१।।
रुक्मिण्यां वासुदेवस्य महाबलपराक्रमाः । विशिष्टाः सर्वपुत्राणां सम्बभूवुरिमे सुताः ।।८२।।
तान् दृष्ट्वा तनयान् वीरान् रौक्मिणेयान् जनार्दनात् । जाम्बवत्यब्रवीत् कृष्णं भार्या तस्य शुचिस्मिता ।।८३।।
मम त्वं पुण्डरीकाक्ष विशिष्टगुणवत्तरम् । सुरेशसम्मितं पुत्रं देहि दानवसूदन ।।८४।।
जाम्बवत्या वचः श्रुत्वा जगन्नाथः स्वयं हरिः । समारेभे तपः कर्त्तुं तपोनिधिररिन्दमः ।।८५।।
तच्छृणुध्वं मुनिश्रेष्ठा यथासौ देवकीसुतः । दृष्ट्वा लेभे सुतं रुद्रं तप्त्वा तीव्रं महत् तपः ।।८६।।

इति श्रीकौर्मे महापुराणे पूर्वभागे सोमवंशे यदुवंशानुकीर्तिवर्णनं नाम चतुर्विंशोऽध्यायः ।।२४।।

---

## पञ्चविंशोऽध्यायः

### सूत उवाच

अथ देवो हृषीकेशो भगवान् पुरुषोत्तमः । तताप घोरं पुत्रार्थं निधानं तपसस्तपः ।। १ ।।
स्वेच्छयाप्यवतीर्णोऽसौ कृतकृत्योऽपि विश्वधृक् । चचार स्वात्मनो मूलं बोधयन् परमेश्वरम् ।। २ ।।
जगाम योगिभिर्जुष्टं नानापक्षिसमाकुलम् । आश्रमन्तूपमन्योर्वै मुनीन्द्रस्य महात्मनः ।। ३ ।।
पतत्रिराजमारूढः सुपर्णमतितेजसम् । शङ्ख - चक्र - गदापाणिः श्रीवत्सकृतलक्षणः ।। ४ ।।
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् । ऋषीणामाश्रमैर्जुष्टं वेदघोषनिनादितम् ।। ५ ।।
सिंहर्क्षशरभाकीर्णं शार्दूलगजसंयुतम् । विमलस्वादुपानीयैः सरोभिरुपशोभितम् ।। ६ ।।
आरामैर्विविधैर्जुष्टं देवतायतनैः शुभैः । ऋषिभिर्ऋषिपुत्रैश्च महामुनिगणैस्तथा ।। ७ ।।
वेदाध्ययनसम्पन्नैः सेवितञ्चाग्निहोत्रिभिः । योगिभिर्ध्याननिरतैर्नासाग्रन्यस्तलोचनैः ।। ८ ।।
उपेतं सर्वतः पुण्यं ज्ञानिभिस्तत्त्वदर्शिभिः । नदीभिरभितो जुष्टं जापकैर्ब्रह्मवादिभिः ।। ९ ।।
सेवितं तापसैः पुण्यैरीशाराधनतत्परैः । प्रशान्तैः सत्यसङ्कल्पैर्निःशोकैर्निरुपद्रवैः ।।१०।।
भस्मावदातसर्वाङ्गै रुद्रजाप्यपरायणैः । मुण्डितैर्जटिलैः शुद्धैस्तथान्यैश्च शिखाजटैः ।
सेवितं तापसैर्नित्यं ज्ञानिभिर्ब्रह्मवादिभिः ।।११।।
तत्राश्रमवरे रम्ये सिद्धाश्रमविभूषिते । गङ्गा भगवती नित्यं वहत्येवाघनाशिनी ।।१२।।
स तत्र वीक्ष्य विश्वात्मा तापसान् वीतकल्मषान् । प्रणामेनाथ वचसा पूजयामास माधवः ।।१३।।
तं ते दृष्ट्वा जगद्योनिं शङ्ख-चक्र-गदाधरम् । प्रणेमुर्भक्तिसंयुक्ता योगिनां परमं गुरुम् ।।१४।।

स्तुवन्ति वैदिकैर्मन्त्रैः कृत्वा हृदि सनातनम् । प्रोचुरन्योन्यमव्यक्तमादिदेवं महामुनिम् ॥१५॥
अयं स भगवानेकः साक्षी नारायणः परः । आगच्छत्यधुना देवः प्रधानपुरुषः स्वयम् ॥१६॥
अयमेवाव्ययः स्रष्टा संहर्ता चैव रक्षकः । अमूर्तो मूर्तिमान् भूत्वा मुनीन् द्रष्टुमिहागतः ॥१७॥
एष धाता विधाता च समागच्छति सर्वगः । अनादिरक्षयोऽनन्तो महाभूतो महेश्वरः ॥१८॥
श्रुत्वा बुद्ध्वा हरिस्तेषां वचांसि वचनातिगः । ययौ स तूर्णं गोविन्दः स्थानं तस्य महात्मनः ॥१९॥
उपस्पृश्याथ भावेन तीर्थे तीर्थे स यादवः । चकार देवकीसूनुर्देवर्षिपितृतर्पणम् ॥२०॥
नदीनां तीरसंस्थानि स्थापितानि मुनीश्वरैः । लिङ्गानि पूजयामास शम्भोरमिततेजसः ॥२१॥
दृष्ट्वा दृष्ट्वा समायान्तं तत्र तत्र जनार्दनम् । पूजयाञ्चक्रिरे पुष्पैरक्षतैस्तन्निवासिनः ॥२२॥
समीक्ष्य वासुदेवं तं शार्ङ्गशङ्खासिधारिणम् । तस्थिरे निश्चलाः सर्वे शुभाङ्गं तन्निवासिनः ॥२३॥
यानि तत्रारुरुक्षूणां मानसानि जनार्दनम् । दृष्ट्वा समाहितान्यासन् न निष्क्रामन्ति चाङ्गतः॥२४॥
अथावगाह्य गङ्गायां कृत्वा देवर्षितर्पणम् । आदाय पुष्पवर्याणि मुनीन्द्रस्याविशद् गृहम् ॥२५॥
दृष्ट्वा तं योगिनां श्रेष्ठं भस्मोद्धूलितविग्रहम् । जटाचीरधरं शान्तं ननाम शिरसा मुनिम् ॥२६॥
आलोक्य कृष्णमायान्तं पूजयामास तत्त्ववित् । आसने वासयामास योगिनां प्रथमातिथिम् ॥२७॥
उवाच वचसां योनिं जानीमः परमं पदम् । विष्णुमव्यक्तसंस्थानं शिष्यभावेन संस्थितम् ॥२८॥
स्वागतं ते हृषीकेश सफलानि तपांसि नः । यत् साक्षादेव विश्वात्मा मद्गेहं विष्णुरागतः॥२९॥
त्वां न पश्यन्ति मुनयो यतन्तोऽपीह योगिनः । तादृशस्यात्रभवतः किमागमनकारणम् ॥३०॥
श्रुत्वोपमन्योस्तद्वाक्यं भगवान् देवकीसुतः । व्याजहार महायोगी प्रसन्नं प्रणिपत्य तम् ॥३१॥

## कृष्ण उवाच

भगवन् द्रष्टुमिच्छामि गिरीशं कृत्तिवाससम् । सम्प्राप्तो भवतः स्थानं भगवद्-दर्शनोत्सुकः ॥३२॥
कथं स भगवानीशो दृश्यो योगविदां वरः । मयाऽचिरेण कुत्राहं द्रक्ष्यामि तमुमापतिम् ॥३३॥
प्रत्याह भगवानुक्तो दृश्यते परमेश्वरः । भक्त्यैवोग्रेण तपसा तत् कुरुष्वेह संयतः ॥३४॥
इहेश्वरं देवदेवं मुनीन्द्रा ब्रह्मवादिनः । ध्यायन्त्याराधयन्त्येनं योगिनस्तापसाश्च ये ॥३५॥
इह देवः सपत्नीको भगवान् वृषभध्वजः । क्रीडते विविधैर्भूतैर्योगिभिः परिवारितः ॥३६॥
इहाश्रमे पुरा रुद्रं तपस्तप्त्वा सुदारुणम् । लेभे महेश्वराद्योगं वसिष्ठो भगवानृषिः ॥३७॥
इहैव भगवान् व्यासः कृष्णद्वैपायनः स्वयम् । दृष्ट्वा तं परमेशानं लब्धवान् ज्ञानमैश्वरम् ॥३८॥
इहाश्रमपदे रम्ये तपस्तप्त्वा कपर्दिनः । अविन्दन् पुत्रकान् रुद्रात् सूरयो भक्तिसंयुताः ॥३९॥
इहैव देवताः सर्वाः कालाद्भीता महेश्वरम् । दृष्टवत्यो हरं देवं निर्भया निर्वृतिं ययुः ॥४०॥
इहाराध्य महादेवं सावर्णिस्तपतां वरः । लब्धवान् परमं योगं ग्रन्थकारत्वमुत्तमम् ॥४१॥
प्रवर्त्तयामास शुभां कृत्वा वै संहितां द्विजाः । पौराणिकीं सुपुण्यार्थं सच्छिष्येषु द्विजोत्तमाः॥४२॥
इहैव संहितां दृष्ट्वा कापेयः शांशपायनः । महादेवं चकारेमां पौराणीं तन्नियोगतः ॥४३॥
द्वादशैव सहस्राणि श्लोकानां पुरुषोत्तम । इह प्रवर्त्तिता पुण्या द्व्यष्टसाहस्रिकोत्तरा ॥४४॥
वायवीयोत्तरं नाम पुराणं वेदसम्मितम् । इहैव ख्यापितं शिष्यैः शांशपायनभाषितम् ॥४५॥
याज्ञवल्क्यो महायोगी दृष्ट्वात्र तपसा हरम् । चकार तन्नियोगेन योगशास्त्रमनुत्तमम् ॥४६॥
इहैव भृगुणा पूर्वं तप्त्वाऽपूर्वं महातपः । शुक्रो महेश्वरात् पुत्रो लब्धो योगविदां वरः ॥४७॥
तस्मादिहैव देवेश तपस्तप्त्वा सुदुश्चरम् । द्रष्टुमर्हसि विश्वेशमुग्रं भीमं कपर्दिनम् ॥४८॥

एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः । व्रतं पाशुपतं योगं कृष्णायाऽक्लिष्टकर्मणे ॥४९॥
स तेन मुनिवर्येण व्याहृतो मधुसूदनः । तत्रैव तपसा देवं रुद्रमाराधयत् प्रभुः ॥५०॥
भस्मोद्धूलितसर्वाङ्गो मुण्डो वल्कलसंयुतः । जजाप रुद्रमनिशं शिवैकाहितमानसः ॥५१॥
ततो बहुतिथे काले सोमः सोमार्द्धभूषणः । अदृश्यत महादेवो व्योम्नि देव्या महेश्वरः ॥५२॥

किरीटिनं गदिनं चित्रमालं पिनाकिनं शूलिनं देवदेवम् ।
शार्दूलचर्माम्बरसंवृताङ्गं देव्या महादेवमसौ ददर्श ॥५३॥
प्रभुं पुराणं पुरुषं पुरस्तात् सनातनं योगिनमीशितारम् ।
अणोरणीयांसमनन्तशक्तिं प्राणेश्वरं शम्भुमसौ ददर्श ॥५४॥
परश्वधासक्तकरं त्रिनेत्रं नृसिंहचर्मावृतभस्मगात्रम् ।
समुद्गिरन्तं प्रणवं बृहन्तं सहस्रसूर्यप्रतिमं ददर्श ॥५५॥
न यस्य देवा न पितामहोऽपि नेन्द्रो न चाग्निर्वरुणो न मृत्युः ।
प्रभावमद्यापि वदन्ति रुद्रं तमादिदेवं पुरतो ददर्श ॥५६॥
तदान्वपश्यद् गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् ।
स्तुवन्तमीशं बहुभिर्वचोभिः शङ्खासिचक्रान्वितहस्तमाद्यम् ॥५७॥
कृताञ्जलिं दक्षिणतः सुरेशं हंसाधिरूढं पुरुषं ददर्श ।
स्तुवानमीशस्य परं प्रभावं पितामहं लोकगुरुं दिविष्ठम् ॥५८॥
गणेश्वरानर्कसहस्रकल्पान् नन्दीश्वरादीनमितप्रभावान् ।
त्रिलोकभर्तुः पुरतोऽन्वपश्यत् कुमारमग्निप्रतिमं विशाखम् ॥५९॥
मरीचिमत्रिं पुलहं पुलस्त्यं प्रचेतसं दक्षमथापि कण्वम् ।
पराशरं तत्पुरतो वसिष्ठं स्वायम्भुवञ्चापि मनुं ददर्श ॥६०॥
तुष्टाव मन्त्रैरमरप्रधानं बद्धाञ्जलिर्विष्णुरुदारबुद्धिः ।
प्रणम्य देव्या गिरिशं स्वशक्त्या स्वात्मन्यथात्मानमसौ विचिन्त्य ॥६१॥

## कृष्ण उवाच

नमोऽस्तु ते शाश्वत सर्वयोने ब्रह्माधिपं त्वामृषयो वदन्ति ।
तपश्च सत्त्वञ्च रजस्तमश्च त्वामेव सर्वं प्रवदन्ति सन्तः ॥६२॥
त्वं ब्रह्मा हरिरथ विश्वयोनिरग्निः संहर्त्ता दिनकरमण्डलाधिवासः ।
प्राणस्त्वं हुतवहवासवादिभेदस्त्वामेकं शरणमुपैमि देवमीशम् ॥६३॥
सांख्यास्त्वां त्रिगुणमथाहुरेकरूपं योगास्त्वां सततमुपासते हृदिस्थम् ।
वेदास्त्वामभिदधतीह रुद्रमीड्यं त्वामेकं शरणमुपैमि देवमीशम् ॥६४॥
त्वत्पादे कुसुममथापि पत्रमेकं दत्त्वासौ भवति विमुक्तविश्वबन्धः ।
सर्वाघं प्रणुदति सिद्धयोगिजुष्टं स्मृत्वा ते पदयुगलं भवत्प्रसादात् ॥६५॥

यस्याशेषविभागहीनममलं हृद्यन्तरावस्थितं तत्त्वं ज्योतिरनन्तमेकमचलं सत्यं परं सर्वगम् ।
स्थानं प्राहुरनादिमध्यनिधनं यस्मादिदं जायते नित्यं त्वाहमुपैमि सत्यविभवं विश्वेश्वरं तं शिवम् ॥६६॥
ॐ नमो नीलकण्ठाय त्रिनेत्राय च रंहसे । महादेवाय ते नित्यमीशानाय नमो नमः ॥६७॥
नमः पिनाकिने तुभ्यं नमो मुण्डाय दण्डिने । नमस्ते बहुहस्ताय दिग्वस्त्राय कपर्दिने ॥६८॥

नमो भैरवनादाय कालरूपाय दंष्ट्रिणे । नागयज्ञोपवीताय नमस्ते वह्निरेतसे ॥६९॥
नमोऽस्तु ते गिरीशाय स्वाहाकाराय ते नमः । नमो मुक्ताट्टहासाय भीमाय च नमो नमः ॥७०॥
नमस्ते कामनाशाय नमः कालप्रमाथिने । नमो भैरववेषाय हराय च निषङ्गिणे ॥७१॥
नमोऽस्तु ते त्र्यम्बकाय नमस्ते कृत्तिवाससे । नमोऽम्बिकाधिपतये पशूनां पतये नमः ॥७२॥
नमस्ते व्योमरूपाय व्योमाधिपतये नमः । नरनारीशरीराय सांख्ययोगप्रवर्त्तिने ॥७३॥
नमो भैरवनाथाय देवानुगतलिङ्गिने । कुमारगुरवे तुभ्यं देवदेवाय ते नमः ॥७४॥
नमो यज्ञाधिपतये नमस्ते ब्रह्मचारिणे । मृगव्याधाय महते ब्रह्माधिपतये नमः ॥७५॥
नमो हंसाय विश्वाय मोहनाय नमो नमः । योगिने योगगम्याय योगमायाय ते नमः ॥७६॥
नमस्ते प्राणपालाय घण्टानादप्रियाय च । कपालिने नमस्तुभ्यं ज्योतिषां पतये नमः ॥७७॥
नमो नमो नमस्तुभ्यं भूय एव नमो नमः । मह्यं सर्वात्मना कामान् प्रयच्छ परमेश्वर ॥७८॥

## सूत उवाच

एवं हि भक्त्या देवेशमभिष्टूय स माधवः । पपात पादयो विप्रा देव-देव्योः स दण्डवत् ॥७९॥
उत्थाप्य भगवान् सोमः कृष्णं केशिनिसूदनम् । बभाषे मधुरं वाक्यं मेघगम्भीरनिस्वनः ॥८०॥
किमर्थं पुण्डरीकाक्ष तप्यते भवता तपः । त्वमेव दाता सर्वेषां कामानां कामिनामिह ॥८१॥
त्वं हि सा परमा मूर्त्तिर्मम नारायणाह्वया । न विना त्वां जगत् सर्वं विद्यते पुरुषोत्तम ॥८२॥
वेत्थ नारायणानन्तमात्मानं परमेश्वरम् । महादेवं महायोगं स्वेन योगेन केशव ॥८३॥
श्रुत्वा तद्वचनं कृष्णः प्रहसन् वै वृषध्वजम् । उवाचान्वीक्ष्य विश्वेशं देवीञ्च हिमशैलजाम् ॥८४॥
ज्ञातं हि भवता सर्वं स्वेन योगेन शङ्कर । इच्छाम्यात्मसमं पुत्रं त्वद्भक्तं देहि शङ्कर ॥८५॥
तथास्त्वित्याह विश्वात्मा प्रहृष्टमनसा हरः । देवीमालोक्य गिरिजां केशवं परिषस्वजे ॥८६॥
ततः सा जगतां माता शङ्करार्धशरीरिणी । व्याजहार हृषीकेशं देवी हिमगिरीन्द्रजा ॥८७॥
अहं जाने तवानन्त निश्चलां सर्वदाच्युत । अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव ॥८८॥
त्वं हि नारायणः साक्षात् सर्वात्मा पुरुषोत्तमः । प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः ॥८९॥
पश्य त्वमात्मनात्मानमात्मानं मम सम्प्रति । नावयोर्विद्यते भेद एकं पश्यन्ति सूरयः ॥९०॥
इमानिह वरानिष्टान् मत्तो गृह्णीष्व केशव । सर्वज्ञत्वं तथाऽश्वर्यं ज्ञानं तत् पारमेश्वरम् ।
ईश्वरे निश्चलां भक्तिमात्मन्यपि परं बलम् ॥९१॥
एवमुक्तस्तया कृष्णो महादेव्या जनार्दनः । आशिषः शिरसाऽगृह्णाद्देवोऽप्याह महेश्वरः ॥९२॥

प्रगृह्य कृष्णं भगवानथेशः करेण देव्या सह देवदेवः ।
सम्पूज्यमानो मुनिभिः सुरेशैर्जगाम कैलासगिरिं गिरीशः ॥९३॥

इति श्रीकौर्मे महापुराणे पूर्वभागे सोमवंशे यदुवंशानुकीर्त्तने
श्रीकृष्णतपश्चरणं नाम पञ्चविंशोऽध्यायः ॥२५॥

———

# षड्विंशोऽध्यायः

## सूत उवाच

प्रविश्य मेरुशिखरं कैलासं कनकप्रभम् । रराम भगवान् सोमः केशवेन महेश्वरः ॥ १ ॥
अपश्यंस्ते महात्मानं कैलाशगिरिवासिनः । पूजयाञ्चक्रिरे कृष्णं देवं नारायणं प्रभुम् ॥ २ ॥
चतुर्बाहुमुदाराङ्गं कालमेघसमप्रभम् । किरीटिनं शार्ङ्गपाणिं श्रीवत्साङ्कितवक्षसम् ॥ ३ ॥
दीर्घबाहुं विशालाक्षं पीतवाससमच्युतम् । दधानमुरसा मालां वैजयन्तीमनुत्तमाम् ॥ ४ ॥
भ्राजमानं श्रिया देव्या युवानमतिकोमलम् । पद्माङ्घ्रि पद्मनयनं सस्मितं सद्गतिप्रदम् ॥ ५ ॥
कदाचित् तत्र लीलार्थं देवकीनन्दवर्द्धनः । भ्राजमानः श्रिया कृष्णश्चचार गिरिकन्दरे ॥ ६ ॥
गन्धर्वाप्सरसां मुख्या नागकन्याश्च कृत्स्नशः । सिद्धा यक्षाश्च गन्धर्वा देवास्तत्र जगन्मयम् ॥ ७ ॥
दृष्ट्वाश्चर्यं परं गत्वा हर्षादुत्फुल्ललोचनाः । मुमुचुः पुष्पवर्षाणि तस्य मूर्ध्नि महात्मनः ॥ ८ ॥
गन्धर्वकन्यका दिव्यास्तद्वदप्सरसो वराः । दृष्ट्वा चकमिरे कृष्णं स्रस्तवस्त्रविभूषणाः ॥ ९ ॥
काश्चिद् गायन्ति विविधं गानं गीतविशारदाः । सम्प्रेक्ष्य देवकीसूनुं सुन्दरं काममोहिताः ॥१०॥
काश्चिद्विलासबहुला नृत्यन्ति स्म तदग्रतः । सम्प्रेक्ष्य सस्मितं काश्चित् पपुस्तद्वदनामृतम् ॥११॥
काश्चिद्भूषणवर्याणि स्वाङ्गादादाय सादरम् । भूषयाञ्चक्रिरे कृष्णं कामिन्यो लोकभूषणम् ॥१२॥
काश्चिद्भूषणवर्याणि समादाय तदङ्गतः । स्वात्मानं भूषयामासुः स्वात्मकैरपि माधवम् ॥१३॥
काचिदागत्य कृष्णस्य समीपं काममोहिता । चुचुम्ब वदनाम्भोजं हरेर्मुग्धमृगेक्षणा ॥१४॥
प्रगृह्य काचिद् गोविन्दं करेण भवनं स्वकम् । प्रापयामास लोकादिं मायया तस्य मोहिता ॥१५॥
तासां स भगवान् कृष्णः कामान् कमललोचनः । बहूनि कृत्वा रूपाणि पूरयामास लीलया ॥१६॥
एवं वै सुचिरं कालं देवदेवपुरे हरिः । रेमे नारायणः श्रीमान् मायया मोहयन् जगत् ॥१७॥
गते बहुतिथे काले द्वारवत्या निवासिनः । बभूवुर्विकला भीता गोविन्दविरहे जनाः ॥१८॥
ततः सुपर्णो बलवान् पूर्वमेव विसर्जितः । स कृष्णं मार्गमाणस्तु हिमवन्तं ययौ गिरिम् ॥१९॥
अदृष्ट्वा तत्र गोविन्दं प्रणम्य शिरसा मुनिम् । आजगामोपमन्युं तं पुरीं द्वारवतीं पुनः ॥२०॥
तदन्तरे महादैत्या राक्षसाश्चातिभीषणाः । आजग्मुर्द्वारकां शुभ्रां भीषयन्तः सहस्रशः ॥२१॥
स तान् सुपर्णो बलवान् कृष्णतुल्यपराक्रमः । हत्वा युद्धेन महता रक्षति स्म पुरीं शुभाम् ॥२२॥
एतस्मिन्नेव काले तु नारदो भगवानृषिः । दृष्ट्वा कैलासशिखरे कृष्णं द्वारवतीं गतः ॥२३॥
ते दृष्ट्वा नारदमृषिं सर्वे तत्र निवासिनः । प्रोचुर्नारायणो नाथः कुत्रास्ते भगवान् हरिः ॥२४॥
स तानुवाच भगवान् कैलासशिखरे हरिः । रमतेऽद्य महायोगी तं दृष्ट्वाऽहमिहागतः ॥२५॥
तस्योपश्रुत्य वचनं सुपर्णः पततां वरः । जगामाकाशगो विप्राः कैलासं गिरिमुत्तमम् ॥२६॥
ददर्श देवकीसूनुं भवने रत्नमण्डिते । वरासनस्थं गोविन्दं देवदेवान्तिके हरिम् ॥२७॥
उपास्यमानममरैर्दिव्यस्त्रीभिः समन्ततः । महादेवगणैः सिद्धैर्योगिभिः परिवारितम् ॥२८॥
प्रणम्य दण्डवद्भूमौ सुपर्णः शङ्करं शिवम् । निवेदयामास हरिं प्रवृत्तं द्वारकापुरे ॥२९॥
ततः प्रणम्य शिरसा शङ्करं नीललोहितम् । आजगाम पुरीं कृष्णः सोऽनुज्ञातो हरेण तु ॥३०॥
आरुह्य कश्यपसुतं स्त्रीगणैरभिपूजितः । वचोभिरमृतास्वादैर्मानितो मधुसूदनः ॥३१॥
वीक्ष्य यान्तममित्रघ्नं गन्धर्वाप्सरसां वराः । अन्वगच्छन् महायोगं शङ्ख-चक्र-गदाधरम् ॥३२॥

विसर्जयित्वा विश्वात्मा सर्वा एवाङ्गना हरिः । ययौ स तूर्णं गोविन्दो दिव्यां द्वारवतीं पुरीम्॥३३॥
गते देवेऽसुररिपौ न कामिन्यो मुनीश्वराः । निशेव चन्द्ररहिता विना तेन चकाशिरे ॥३४॥
श्रुत्वा पौरजनास्तूर्णं कृष्णागमनमुत्तमम् । मण्डयाञ्चक्रिरे दिव्यां पुरीं द्वारवतीं शुभाम् ॥३५॥
पताकाभिर्विशालाभिर्ध्वजैरन्तर्वहिष्कृतैः । मालादिभिः पुरीं रम्यां भूषयाञ्चक्रिरे जनाः ॥३६॥
अवादयन्त विविधान् वादित्रान् मधुरस्वनान् । शङ्खान् सहस्रशो दध्मुर्वीणावादान् वितेनिरे ॥३७॥
प्रविष्टमात्रे गोविन्दे पुरीं द्वारवतीं शुभाम् । अगायन् मधुरं गानं स्त्रियो यौवनशोभिताः ॥३८॥
दृष्ट्वा ननृतुरीशानं स्थिताः प्रासादमूर्द्धसु । मुमुचुः पुष्पवर्षाणि वसुदेवसुतोपरि ॥३९॥
प्रविश्य भवनं कृष्णस्त्वाशीर्वादाभिवर्द्धितः । वरासने महायोगी भाति देवीभिरन्वितः ॥४०॥
सुरम्ये मण्डपे शुभ्रे शङ्खाद्यैः परिवारितः । आत्मजैरभितो मुख्यैः स्त्रीसहस्रैश्च संवृतः ॥४१॥
तत्रासनवरे रम्ये जाम्बवत्या सहाच्युतः । भ्राजते चोमया देवो यथा देव्या समन्वितः ॥४२।
आजग्मुर्देव - गन्धर्वा द्रष्टुं लोकादिमव्ययम् । महर्षयः पूर्वजाता मार्कण्डेयादयो द्विजाः ॥४३॥
ततः स भगवान् कृष्णो मार्कण्डेयं समागतम् । ननामोत्थाय शिरसा स्वासनञ्च ददौ हरिः । ४४॥
सम्पूज्य तानृषिगणान् प्रणामेन सहानुगः । विसर्जयामास हरिर्दत्त्वा तदभिवाञ्छितान् ॥४५॥
तदा मध्याह्नसमये देवदेवः स्वयं हरिः । स्नातः शुक्लाम्बरो भानुमुपतिष्ठन् कृताञ्जलिः ॥४६॥
जजाप जाप्यं विधिवत् प्रेक्षमाणो दिवाकरम् । तर्पयामास देवेशो देवान् पितृगणान् मुनीन् ॥४७॥
प्रविश्य देवभवनं मार्कण्डेयेन चैव हि । पूजयामास लिङ्गस्थं भूतेशं भूतिभूषणम् ॥४८॥
समाप्य नियमं सर्वं नियन्ता स स्वयं नृणाम् । भोजयित्वा मुनिवरं ब्राह्मणानभिपूज्य च ॥४९॥
कृत्वात्मयोगं विप्रेन्द्रा मार्कण्डेयेन चाच्युतः । कथां पौराणिकीं पुण्यां चक्रे पुत्रादिभिर्वृतः ॥५०॥
अथ तत् सर्वमखिलं दृष्ट्वा कर्म महामुनिः । मार्कण्डेयो हसन् कृष्णं बभाषे मधुरं वचः ॥५१॥

## मार्कण्डेय उवाच

कः समाराध्यते देवो भवता कर्मभिः शुभैः । ब्रूहि त्वं कर्मभिः पूज्यो योगिनां ध्येय एव च ॥५२॥
त्वं हि तत् परमं ब्रह्म निर्वाणममलं पदम् । भारावतरणार्थाय जातो वृष्णिकुले प्रभुः ॥५३॥
तमब्रवीन्महाबाहुः कृष्णो ब्रह्मविदां वरः । शृण्वतामेव पुत्राणां सर्वेषां प्रहसन्निव ॥५४॥

## कृष्ण उवाच

भवता कथितं सर्वं तथ्यमेव न संशयः । तथापि देवमीशानं पूजयामि सनातनम् ॥५५॥
न मे विप्रास्ति कर्त्तव्यं नानावाप्तं कथञ्चन । पूजयामि तथापीशं जानन् वै परमं शिवम् ॥५६॥
न वै पश्यन्ति तं देवं मायया मोहिता जनाः । ततश्चैवात्मनो मूलं ज्ञापयन् पूजयामि तम् ॥५७॥
न च लिङ्गार्चनात् पुण्यं लोके दुर्गतिनाशनम् । तथा लिङ्गे हितायैषां लोकानां पूजयेच्छिवम्॥५८॥
योऽहं तल्लिङ्गमित्याहुर्वेदवादविदो जनाः । ततोऽहमात्मनीशानं पूजयाम्यात्मनैव तु ॥५९॥
तस्यैव परमा मूर्त्तिस्तन्मयोऽहं न संशयः । नावयोर्विद्यते भेदो वेदेष्वेवं विनिश्चयः ॥६०॥
एष देवो महादेवः सदा संसारभीरुभिः ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो लिङ्गे महेश्वरः ॥६१॥

## मार्कण्डेय उवाच

किं तल्लिङ्गं सुरश्रेष्ठ लिङ्गे सम्पूज्यते च कः । ब्रूहि कृष्ण विशालाक्ष गहनं ह्येतदुत्तमम् ॥६२॥

## कृष्ण उवाच

अव्यक्तं लिङ्गमित्याहुरानन्दं ज्योतिरक्षरम् । वेदा महेश्वरं देवमाहुर्लिङ्गिनमव्ययम् ॥६३॥
पुरा चैकार्णवे घोरे नष्टे स्थावर-जङ्गमे । प्रबोधार्थं ब्रह्मणो मे प्रादुर्भूतो महाशिवः ॥६४॥
तस्मात् कालात् समारभ्य ब्रह्मा चाहं सदैव हि। पूजयावो महादेवं लोकानां हितकाम्यया ॥६५॥

## मार्कण्डेय उवाच

कथं लिङ्गमभूत् पूर्वमैश्वरं परमं पदम् । प्रबोधार्थं स्वयं कृष्ण वक्तुमर्हसि साम्प्रतम् ॥६६॥

## कृष्ण उवाच

आसीदेकार्णवं घोरमविभागं तमोमयम् । मध्ये चैकार्णवे तस्मिञ्छङ्ख-चक्र गदाधरः ॥६७॥
सहस्रशीर्षा भूत्वाहं सहस्राक्षः सहस्रपात् । सहस्रबाहुः पुरुषः शयितोऽहं सनातनः ॥६८॥
एतस्मिन्नन्तरे दूरे पश्यामि ह्यमितप्रभम् । कोटिसूर्यप्रतीकाशं भ्राजमानं श्रियावृतम् ॥६९॥
चतुर्वक्त्रं महायोगं पुरुषं कारणं प्रभुम् । कृष्णाजिनधरं देवमृग्यजुःसामभिः स्तुतम् ॥७०॥
निमेषमात्रेण स मां प्राप्तो योगविदां वरः । व्याजहार स्वयं ब्रह्मा स्मयमानो महाद्युतिः । ७१॥
कस्त्वं कुतो वा किञ्चेह तिष्ठसे वद मे प्रभो । अहं कर्त्ता हि लोकानां स्वयम्भूः प्रपितामहः॥७२॥
एवमुक्तस्तदा तेन ब्रह्मणाहमुवाच ह । अहं कर्त्तास्मि लोकानां संहर्त्ता च पुनः पुनः ॥७३॥
एवं विवादे वितते मायया परमेष्ठिनः । प्रबोधार्थं परं लिङ्गं प्रादुर्भूतं शिवात्मकम् ॥७४॥
कालानलसमप्रख्यं ज्वालामालासमाकुलम् । क्षय - वृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् ॥७५॥
ततो मामाह भगवानधो गच्छ त्वमाशु वै । अन्तमस्य विजानीष्व ऊर्ध्वं गच्छेऽहमित्यजः ॥७६॥
तदाशु समयं कृत्वा गतावूर्द्ध्वमधश्च तौ । पितामहोऽप्यहं नान्तं ज्ञातवन्तौ समेत्य तौ ॥७७॥
ततो विस्मयमापन्नौ भीतौ देवस्य शूलिनः । मायया मोहितौ तस्य ध्यायन्तौ विश्वमीश्वरम्॥७८॥
श्रुतवन्तौ महानादमोङ्कारं परमं पदम् । तं प्राञ्जलिपुटौ भूत्वा शम्भुं तुष्टुवतुः परम् ॥७९॥

## ब्रह्म-विष्णू ऊचतुः

अनादिमूलसंसार - रोगवैद्याय शम्भवे । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८०॥
प्रलयार्णवसंस्थाय प्रलयोद्भूतिहेतवे । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८१॥
ज्वालामालावृताङ्गाय ज्वलनस्तम्भरूपिणे । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये । ८२॥
आदिमध्यान्तहीनाय स्वभावामलदीप्तये । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८३॥
महादेवाय महते ज्योतिषेऽनन्ततेजसे । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८४॥
प्रधानपुरुषेशाय व्योमरूपाय वेधसे । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८५॥
निर्विकाराय सत्याय नित्यायातुलतेजसे । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८६॥
वेदान्तसाररूपाय कालरूपाय धीमते । नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८७॥
एवं संस्तूयमानस्तु व्यक्तो भूत्वा महेश्वरः । भाति देवो महायोगी सूर्यकोटिसमप्रभः ॥८८॥
वक्त्रकोटिसहस्रेण ग्रसमान इवाम्बरम् । सहस्रहस्तचरणः सूर्यसोमाग्निलोचनः ॥८९॥
पिनाकपाणिर्भगवान् कृत्तिवासास्त्रिशूलधृक् । व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिःस्वनः ॥९०॥
अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ । पश्यतं मां महादेवं भयं सर्वं प्रमुच्यताम् ॥९१॥

युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ॥९२॥
वामपार्श्वे च मे विष्णुः पालको हृदये हरः । प्रीतोऽहं युवयोः सम्यग्वरं दद्मि यथेप्सितम् ॥९३॥
एवमुक्त्वाथ मां देवो महादेवः स्वयं शिवः । आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत्॥९४॥
ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् । ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायण-पितामहौ ॥९५॥
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ । भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वरे ॥९६॥
ततः स भगवानीशः प्रहसन् परमेश्वरः । उवाच मां महादेवः प्रीतं प्रीतेन चेतसा ॥९७॥

## महादेव उवाच

प्रलय - स्थिति - सर्गाणां कर्त्ता त्वं धरणीपते । वत्स वत्स हरे विश्वं पालयैतच्चराचरम् ॥९८॥
त्रिधा भिन्नोऽस्म्यहं विष्णो ब्रह्म-विष्णु-हराख्यया । सर्ग - रक्षा - लयगुणैर्निर्गुणोऽपि निरञ्जनः ॥९९॥
सम्मोहं त्यज भो विष्णो पालयैनं पितामहम् । भविष्यत्येव भगवांस्तव पुत्र सनातनः ॥१००॥
अहञ्च भवतो वक्त्रात् कल्पान्ते घोररूपधृक् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥१०१॥
एवमुक्त्वा महादेवो ब्रह्माणं मुनिसत्तम । अनुगृह्य च मां देवस्तत्रैवान्तरधीयत ॥१०२॥
ततःप्रभृति लोकेषु लिङ्गार्चा सुप्रतिष्ठिता । लिङ्गं तल्लयनाद् ब्रह्मन् ब्रह्मणः परमं वपुः ॥१०३॥
एतल्लिङ्गस्य माहात्म्यं भाषितं ते मयानघ । एतद् बुध्यन्ति योगज्ञा न देवा न च दानवाः ॥१०४॥
एतद्धि परमं ज्ञानमव्यक्तं शिवसंज्ञितम् । येन सूक्ष्ममचिन्त्यं तत् पश्यन्ति ज्ञानचक्षुषः॥१०५॥
तस्मै भगवते नित्यं नमस्कारं प्रकुर्महे । महादेवाय देवाय देवदेवाय लिङ्गिने ॥१०६॥
नमो वेदरहस्याय नीलकण्ठाय वै नमः । विभीषणाय शान्ताय स्थाणवे योगिने नमः ॥१०७॥
ब्रह्मणे वामदेवाय त्रिनेत्राय महीयसे । शङ्कराय महेशाय गिरीशाय शिवाय च ॥१०८॥
नमस्कुरुष्व सततं ध्यायस्व च महेश्वरम् । संसारसागरादस्मादचिरादुद्धरिष्यति ॥१०९॥
एवं स वासुदेवेन व्याहृतो मुनिपुङ्गवः । जगाम मनसा देवमीशानं विश्वतोमुखम् ॥११०॥
प्रणम्य शिरसा कृष्णमनुज्ञातो महामुनिः । जगाम चेप्सितं देशं देवदेवस्य शूलिनः ॥१११॥
य इमं श्रावयेन्नित्यं लिङ्गाध्यायमनुत्तमम् । शृणुयाद्वा पठेद्वापि सर्वपापैः प्रमुच्यते ॥११२॥
श्रुत्वा सकृदपि ह्येतत् तपश्चरणमुत्तमम् । वासुदेवस्य विप्रेन्द्राः पापं मुञ्चति मानवः ॥११३॥
जपेद्वाऽहरहर्नित्यं ब्रह्मलोके महीयते । एवमाह महायोगी कृष्णद्वैपायनः प्रभुः ॥११४॥

इति श्रीकौर्मे महापुराणे पूर्वभागे सोमवंशे यदुवंशानुकीर्तने कृष्णतपस्यायां लिङ्गाविर्भावो नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

# सप्तविंशोऽध्यायः

## सूत उवाच

ततो लब्धवरः कृष्णो जाम्बवत्यां महेश्वरात् । अजीजनन्महात्मानं साम्बमात्मजमुत्तमम् ॥ १ ॥
प्रद्युम्नस्य ह्यभूत् पुत्रो ह्यनिरुद्धो महाबलः । तावुभौ गुणसम्पन्नौ कृष्णस्यैवापरे तनू ॥ २ ॥
हत्वा च कंसं नरकमन्यांश्च शतशोऽसुरान् । विजित्य लीलया शक्रं जित्वा बाणं महासुरम् ॥ ३ ॥
स्थापयित्वा जगत् कृत्स्नं लोके धर्मांश्च शाश्वतान् । चक्रे नारायणो गन्तुं स्वस्थानं बुद्धिमुत्तमाम् ॥ ४ ॥

एतस्मिन्नन्तरे विप्रा भृग्वाद्याः कृष्णमीश्वरम् । आजग्मुर्द्वारकां द्रष्टुं कृतकार्यं सनातनम् ॥ ५ ॥
स तानुवाच विश्वात्मा प्रणिपत्याभिपूज्य च । आसनेषूपविष्टान् वै सह रामेण धीमता ॥ ६ ॥
गमिष्यामि परं स्थानं स्वकीयं विष्णुसंज्ञितम् । कृतानि सर्वकार्याणि प्रसीदध्वं मुनीश्वराः ॥ ७ ॥
इदं कलियुगं घोरं सम्प्राप्तमधुनाऽशुभम् । भविष्यन्ति जनाः सर्वे ह्यस्मिन् पापानुवर्त्तिनः ॥ ८ ॥
प्रवर्त्तयध्वं विज्ञानमज्ञानाच्च हितावहम् । येनेमे कलिजैः पापैर्मुच्यन्ते हि द्विजोत्तमाः ॥ ९ ॥
ये मां जनाः संस्मरन्ति कलौ सकृदपि प्रभुम् । तेषां नश्यति तत् पापं भक्तानां पुरुषोत्तमे ॥१०॥
येऽर्चयिष्यन्ति मां भक्त्या नित्यं कलियुगे द्विजाः । विधिना वेददृष्टेन ते गमिष्यन्ति तत्पदम् ॥११॥
ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः । तेषां नारायणे भक्तिर्भविष्यति कलौ युगे ॥१२॥
परात्परतरं यान्ति नारायणपरा जनाः । न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥१३॥
ध्यानं योगस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः । तेषां विनश्यति क्षिप्रं ये निन्दन्ति महेश्वरम् ॥१४॥
यो मां समर्चयेन्नित्यमेकान्तं भावमाश्रितः । विनिन्दन् देवमीशानं स याति नरकायुतम् ॥१५॥
तस्मात् सम्परिहर्तव्या निन्दा पशुपतेर्द्विजाः । कर्मणा मनसा वाचा मद्भक्तेष्वपि यत्नतः ॥१६॥
ये च दक्षाध्वरे शप्ता दधीचेन द्विजोत्तमाः । भविष्यन्ति कलौ भक्तैः परिहार्याः प्रयत्नतः ॥१७॥
द्विषन्तो देवमीशानं युष्माकं वंशसम्भवाः । शप्ताश्च गौतमेनोर्व्यां न सम्भाष्या द्विजोत्तमैः ॥१८॥
एवमुक्ताश्च कृष्णेन सर्वे ते वै महर्षयः । ओमित्युक्त्वा ययुस्तूर्णं स्वानि स्थानानि सत्तमाः ॥१९॥
ततो नारायणः कृष्णो लीलयैव जगन्मयः । संहृत्य स्वकुलं सर्वं ययौ तत् परमं पदम् ॥२०॥
इत्येष वः समासेन राज्ञां वंशः सुकीर्त्तितः । न शक्यो विस्तराद्वक्तुं किं भूयः श्रोतुमिच्छथ ॥२१॥
यः पठेच्छृणुयाद्वापि वंशानां कथनं शुभम् । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥२२॥

इति श्रीकौर्मेमहापुराणे पूर्वभागे राजवंशानुकीर्तनं नाम सप्तविंशोऽध्यायः ॥२७॥

---

## अष्टाविंशोऽध्यायः

### ऋषय ऊचुः

कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् । एषां प्रभावं सूताद्य कथयस्व समासतः ॥ १ ॥

### सूत उवाच

गते नारायणे कृष्णे स्वमेव परमं पदम् । पार्थः परमधर्मात्मा पाण्डवः शत्रुतापनः ॥ २ ॥
कृत्वा चैवोत्तरविधिं शोकेन महतावृतः । अपश्यत् पथि गच्छन्तं कृष्णद्वैपायनं मुनिम् ॥ ३ ॥
शिष्यैः प्रशिष्यैरभितः संवृतं ब्रह्मवादिनम् । पपात दण्डवद्भूमौ त्यक्त्वा शोकं तदार्जुनः ॥ ४ ॥
उवाच परमप्रीत्या कस्माद् देशान्महामुने । इदानीं गच्छसि क्षिप्रं कं वा देशं प्रति प्रभो ॥ ५ ॥
सन्दर्शनाद्वै भवतः शोको मे विपुलो गतः । इदानीं मम यत् कार्यं ब्रूहि पद्मदलेक्षण ॥ ६ ॥
तमुवाच महायोगी कृष्णद्वैपायनः स्वयम् । उपविश्य नदीतीरे शिष्यैः परिवृतो मुनिः ॥ ७ ॥

## व्यास उवाच

इदं कलियुगं घोरं सम्प्राप्तं पाण्डुनन्दन । ततो गच्छामि देवस्य पुरीं वाराणसीं शुभाम् ॥ ८ ॥
अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः । भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः ॥ ९ ॥
नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् । सर्वपापोपशमनं प्रायश्चित्तं कलौ युगे ॥१०॥
कृतं त्रेता द्वापरश्च सर्वेष्वेतेषु ते नराः । भविष्यन्ति महात्मानो धार्मिकाः सत्यवादिनः । ११॥
त्वं हि लोकेषु विख्यातो धृतिमान् जनवत्सलः । पालयाद्य परं धर्मं स्वकीयं मुच्यसे भयात् ॥१२॥
एवमुक्तो भगवता पार्थः परपुरञ्जयः । पृष्टवान् प्रणिपत्यासौ युगधर्मान् द्विजोत्तमाः ॥१३॥
तस्मै प्रोवाच सकलं मुनिः सत्यवतीसुतः । प्रणम्य देवमीशानं युगधर्मान् सनातनान् ॥१४॥

## व्यास उवाच

वक्ष्यामि ते समासेन युगधर्मान् नरेश्वर । न शक्यते मया राजन् विस्तरेणाभिभाषितुम् ॥१५॥
आद्यं कृतयुगं प्रोक्तं ततस्त्रेतायुगं बुधैः । तृतीयं द्वापरं पार्थ चतुर्थं कलिरुच्यते ॥१६॥
ध्यानं तपः कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥१७॥
ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः । द्वापरे दैवतं विष्णुः कलौ देवो महेश्वरः ॥१८॥
ब्रह्मा विष्णुस्तथा सूर्यः सर्व एव कलावपि । पूज्यन्ते भगवान् रुद्रश्चतुर्ष्वपि पिनाकधृक् ॥१९॥
आद्ये कृतयुगे धर्मश्चतुष्पादः प्रकीर्त्तितः । त्रेतायुगे त्रिपादः स्याद् द्विपादो द्वापरे स्थितः ।
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठति ॥२०॥
कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षादलोलुपा । प्रजास्तृप्ताः सदा सर्वाः सदानन्दाश्च भोगिनः ॥२१॥
अधमोत्तमता नासां निर्विशेषाः पुरञ्जय । तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे ॥२२॥
विशोकाः सत्त्वबहुला एकान्तबहुलास्तथा । ध्याननिष्ठास्तपोनिष्ठा महादेवपरायणाः ॥२३॥
ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः । पर्वतोदधिवासिन्यो ह्यनिकेताः परन्तप ॥२४॥
रसोल्लासः कालयोगात् त्रेताख्ये नश्यति द्विजाः । तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिरवर्त्तत ॥२५॥
अपां सौख्ये प्रतिहते तदा मेघात्मना तु वै । मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम् ॥२६॥
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले । प्रादुरासंस्तथा तासां वृक्षा वै गृहसंज्ञिताः ॥२७॥
सर्वः प्रत्युपयोगस्तु तासां तेभ्यः प्रजायते । वर्त्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥२८॥
ततः कालेन महता तासामेव विपर्ययात् । रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत् ॥२९॥
विपर्ययेण तासान्तु तेन तत्कालभाविताः । प्रणश्यन्ति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः ॥३०॥
ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः । अभिध्यायन्ति तां सिद्धिं सत्याभिध्यायिनस्तदा ॥३१॥
प्रादुर्बभूवुस्तासान्तु वृक्षास्ते गृहसंज्ञिताः । वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च ॥३२॥
तेष्वेव जायते तासां गन्ध-वर्ण-रसान्वितम् । अमाक्षिकं महावीर्यं पुटके पुटके मधु ॥३३॥
तेन ता वर्त्तयन्ति स्म त्रेतायुगमुखे प्रजाः । हृष्टाः पुष्टास्तथा सिद्धा सर्वा वै विगतज्वराः ॥३४॥
पुनः कालान्तरेणैव ततो लोभावृतास्तदा । वृक्षांस्तान् पर्यगृह्णन्त मधु चामाक्षिकं बलात् ॥३५॥
तासां तेनापचारेण पुनर्लोभकृतेन वै । प्रनष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित् ॥३६॥
शीतवर्षातपैस्तीव्रैस्तास्ततो दुःखिता भृशम् । द्वन्द्वैः सम्पीड्यमानास्तु चक्रुरावरणानि च ॥३७॥
कृत्वा द्वन्द्वप्रतीघातान् वार्त्तोपायमचिन्तयन् । नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ॥३८॥

ततः प्रादुरभूत् तासां सिद्धिस्त्रेतायुगे पुनः । वार्त्तायाः साधकास्तस्या वृष्टिस्तासां निकामतः ॥३९॥
तासां वृष्ट्युदकानीह यानि निम्नगतानि तु । अभवन् वृष्टिसन्तत्या स्रोतः स्थानानि निम्नगाः ॥४०॥
ये पुनस्तदपां स्तोका आपन्नाः पृथिवीतले । अपां भूमेश्च संयोगादोषध्यस्तास्तदाभवन् ॥४१॥
अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश । ऋतुपुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे ॥४२॥
ततः प्रादुरभूत् तासां रागो लोभश्च सर्वशः । अवश्यम्भावितार्थेन त्रेतायुगवशेन वै ॥४३॥
ततस्ताः पर्यगृह्णन्त नदीक्षेत्राणि पर्वतान् । वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम् ॥४४॥
विपर्ययेण तासां ता ओषध्यो विविशुर्महीम् । पितामहनियोगेन दुदोह पृथिवीं पृथुः ॥४५॥
ततस्ता जगृहुः सर्वा ह्यन्योन्यं क्रोधमूर्च्छिताः । आप्तदारधनाद्यास्तु बलात् कालबलेन च ॥४६॥
मर्यादायाः प्रतिष्ठार्थं ज्ञात्वैतद्भगवानजः । ससर्ज क्षत्रियान् ब्रह्मा ब्राह्मणानां हिताय वै ॥४७॥
वर्णाश्रमव्यवस्थाश्च त्रेतायां कृतवान् प्रभुः । यज्ञप्रवर्त्तनञ्चैव पशुहिंसाविवर्जितम् ॥४८॥
द्वापरेऽप्यथ विद्यन्ते मतिभेदात् सदा नृणाम् । रागो लोभस्तथा युद्धं तत्त्वानामविनिश्चयः ॥४९॥
एको वेदश्चतुष्पादस्त्रिधा त्विह विभाव्यते । वेदव्यासैश्चतुर्द्धा च व्यस्यते द्वापरादिषु ॥५०॥
ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः । मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥५१॥
संहिता ऋग्यजुःसाम्नां संहन्यन्ते श्रुतर्षिभिः । सामान्यावैकृताश्चैव दृष्टिभेदैः क्वचित् क्वचित् ॥५२॥
ब्राह्मणं कल्पसूत्राणि ब्रह्मप्रवचनानि च । इतिहासपुराणानि धर्मशास्त्राणि सुव्रत ॥५३॥
अवृष्टिर्मरणञ्चैव तथैव व्याध्युपद्रवाः । वाङ्मनःकायजैर्दुःखैर्निर्वेदो जायते नृणाम् ॥५४॥
निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा । विचारणाच्च वैराग्यं वैराग्याद् दोषदर्शनम् ॥५५॥
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसम्भवः । एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे द्विजाः ॥५६॥
आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्त्तते । द्वापरे व्याकुलीभूय प्रणश्यति कलौ युगे ॥५७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे युगधर्मानुकीर्त्तनं नामाष्टाविंशोऽध्यायः ॥२८॥

---

# एकोनत्रिंशोऽध्यायः

## व्यास उवाच

तिष्ये मायामसूयाञ्च वधञ्चैव तपस्विनाम् । साधयन्ति नरा नित्यं तमसा व्याकुलीकृताः ॥१॥
कलौ प्रमारको रोगः सततं क्षुद्भयं तथा । अनावृष्टिभयं घोरं देशानाञ्च विपर्ययः ॥२॥
अधार्मिका निराहारा महाकोपाल्पतेजसः । अनृतं ब्रुवते लुब्धास्तिष्ये जाताः सुदुष्प्रजाः ॥३॥
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः । विप्राणां कर्मदोषैश्च प्रजानां जायते भयम् ॥४॥
नाधीयते तदा वेदान् न यजन्ति द्विजातयः । यजन्ति यज्ञान् वेदांश्च पठन्ते चाल्पबुद्धयः ॥५॥
शूद्राणां मन्त्रयोगैश्च सम्बन्धो ब्राह्मणैः सह । भविष्यति कलौ तस्मिञ्छयनासनभोजनैः ॥६॥
राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति च । भ्रूणहत्या वीरहत्या प्रजायेत नरेश्वरे ॥७॥
स्नानं होमं जपं दानं देवतानां तथार्चनम् । तथान्यानि च कर्माणि न कुर्वन्ति द्विजातयः ॥८॥
विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम् । आम्नायधर्मशास्त्राणि पुराणानि कलौ युगे ॥९॥
कुर्वन्त्यवेददृष्टानि कर्माणि विविधानि च । स्वधर्मे तु रुचिर्नैव ब्राह्मणानां प्रजायते ॥१०॥

कुशीलचर्याः पाषण्डैर्वृथारूपैः समावृताः । बहुयाचनका लोका भविष्यन्ति परस्परम् ॥११॥
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलाश्च भविष्यन्ति कलौ युगे ॥१२॥
शुक्लदन्ता जिनाख्याश्च मुण्डाः काषायवाससः । शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते ॥१३॥
शस्यचौरा भविष्यन्ति तथा चेलाभिमर्षिणः । चौराचौराश्च हर्त्तारो हर्त्तुर्हन्ता तथापरः ॥१४॥
दुःखप्रचुरताऽल्पायुर्देहोत्सादः सरोगता । अधर्म्माभिनिवेशित्वं तमोवृत्तं कलौ स्मृतम् ॥१५॥
काषायिणोऽथ निर्ग्रन्थास्तथा कापालिकाश्च ये । वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे ॥१६॥
आसनस्थान् द्विजान् दृष्ट्वा चालयन्त्यल्पबुद्धयः । ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः ॥१७॥
उच्चासनस्थाः शूद्राश्च द्विजमध्ये परन्तप । द्विजामानकरो राजा कलौ कालबलेन तु ॥१८॥
पुष्पैश्च भूषणैश्चैव तथान्यैर्मङ्गलैर्द्विजाः । शूद्रान् परिचरन्त्यल्प-श्रुतभाग्यबलान्विताः ॥१९॥
न प्रेक्षन्तेऽर्च्चिताश्चापि शूद्रा द्विजवरान् नृप । सेवावसरमालोक्य द्वारे तिष्ठन्ति च द्विजाः ॥२०॥
वाहनस्थान् समावृत्य शूद्रान् शूद्रोपजीविनः । सेवन्ते ब्राह्मणास्तांस्तु स्तुवन्ति स्तुतिभिः कलौ॥२१॥
अध्यापयन्ति वै वेदान् शूद्रान् शूद्रोपजीविनः । एवं निर्वेदकानर्थान् नास्तिक्यं घोरमाश्रिताः ॥२२॥
तपोयज्ञफलानान्तु विक्रेतारो द्विजोत्तमाः । यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥२३॥
नाशयन्तः स्वकं धर्मं नाधिगच्छन्ति तत्पदम् । गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप ॥२४॥
वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः । भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा॥२५॥
ज्ञाने कर्मण्यपगते लोके निष्क्रियतां गते । कीट-मूषिक-सर्पाश्च धर्षयिष्यन्ति मानवान् ॥२६॥
कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै । दधीचशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥२७॥
निन्दन्ति च महादेवं तमसाविष्टचेतसः । वृथा धर्म्मं चरिष्यन्ति कलौ तस्मिन् युगान्तिमे ॥२८॥
ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः । सर्वे तेऽवतरिष्यन्ति ब्राह्मणास्तासु योनिषु ॥२९॥
विनिन्दन्ति हृषीकेशं ब्राह्मणा ब्रह्मवादिनः । वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ॥३०॥
मोहयन्ति जनान् सर्वान् दर्शयित्वा फलानि च । तमसाविष्टमनसो बैडालव्रतिकाधमाः ॥३१॥
कलौ रुद्रो महादेवो लोकानामीश्वरः परः । तदेव साधयेन्नृणां देवतानाञ्च दैवतम् ॥३२॥
करिष्यत्यवताराणि शङ्करो नीललोहितः । श्रौतस्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥३३॥
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् । सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शितान् ॥३४॥
ये तं प्रीता निषेवन्ते येन केनोपचारतः । विजित्य कलिजान् दोषान् यान्ति ते परमं पदम्॥३५॥
अनायासेन सुमहत् पुण्यमाप्नोति मानवः । अनेकदोषदुष्टस्य कलेरेको महान् गुणः ॥३६॥
तस्मात् सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम् । विशेषाद् ब्राह्मणो रुद्रमीशानं शरणं व्रजेत् ॥३७॥
ये नमन्ति विरूपाक्षमीशानं कृत्तिवाससम् । प्रसन्नचेतसो रुद्रं ते यान्ति परमं पदम् ॥३८॥
यथा रुद्रनमस्कारः सर्वकामफलो ध्रुवः । अन्यदेवनमस्कारान्न तत् फलमवाप्नुयात् ॥३९॥
एवंविधे कलियुगे दोषाणामेव शोधनम् । महादेवनमस्कारो ध्यानं दानमिति श्रुतिः ॥४०॥
तस्मादधीश्वरानन्यांस्त्यक्त्वा देवं महेश्वरम् । समाश्रयेद्विरूपाक्षं यदीच्छेत् परमं पदम् ॥४१॥
नार्च्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम् । तेषां दानं तपो यज्ञो वृथा जीवितमेव च ॥४२॥
नमो रुद्राय महते देवदेवाय शूलिने । त्र्यम्बकाय त्रिनेत्राय योगिनां गुरवे नमः ॥४३॥
नमोऽस्तु देवदेवाय महादेवाय वेधसे । शम्भवे स्थाणवे नित्यं शिवाय परमेष्ठिने ॥४४॥
नमः सोमाय रुद्राय महाग्रासाय हेतवे । प्रपद्येऽहं विरूपाक्षं शरण्यं ब्रह्मचारिणम् ॥४५॥

महादेवं महायोगमीशानञ्चाम्बिकापतिम् । योगिनां योगदातारं योगमायासमावृतम् ॥४६॥
योगिनां गुरुमाचार्यं योगगम्यं पिनाकिनम् । संसारनाशकं रुद्रं ब्रह्माणं ब्रह्मणोऽधिपम् ॥४७॥
शाश्वतं सर्वगं शान्तं ब्रह्मण्यं ब्राह्मणप्रियम् । कपर्दिनं कलामूर्त्तिममूर्त्तिममरेश्वरम् ॥४८॥
एकमूर्त्तिं महामूर्त्तिं वेदवेद्यं दिवस्पतिम् । नीलकण्ठं विश्वमूर्त्तिं व्यापिनं विश्वरेतसम् ॥४९॥
कालाग्निं कालदहनं कामदं कामनाशनम् । नमस्ये गिरिशं देवं चन्द्रावयवभूषणम् ॥५०॥
विलोहितं लेलिहानं मादित्यं परमेष्ठिनम् । उग्रं पशुपतिं भीमं भास्करं तमसः परम् ॥५१॥
इत्येतलक्षणं प्रोक्तं युगानां वै समासतः । अतीतानागतानां वै यावन्मन्वन्तरक्षयः ॥५२॥
मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै । व्याख्यातानि न संदेहः कल्पः कल्पेन चैव हि ॥५३॥
मन्वन्तरेषु चैतेषु अतीतानागतेषु वै । तुल्याभिमानिनः सर्वे नामरूपैर्भवन्त्युत ॥५४॥
एवमुक्तो भगवता किरीटी श्वेतवाहनः । बभार परमां भक्तिमीशानेऽव्यभिचारिणीम् ॥५५॥
नमश्चकार तमृषिं कृष्णद्वैपायनं प्रभुम् । सर्वज्ञं सर्वकर्त्तारं साक्षाद्विष्णुं व्यवस्थितम् ॥५६॥
तमुवाच पुनर्व्यासः पार्थं परपुरञ्जयम् । कराभ्यां सुशुभाभ्याञ्च संस्पृश्य प्रणतं मुनिः ॥५७॥
धन्योऽस्म्यनुगृहीतोऽसि त्वादृशोऽन्यो न विद्यते । त्रैलोक्ये शङ्करे नूनं भक्तः परपुरञ्जयः ॥५८॥
दृष्टवानसि तं देवं विश्वाक्षं विश्वतोमुखम् । प्रत्यक्षमेव सर्वेषां रुद्रं सर्वजगन्मयम् ॥५९॥
ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया । स्वयमेव हृषीकेशः प्रीत्योवाच सनातनः ॥६०॥
गच्छ गच्छ स्वकं स्थानं न शोकं कर्त्तुमर्हसि । व्रजस्व परया भक्त्या शरण्यं शरणं शिवम् ॥६१॥
एवमुक्त्वा स भगवाननुगृह्यार्जुनं प्रभुः । जगाम शङ्करपुरीं समाराधयितुं भवम् ॥६२॥
पाण्डवेयोऽपि तद्वाक्यात् सम्प्राप्य शरणं शिवम् । सन्त्यज्य सर्वकर्माणि ज्ञात्वा तत्परमोऽभवत् ॥६३॥
नार्जुनेन समः शम्भोर्भक्त्या भूतो भविष्यति । मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥६४॥
तस्मै भगवते नित्यं नमः शान्ताय धीमते । पाराशर्याय मुनये व्यासायामिततेजसे ॥६५॥
कृष्णद्वैपायनः साक्षाद्विष्णुरेव सनातनः । को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥६६॥
नमस्कुरुध्वं तमृषिं कृष्णं सत्यवतीसुतम् । पाराशर्यं महात्मानं योगिनं विष्णुमव्ययम् ॥६७॥
एवमुक्तास्तु मुनयः सर्व एव समाहिताः । प्रणेमुस्तं महात्मानं व्यासं सत्यवतीसुतम् ॥६८॥

इति श्री कौर्मे महापुराणे पूर्वभागे व्यासार्जुनसंवादे युगधर्मोनामैकोनत्रिंशोऽध्यायः ॥२९॥

---

## त्रिंशोऽध्यायः

### ऋषय ऊचुः

प्राप्य वाराणसीं दिव्यां कृष्णद्वैपायनो मुनिः । किमकार्षीन्महाबुद्धिः श्रोतुं कौतूहलं हि नः ॥१॥

### सूत उवाच

प्राप्य वाराणसीं दिव्यामुपस्पृश्य महामुनिः । पूजयामास जाह्नव्या देवं विश्वेश्वरं शिवम् ॥२॥
तमागतं मुनिं दृष्ट्वा तत्र ये निवसन्ति वै । पूजयाञ्चक्रिरे व्यासं मुनयो मुनिपुङ्गवम् ॥३॥
पप्रच्छुः प्रणताः सर्वे कथां पापप्रणाशिनीम् । महादेवाश्रयां पुण्यां मोक्षधर्मान् सनातनान् ॥४॥
स चापि कथयामास सर्वज्ञो भगवानृषिः । माहात्म्यं देवदेवस्य धर्मान् वेदनिदर्शितान् ॥५॥
तेषां मध्ये मुनीन्द्राणां व्यासशिष्यो महामुनिः । पृष्टवान् जैमिनिर्व्यासं गूढमर्थं सनातनम् ॥६॥

## जैमिनिरुवाच

भगवन् संशयश्चैकं छेत्तुमर्हसि सर्ववित् । न विद्यते ह्यविदितं भवता परमर्षिणा ॥७॥
केचिद्ध्यानं प्रशंसन्ति धर्ममेवापरे जनाः । अन्ये सांख्यं तथा योगं तपश्चान्ये महर्षयः ॥८॥
ब्रह्मचर्यमथो मौनमन्ये प्राहुर्महर्षयः । अहिंसा सत्यमप्यन्ये संन्यासमपरे विदुः ॥९॥
केचिद्दयां प्रशंसन्ति दानमध्ययनं तथा । तीर्थयात्रां तथा केचिदन्ये चेन्द्रियनिग्रहम् ॥१०॥
किमेषाञ्च भवेच्छ्रेयः प्रब्रूहि मुनिपुङ्गव । यदि वा विद्यतेऽप्यन्यद् गुह्यं तद्वक्तुमर्हसि ॥११॥
श्रुत्वा स जैमिनेर्वाक्यं कृष्णद्वैपायनो मुनिः । प्राह गम्भीरया वाचा प्रणम्य वृषकेतनम् ॥१२॥

## व्यास उवाच

साधु साधु महाभाग यत् पृष्टं भवता मुने । वक्ष्ये गुह्यतमाद् गुह्यं शृण्वन्त्वन्ये महर्षयः ॥१३॥
ईश्वरेण पुरा प्रोक्तं ज्ञानमेतत् सनातनम् । गूढमप्राज्ञविद्विष्टं सेवितं सूक्ष्मदर्शिभिः ॥१४॥
नाश्रद्दधाने दातव्यं नाभक्ते परमेष्ठिनः । नावेदविदुषे देयं ज्ञानानां ज्ञानमुत्तमम् ॥१५॥
मेरुशृङ्गे पुरा देवमीशानं त्रिपुरद्विषम् । देवासनगता देवी महादेवमपृच्छत ॥१६॥

## देव्युवाच

देवदेव महादेव भक्तानामार्त्तिनाशन । कथं त्वां पुरुषो देवमचिरादेव पश्यति ॥१७॥
सांख्ययोगस्तपो ध्यानं कर्मयोगश्च वैदिकः । आयासबहुलान्याहुर्यानि चान्यानि शङ्कर ॥१८॥
येन विभ्रान्तचित्तानां विज्ञानां योगिनामपि । दृश्यो हि भगवान् सूक्ष्मः सर्वेषामपि देहिनाम् ॥१९॥
एतद् गुह्यतमं ज्ञानं गूढं ब्रह्मादिसेवितम् । हिताय सर्वभक्तानां ब्रूहि कामाङ्गनाशन ॥२०॥

## ईश्वर उवाच

अवाच्यमेतद् गूढार्थं ज्ञानमज्ञैर्बहिष्कृतम् । वक्ष्ये तव यथातत्त्वं यदुक्तं परमर्षिभिः ॥२१॥
परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी । सर्वेषामेव भूतानां संसारार्णवतारिणी ॥२२॥
तस्मिन् भक्ता महादेवि मदीयं व्रतमास्थिताः । निवसन्ति महात्मानः परं निश्चयमास्थिताः ॥२३॥
उत्तमं सर्वतीर्थानां स्थानानामुत्तमञ्च यत् । ज्ञानानामुत्तमं ज्ञानमविमुक्तं परं मम ॥२४॥
स्थानान्तरे पवित्राणि तीर्थान्यायतनानि च । श्मशाने संस्थितान्येव दिवि भूमिगतानि च ॥२५॥
भूर्लोके नैव संलग्नमन्तरीक्षे ममालयम् । अविमुक्ता न पश्यन्ति मुक्ताः पश्यन्ति चेतसा ॥२६॥
श्मशानमेतद्विख्यातमविमुक्तमिति स्मृतम् । कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ॥२७॥
देवीदं सर्वगुह्याणां स्थानं प्रियतमं मम । मद्भक्ता यत्र गच्छन्ति मामेव प्रविशन्ति ते ॥२८॥
दत्तं जप्तं हुतञ्चेष्टं तपस्तप्तं कृतञ्च यत् । ध्यानमध्ययनं ज्ञानं सर्वं तत्राक्षयं भवेत् ॥२९॥
जन्मान्तरसहस्रेषु यत् पापं पूर्वसञ्चितम् । अविमुक्ते प्रविष्टस्य तत् पूर्वं व्रजति क्षयम् ॥३०॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसङ्कराः । स्त्रियो म्लेच्छाश्च ये चान्ये सङ्कीर्णाः पापयोनयः ॥३१॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृग-पक्षिणः । कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥३२॥
चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः । शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥३३॥
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्विषी । ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥३४॥
मोक्षं सुदुर्लभं ज्ञात्वा संसारञ्चातिभीषणम् । अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥३५॥

दुर्लभा तपसा चापि पूतस्य परमेश्वरि । यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ॥३६॥
प्रसादाद्दह्यते ह्येनो मम शैलेन्द्रनन्दिनि । अत्राबुधा न पश्यन्ति मम मायाविमोहिताः ॥३७॥
अविमुक्तं न पश्यन्ति मूढा ये तमसावृताः । विण्मूत्ररेतसां मध्ये संविशन्ति पुनः पुनः ॥३८॥
हन्यमानोऽपि यो देवि विशेद्विघ्नशतैरपि । स याति परमं स्थान यत्र गत्वा न शोचति ॥३९॥
जन्म-मृत्यु-जरामुक्तं परं याति शिवालयम् । अपुनर्मरणानां हि सा गतिर्मोक्षकाङ्क्षिणाम् ॥४०॥
यां प्राप्य कृतकृत्यः स्यादिति मन्येत पण्डितः । न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया ॥४१॥
प्राप्यते गतिरुत्कृष्टा याऽविमुक्ते तु लभ्यते । नानावर्णा विवर्णाश्च चण्डालाद्या जुगुप्सिताः ॥४२॥
किल्विषैः पूर्णदेहा ये प्रकृष्टैस्तापकैस्तथा । भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ॥४३॥
अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् । अविमुक्तं परं तत्त्वमविमुक्तं परं शिवम् ॥४४॥
कृत्वा वै नैष्ठिकीं दीक्षामविमुक्ते वसन्ति ये । तेषां तत् परमं ज्ञानं ददाम्यन्ते परं पदम् ॥४५॥
प्रयागं नैमिषं पुण्यं श्रीशैलोऽथ हिमालयः । केदारं भद्रकर्णञ्च गया पुष्करमेव च ॥४६॥
कुरुक्षेत्रं रुद्रकोटिर्नर्मदा हाटकेश्वरम् । शालग्रामञ्च कुब्जाम्रं कोकामुखमनुत्तमम् ॥४७॥
प्रभासं विजयेशानं गोकर्णं शङ्कुकर्णकम । एतानि पुण्यस्थानानि त्रैलोक्ये विश्रुतानि च ।
न यास्यन्ति परं मोक्षं वाराणस्यां यथा मृताः ॥४८॥
वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी । प्रविष्टा नाशयेत् पापं जन्मान्तरशतैः कृतम् ॥४९॥
अन्यत्र सुलभा गङ्गा श्राद्धं दानं तथा जपः । व्रतानि सर्वमेवैतद्वाराणस्यां सुदुर्लभम् ॥५०॥
यजेत् तु जुहुयान्नित्यं ददात्यर्च्चयतेऽपरान् । वायुभक्षश्च सततं वाराणस्यां स्थितो नरः ॥५१॥
यदि पापो यदि शठो यदि चाधार्मिको नरः । वाराणसीं समासाद्य पुनाति स कुलत्रयम् ॥५२॥
वाराणस्यां महादेवं ये स्तुवन्त्यर्चयन्ति च । सर्वपापविनिर्मुक्तास्ते विज्ञेया गणेश्वराः ॥५३॥
अन्यत्र योगाज् ज्ञानाद्वा संन्यासादथवाऽन्यतः । प्राप्यते तत् परं स्थानं सहस्रेणैव जन्मना ॥५४॥
ये भक्ता देवदेवेशे वाराणस्यां वसन्ति वै । ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना ॥५५॥
यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना । अविमुक्तं समासाद्य नान्यद् गच्छेत् तपोवनम् ॥५६॥
यतो मया न मुक्तं तदविमुक्तमिति स्मृतम् । तदेवं गुह्यं गुह्यानामेतद्विज्ञाय मुच्यते ॥५७॥
ज्ञान-ध्याननिविष्टानां परमानन्दमिच्छताम् । या गतिर्विहिता सुभ्रु साविमुक्ते मृतस्य तु ॥५८॥
यानि कान्यविमुक्तानि देवैरुक्तानि नित्यशः । पुरी वाराणसी तेभ्यः स्थानेभ्योऽप्यधिका शुभा॥५९॥
यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः । व्याचष्टे तारकं ब्रह्म तथैव ह्यविमुक्तकम् ॥६०॥
यत् तत् परतरं तत्त्वमविमुक्तमिति स्मृतम् । एकेन जन्मना देवि वाराणस्यां तदाप्यते ॥६१॥
भ्रूमध्ये नाभिमध्ये च हृदयेऽपि च मूर्द्धनि । यथाविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ॥६२॥
वरणायास्तथा चास्या मध्ये वाराणसी पुरी । तत्रैव संस्थितं तत्त्वं नित्यमेवाविमुक्तकम् ॥६३॥
वाराणस्याः परं स्थानं न भूतं न भविष्यति । यथा नारायणो देवो महादेवाद्दिवेश्वरात् ॥६४॥
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः । उपासते मां सततं देवदेवः पितामहः ॥६५॥
महापातकिनो ये च ये तेभ्यः पापकृत्तमाः । वाराणसीं समासाद्य ते यान्ति परमां गतिम्॥६६॥
तस्मान्मुमुक्षुर्नियतो वसेच्चामरणान्तिकम् । वाराणस्यां महादेवि ज्ञानं लब्ध्वा विमुच्यते ॥६७॥
किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् । ततो नैव चरेत् पापं कायेन मनसा गिरा ॥६८॥
एतद्रहस्यं वेदानां पुराणानां द्विजोत्तमाः । अविमुक्ताश्रयं ज्ञानं न किञ्चिद्वेत्ति तत्परम् ॥६९॥
देवतानामृषीणाञ्च शृण्वतां परमेष्ठिनाम् । देव्यै देवेन कथितं सर्वपापविनाशनम् ॥७०॥

यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः । यथेश्वराणां गिरिशः स्थानानाश्चैतदुत्तमम् ॥७१॥
यैः समाराधितो रुद्रः पूर्वस्मिन्नेव जन्मनि । ते विन्दन्ति परं क्षेत्रमविमुक्तं शिवालयम् ॥७२॥
कलिकल्मषसम्भूता येषामुपहता मतिः । न तेषां वीक्षितुं शक्यं स्थानं तत् परमेष्ठिनः ॥७३॥
ये स्मरन्ति सदा कालं विन्दन्ति च पुरीमिमाम् । तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥७४॥
यानि चेह प्रकुर्वन्ति पातकानि कृतालयाः । नाशयेत् तानि सर्वाणि देवः कालतनुः शिवः ॥७५॥
आगच्छतामिदं स्थानं सेवितुं मोक्षकाङ्क्षिणाम् । मृतानां वै पुनर्जन्म न भूयो भवसागरे ॥७६॥
तस्मात् सर्वप्रयत्नेन वाराणस्यां वसेन्नरः । योगी वाप्यथवाऽयोगी पापी वा पुण्यकृत्तमः ॥७७॥
न लोकवचनात् पित्रोर्न चैव गुरुवादतः । मतिरुत्क्रमणीया स्यादविमुक्तागतिं प्रति ॥७८॥

## सूत उवाच

एवमुक्त्वाथ भगवान् व्यासो वेदविदां वरः । सहैव शिष्यप्रवरैर्वाराणस्यां चचार ह ॥७९॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वाराणसीमाहात्म्यं नाम त्रिंशोऽध्यायः ॥३०॥

---

# एकोत्रिंशोऽध्यायः

## सूत उवाच

स शिष्यैः संवृतो धीमान् गुरु र्द्वैपायनो मुनिः । जगाम विपुलं लिङ्गमोङ्कारं मुक्तिदायकम् ॥ १ ॥
तत्राभ्यर्च्य महादेवं शिष्यैः सह महामुनिः । प्रोवाच तस्य माहात्म्यं मुनीनां भावितात्मनाम् ॥ २ ॥
इदं तद्विमलं लिङ्गमोङ्कारं नाम शोभनम् । अस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥ ३ ॥
एतत् तत् परमं ज्ञानं पञ्चायतनमुत्तमम् । अर्चितं मुनिभिर्नित्यं वाराणस्यां विमोक्षदम् ॥ ४ ॥
अत्र साक्षान्महादेवः पञ्चायतनविग्रहः । रमते भगवान् रुद्रो जन्तूनामपवर्गदः ॥ ५ ॥
यत्तत् पाशुपतं ज्ञानं पञ्चार्थमिति कथ्यते । तदेतद्विमलं लिङ्गमोङ्कारे समवस्थितम् ॥ ६ ॥
शान्त्यतीता परा शान्तिर्विद्या चैव यथाक्रमम् । प्रतिष्ठा च निवृत्तिश्च पञ्चार्थं लिङ्गमैश्वरम् ॥ ७ ॥
पञ्चानामपि देवानां ब्रह्मादीनां यदाश्रयम् । ओङ्कारबोधितं लिङ्गं पञ्चायतनमुच्यते ॥ ८ ॥
संस्मरेदैश्वरं लिङ्गं पञ्चायतनमव्ययम् । देहान्ते तत् परं ज्योतिरानन्दं विशते पुनः ॥ ९ ॥
अत्र देवर्षयः पूर्वं सिद्धा ब्रह्मर्षयस्तथा । उपास्य देवमीशानं प्राप्तवन्तः परं पदम् ॥१०॥
मत्स्योदर्यास्तटे पुण्यं स्थानं गुह्यतमं शुभम् । गोचर्ममात्रं विप्रेन्द्रा ओङ्कारेश्वरमुत्तमम् ॥११॥
कृत्तिवासेश्वरं लिङ्गं मध्यमेश्वरमुत्तमम् । विश्वेश्वरं तथोङ्कारं कपर्दीश्वरमुत्तमम् ॥१२॥
एतानि गुह्यलिङ्गानि वाराणस्यां द्विजोत्तमाः । न कश्चिदिह जानाति विना शम्भोरनुग्रहात् ॥१३॥
एवमुक्त्वा ययौ कृष्णः पाराशर्यो महामुनिः । कृत्तिवासेश्वरं लिङ्गं द्रष्टुं देवस्य शूलिनः ॥१४॥
समभ्यर्च्य तथा शिष्यैर्माहात्म्यं कृत्तिवाससः । कथयामास विप्रेभ्यो भगवान् ब्रह्मवित्तमः ॥१५॥
अस्मिन् स्थाने पुरा दैत्यो हस्ती भूत्वा भवान्तिकम् । ब्राह्मणान् हन्तुमायातो येऽत्र नित्यमुपासते ॥१६॥
तेषां लिङ्गान्महादेवः प्रादुरासीत् त्रिलोचनः । रक्षणार्थं द्विजश्रेष्ठा भक्तानां भक्तवत्सलः ॥१७॥
हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः । वासस्तस्याकरोत् कृत्तिं कृत्तिवासेश्वरस्ततः ॥१८॥

अत्र सिद्धिं परां प्राप्ता मुनयो मुनिपुङ्गवाः । तेनैव च शरीरेण प्राप्तास्तत् परमं पदम् ॥१९॥
विद्या विद्येश्वरा रुद्राः शिवा ये च प्रकीर्तिताः । कृत्तिवासेश्वरं लिङ्गं नित्यमावृत्य संस्थिताः ॥२०॥
ज्ञात्वा कलियुगं घोरमधर्मबहुलं जनाः । कृत्तिवासं न मुञ्चन्ति कृतार्थास्ते न संशयः ॥२१॥
जन्मान्तरसहस्रेण मोक्षोऽन्यत्राप्यते न वा । एकेन जन्मना मोक्षः कृत्तिवासे तु लभ्यते ॥२२॥
आलयः सर्वसिद्धानामेतत् स्थानं वदन्ति हि । गोपितं देवदेवेन महादेवेन शम्भुना ॥२३॥
युगे युगे ह्यत्र दान्ता ब्राह्मणा वेदपारगाः । उपासते महादेवं जपन्ति शतरुद्रियम् ॥२४॥
स्तुवन्ति सततं देवं महादेवं त्रियम्बकम् । ध्यायन्तो हृदये नित्यं स्थाणुं सर्वोत्तमं शिवम् ॥२५॥

गायन्ति सिद्धाः किल गीतकानि वाराणसीं ये निवसन्ति विप्राः ।
तेषामथैकेन भवेन मुक्तिर्ये कृत्तिवासं शरणं प्रपन्नाः ॥२६॥
सम्प्राप्य लोके जगतामभीष्टं सुदुर्लभं विप्रकुलेषु जन्म ।
ध्यानं समादाय जपन्ति रुद्रं ध्यायन्ति चित्ते यतयो महेशम् ॥२७॥
आराधयन्ति प्रभुमीशितारं वाराणसी-मध्यगता मुनीन्द्राः ।
यजन्ति यज्ञैरभिसन्धिहीनाः स्तुवन्ति रुद्रं प्रणमन्ति शम्भुम् ॥२८॥
नमो भवायामलभावधाम्ने स्थाणुं प्रपद्ये गिरिशं पुराणम् ।
स्मरामि रुद्रं हृदये निविष्टं जाने महादेवमनेकरूपम् ॥२९॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वाराणसीमाहात्म्यं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः

### सूत उवाच

समाभाष्य मुनीन् धीमान् देवदेवस्य शूलिनः । जगाम लिङ्गं तद् द्रष्टुं कपर्दीश्वरमव्ययम् ॥ १ ॥
स्नात्वा तत्र विधानेन तर्पयित्वा पितॄन् द्विजाः । पिशाचमोचने तीर्थे पूजयामास शूलिनम् ॥ २ ॥
तत्राश्चर्यमपश्यंस्ते मुनयो गुरुणा सह । मेनिरे क्षेत्रमाहात्म्यं प्रणेमुर्गिरिशं हरम् ॥ ३ ॥
कश्चिदभ्यागमत् तूर्णं शार्दूलो घोररूपधृक् । मृगीमेकां भक्षयितुं कपर्दीश्वरमुत्तमम् ॥ ४ ॥
तत्र सा भीतहृदया कृत्वा कृत्वा प्रदक्षिणम् । धावमाना सुसम्भ्रान्ता व्याघ्रस्य वशमागता ॥ ५ ॥
तां विदार्य नखैस्तीक्ष्णैः शार्दूलः सुमहाबलः । जगाम चान्यद्विजनं स दृष्ट्वा तान् मुनीश्वरान् ॥ ६ ॥
मृतमात्रा च सा बाला कपर्दीशाग्रतो मृगी । अदृश्यत महाज्वाला व्योम्नि सूर्यसमप्रभा ॥ ७ ॥
त्रिनेत्रा नीलकण्ठा च शशाङ्काङ्कितशेखरा । वृषाधिरूढा पुरुषैस्तादृशैरेव संयता ॥ ८ ॥
पुष्पवृष्टिं विमुञ्चन्ति खेचरास्तस्य मूर्द्धनि । गणेश्वरः स्वयं भूत्वा न दृष्टस्तत्क्षणात् ततः ॥ ९ ॥
दृष्ट्वैतदाश्चर्यवरं जैमिनिप्रमुखास्तदा । कपर्दीश्वरमाहात्म्यं पप्रच्छुर्गुरुमच्युतम् ॥१०॥
तेषां प्रोवाच भगवान् देवाग्रे चोपविश्य सः । कपर्दीशस्य माहात्म्यं प्रणम्य वृषभध्वजम् ॥११॥
इदं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम् । स्मृत्वैवाशेषपापौघं क्षिप्रमस्य विनश्यति ॥१२॥
कामक्रोधादयो दोषा वाराणस्यां निवासिनः । विप्राः सर्वे विनश्यन्ति कपर्दीश्वरपूजनात् ॥१३॥
तस्मात् सदैव द्रष्टव्यं कपर्दीश्वरमुत्तमम् । पूजितव्यं प्रयत्नेन स्तोतव्यं वैदिकैः स्तवैः ॥१४॥

ध्यायतामत्र नियतं योगिनां शान्तचेतसाम् । जायते योगसिद्धिश्च षण्मासेन न संशयः ॥१५॥
ब्रह्महत्यादिपापानि विनश्यन्त्यस्य पूजनात् । पिशाचमोचने कुण्डे स्नातस्यात्र समीपतः ॥१६॥
अस्मिन् क्षेत्रे पुरा विप्रास्तपस्वी शंसितव्रतः । शङ्कुकर्ण इति ख्यातः पूजयामास शूलिनम् ॥१७॥
जजाप रुद्रमनिशं प्रणवं रुद्ररूपिणम् । पुष्प - धूपादिभिः स्तोत्रैर्नमस्कारैः प्रदक्षिणैः ॥१८॥
उवास तत्र योगात्मा कृत्वा दीक्षान्तु नैष्ठिकीम् । कदाचिदागतं प्रेतं पश्यति स्म क्षुधान्वितम् ॥१९॥
अस्थिचर्मपिनद्धाङ्गं निःश्वसन्तं मुहुर्मुहुः । तं दृष्ट्वा स मुनिश्रेष्ठः कृपया परया युतः ॥२०॥
प्रोवाच को भवान् कस्माद्देशाद्देशमिमं गतः । तस्मै पिशाचः क्षुधया पीड्यमानोऽब्रवीद्वचः ॥२१॥
पूर्वजन्मन्यहं विप्रो धन-धान्यसमन्वितः । पुत्रपौत्रादिभिर्युक्तः कुटुम्बभरणोत्सुकः ॥२२॥
न पूजिता मया देवा गावोऽप्यतिथयस्तथा । न कदाचित् कृतं पुण्यमल्पं वानल्पमेव वा ॥२३॥
एकदा भगवान् रुद्रो गोवृषेश्वरवाहनः । विश्वेश्वरो वाराणस्यां दृष्टः स्पृष्टो नमस्कृतः ॥२४॥
तदा चिरेण कालेन पञ्चत्वमहमागतः । न दृष्टं तन्मया घोरं यमस्य वदनं मुने ॥२५॥
ईदृशीं योनिमापन्नः पैशाचीं क्षुधयार्दितः । पिपासया परिक्रान्तो न जानामि हिताहितम् ॥२६॥
यदि कश्चित् समुद्धर्त्तुमुपायं पश्यसि प्रभो । कुरुष्व तं नमस्तुभ्यं त्वामहं शरणं गतः ॥२७॥
इत्युक्तः शङ्कुकर्णोऽथ पिशाचमिदमब्रवीत् । त्वादृशो न हि लोकेऽस्मिन् विद्यते पुण्यकृत्तमः ।
यत् त्वया भगवान् पूर्वं दृष्टो विश्वेश्वरः शिवः ॥२८॥
संस्पृष्टो वन्दितो भूयः कोऽन्यस्त्वत्सदृशो भुवि । तेन कर्मविपाकेन देशमेतं समागतः ॥२९॥
स्नानं कुरुष्व शीघ्रं त्वमस्मिन् कुण्डे समाहितः । येनेमां कुत्सितां योनिं क्षिप्रमेव प्रहास्यसि ॥३०॥

स एवमुक्तो मुनिना पिशाचो दयावता देववरं त्रिनेत्रम् ।
स्मृत्वा कपर्दीश्वरमीशितारं चक्रे समाधाय मनोऽवगाहम् ॥३१॥
तदावगाहान्मुनिसन्निधाने ममार दिव्याभरणोपपन्नः ।
अदृश्यतार्कप्रतिमे विमाने शशाङ्कचिह्नाङ्कितचारुमौलिः ॥३२॥
विभाति रुद्रैरभितो दिविष्ठैः समावृतो योगिभिरप्रमेयैः ।
स बालखिल्यादिभिरेष देवो यथोदये भानुरशेषदेवः ॥३३॥
स्तुवन्ति सिद्धा दिवि देवसङ्घा नृत्यन्ति दिव्याप्सरसोऽभिरामाः ।
मुञ्चन्ति वृष्टिं कुसुमालिमिश्रां गन्धर्व-विद्याधर-किन्नराद्याः ॥३४॥
संस्तूयमानोऽथ मुनीन्द्रसंघैरवाप्य बोधं भगवत्प्रसादात् ।
समाविशन्मण्डलमेवमग्र्यं त्रयीमयं यत्र विभाति रुद्रः ॥३५॥
दृष्ट्वाऽविमुक्तं स पिशाचभूतं मुनिः प्रहृष्टो मनसा महेशम् ।
विचिन्त्य रुद्रं कविमेवमग्र्यं प्रणम्य तुष्टाव कपर्दिनं तम् ॥३६॥

## शङ्कुकर्ण उवाच

नमामि नित्यं परतः परस्ताद् गोप्तारमेकं पुरुषं पुराणम् ।
व्रजामि योगेश्वरमीशितारमादित्यमग्निं कपिलाधिरूढम् ॥३७॥
त्वां ब्रह्मपारं हृदि सन्निविष्टं हिरण्मयं योगिनमादिहीनम् ।
व्रजामि रुद्रं शरणं दिविष्ठं महामुनिं ब्रह्ममयं पवित्रम् ॥३८॥
सहस्रपादाक्षिशिरोऽभियुक्तं सहस्रबाहुं तमसः परस्तात् ।

त्वां ब्रह्मपारं प्रणमामि शम्भुं हिरण्यगर्भाधिपतिं त्रिनेत्रम् ॥३९॥
यतः प्रसूतिर्जगतो विनाशो येनाहृतं सर्वमिदं शिवेन ।
तं ब्रह्मपारं भगवन्तमीशं प्रणम्य नित्यं शरणं प्रपद्ये ॥४०॥
अलिङ्गमालोकविहीनरूपं स्वयंप्रभु चित्पतिमेकरुद्रम् ।
तं ब्रह्मपारं परमेश्वरं त्वां नमस्करिष्ये न यतोऽन्यदस्ति ॥४१॥
यं योगिनस्त्यक्तसबीजयोगा लब्ध्वा समाधिं परमात्मभूताः ।
पश्यन्ति देवं प्रणतोऽस्मि नित्यं तद्ब्रह्मपारं भवतः स्वरूपम् ॥४२॥
न यत्र नामानि विशेषतुष्टिर्न तादृशे तिष्ठति यत्स्वरूपम् ।
तं ब्रह्मपारं प्रणतोऽस्मि नित्यं स्वयम्भुवं त्वां शरणं प्रपद्ये ॥ ३॥
यद्वेदवेदाभिरता विदेहं स ब्रह्मविज्ञानमभेदमेकम् ।
पश्यन्त्यनेकं भवतः स्वरूपं तद्ब्रह्मपारं प्रणतोऽस्मि नित्यम् ॥४४॥
यतः प्रधानं पुरुषः पुराणो विवर्त्तते यं प्रणमन्ति देवाः ।
नमामि तं ज्योतिषि सन्निविष्ट कालं बृहन्तं भवतः स्वरूपम् ॥४५॥
व्रजामि नित्यं शरणं महेशं स्थाणुं प्रपद्ये गिरिशं पुराणम् ।
शिवं प्रपद्ये हरमिन्दुमौलिं पिनाकिनं त्वां शरणं व्रजामि ॥४६॥

स्तुत्वैवं शङ्कुकर्णोऽसौ भगवन्तं कपर्दिनम् । पपात दण्डवद् भूमौ प्रोच्चरन् प्रणवं शिवम् ॥४७॥
तत्क्षणात् परमं लिङ्गं प्रादुर्भूतं शिवात्मकम् । ज्ञानमानन्दमद्वैतं कोटिकालाग्निसन्निभम् ॥४८॥
शङ्कुकर्णोऽथ मुक्तात्मा धर्मात्मा सर्वगोऽमलः । निलिल्ये विमले लिङ्गे तदद्भुतमिवाभवत् ॥४९॥
एतद्रहस्यमाख्यातं माहात्म्यञ्च कपर्दिनः । न कश्चिद्वेत्ति तमसा विद्वानप्यत्र मुह्यति ॥५०॥
य इमां शृणुयान्नित्यं कथां पापप्रणाशिनीम् । भक्तः पापविमुक्तात्मा रुद्रसामीप्यमाप्नुयात् ॥५१॥
पठेच्च सततं शुद्धो ब्रह्मपारं महास्तवम् । प्रातर्मध्याह्नसमये स योगं प्राप्नुयान्नरः ॥५२॥
इहैव नित्यं वत्स्यामो देवदेवं कपर्दिनम् । द्रक्ष्यामः सततं देवं पूजयामस्त्रिलोचनम् ॥५३॥
इत्युक्त्वा भगवान् व्यासः शिष्यैःसह महाद्युतिः । उवास तत्र युक्तात्मा पूजयन् वै कपर्दिनम् ॥५४॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वाराणसीमाहात्म्यं नाम द्वात्रिंशोऽध्यायः ॥३२॥

---

## त्रयस्त्रिंशोऽध्यायः

### सूत उवाच

उषित्वा तत्र भगवान् कपर्दीशान्तिके पुनः । ययौ द्रष्टुं मध्यमेशं बहुवर्षगणान् प्रभुः ॥ १ ॥
तत्र मन्दाकिनीं पुण्यामृषिसङ्घनिषेविताम् । नदीं विमलपानीयां दृष्ट्वा हृष्टोऽभवन्मुनिः ॥ २ ॥
स तामन्वीक्ष्य मुनिभिः सह द्वैपायनः प्रभुः । चकार भावपूतात्मा स्नानं स्नानविधानवित् ॥ ३ ॥
सन्तर्प्य विधिवद् देवानृषीन् पितृगणांस्तथा । पूजयामास लोकादिं पुष्पैर्नानाविधैर्भवम् ॥ ४ ॥
प्रविश्य शिष्यप्रवरैः सार्धं सत्यवतीसुतः । मध्यमेश्वरमीशानमर्चयामास शूलिनम् ॥ ५ ॥
ततः पाशुपताः शान्ताः भस्मोद्धूलितविग्रहाः । द्रष्टुं समागता रुद्रं मध्यमेश्वरमीश्वरम् ॥ ६ ॥
ओङ्कारासक्तमनसो वेदाध्ययनतत्पराः । जटिला मुण्डिताश्चापि शुद्धयज्ञोपवीतिनः ॥ ७ ॥

कौपीनवसनाः केचिदपरे चाप्यवाससः । ब्रह्मचर्यरताः शान्ता दान्ता वै ज्ञानतत्पराः ॥ ८ ॥
दृष्ट्वा द्वैपायनं विप्राः शिष्यैः परिवृतं मुनिम् । पूजयित्वा यथान्यायमिदं वचनब्रुवन् ॥ ९ ॥
को भवान् कुत आयातः सह शिष्यैर्महामुने । प्रोचुः पैलादयः शिष्यास्तानृषीन् ब्रह्मभावितान् ॥१०॥
अयं सत्यवतीसूनुः कृष्णद्वैपायनः प्रभुः । व्यासः स्वयं हृषीकेशो येन वेदाः पृथक्कृताः ॥११॥
यस्य देवो महादेवः साक्षाद् देवः पिनाकधृक् । अंशांशेनाभवत् पुत्रो नाम्ना शुक इति प्रभुः ॥१२॥
यो वै साक्षान्महादेवं सर्वभावेन शङ्करम् । प्रपन्नः परया भक्त्या यस्य तज्ज्ञानमैश्वरम् ॥१३॥
ततः पाशुपताः सर्वे ते च हृष्टतनूरुहाः । ऊचुरव्यग्रमनसो व्यासं सत्यवतीसुतम् ॥१४॥
भगवन् भवता ज्ञातं विज्ञानं परमेष्ठिनः । प्रसादाद् देवदेवस्य यत्तन्माहेश्वरं पदम् ॥१५॥
तद्वदास्माकमव्यग्रं रहस्यं गुह्यमुत्तमम् । क्षिप्रं पश्येम तं देवं श्रुत्वा भगवतो मुखात् ॥१६॥
विसर्जयित्वा ताञ्छिष्यान् सुमन्तुप्रमुखांस्तदा । प्रोवाच तत् परं ज्ञानं योगिभ्यो योगवित्तमः ॥१७॥
तत्क्षणादेव विमलं सम्भूतं ज्योतिरुत्तमम् । लीनास्तत्रैव ते विप्राः क्षणादन्तरधीयत ॥१८॥
ततः शिष्यान् समाहूय भगवान् ब्रह्मवित्तमः । प्रोवाच मध्यमेशस्य माहात्म्यं पैलपूर्वकान् ॥१९॥
अस्मिन् स्थाने स्वयं देवो देव्या सह महेश्वरः । रमते भगवान् नित्यं रुद्रैश्च परिवारितः ॥२०॥
अत्र पूर्वं हृषीकेशो विश्वात्मा देवकीसुतः । उवास वत्सरं कृष्णः सदा पाशुपतैर्वृतः ॥२१॥
भस्मोद्धूलितसर्वाङ्गो रुद्राध्ययनतत्परः । आराधयन् हरिः शम्भुं कृत्वा पाशुपतं व्रतम् ॥२२॥
तस्य ते बहवः शिष्या ब्रह्मचर्यपरायणाः । लब्ध्वा तद्वचनाज्ज्ञानं दृष्टवन्तो महेश्वरम् ॥२३॥
तस्य देवो महादेवः प्रत्यक्षं नीललोहितः । ददौ कृष्णस्य भगवान् वरदो वरमुत्तमम् ॥२४॥
येऽर्चयिष्यन्ति गोविन्द्रं मद्भक्ता विधिपूर्वकम् । तेषां तदैश्वरं ज्ञानमुत्पत्स्यति जगन्मय ॥२५॥
त्वमीशोऽर्चयितव्यश्च ध्यातव्यो मत्परैर्जनैः । भविष्यसि न संदेहो मत्प्रसादाद् द्विजातिभिः ॥२६॥
ये च द्रक्ष्यन्ति देवेशं स्नात्वा देवं पिनाकिनम् । ब्रह्महत्यादिकं पापं तेषामाशु विनश्यति ॥२७॥
प्राणांस्त्यजन्ति ये विप्राः पापकर्मरता अपि । ते यान्ति परमं स्थानं नात्र कार्या विचारणा ॥२८॥
धन्यास्तु खलु ये विप्रा मन्दाकिन्यां कृतोदकाः । अर्चयन्ति महादेवं मध्यमेश्वरमुत्तमम् ॥२९॥
स्नानं दानं तपः श्राद्धं पिण्डनिर्वपणन्त्विह । एकैकशः कृतं विप्राः पुनात्यासप्तमं कुलम् ॥३०॥
सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे । यत् फलं लभते मर्त्यस्तस्माद् दशगुणन्त्विह ॥३१॥
एवमुक्त्वा महायोगी मध्यमेशान्तिके प्रभुः । उवास सुचिरं कालं पूजयन् वै महेश्वरम् ॥३२॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वाराणसीमाहात्म्यं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥

---

# चतुस्त्रिंशोऽध्यायः

## सूत उवाच

ततः सर्वाणि गुह्यानि तीर्थान्यायतनानि च । जगाम भगवान् व्यासो जैमिनिप्रमुखैर्वृतः ॥ १ ॥
प्रयागं परमं तीर्थं प्रयागादधिकं शुभम् । विश्वरूपं तथा तीर्थं कालतीर्थमनुत्तमम् ॥ २ ॥
आकाशाख्यं महातीर्थं तीर्थञ्चैवार्षभं परम् । स्वर्लीनञ्च महातीर्थं गौरीतीर्थमनुत्तमम् ॥ ३ ॥
प्राजापत्यं तथा तीर्थं स्वर्गद्वारं तथैव च । जम्बुकेश्वरमित्युक्तं चर्माख्यं तीर्थमुत्तमम् ॥ ४ ॥
गयातीर्थं महातीर्थं तीर्थञ्चैव महानदी । नारायणं परं तीर्थं वायुतीर्थमनुत्तमम् ॥ ५ ॥

ज्ञानतीर्थं परं गुह्यं वाराहं तीर्थमुत्तमम् । यमतीर्थं महापुण्यं तीर्थं संवर्त्तकं परम् ॥ ६ ॥
अग्नितीर्थं द्विजश्रेष्ठाः कालकेश्वरमुत्तमम् । नागतीर्थं सोमतीर्थं सूर्यतीर्थं तथैव च ॥ ७ ॥
पर्वताख्यं महापुण्यं मणिकर्णमनुत्तमम् । घटोत्कचं तीर्थवरं श्रीतीर्थञ्च पितामहम् ॥ ८ ॥
गङ्गातीर्थन्तु देवीशं ययातेस्तीर्थमुत्तमम् । कापिलञ्चैव सोमेशं ब्रह्मतीर्थमनुत्तमम् ॥ ९ ॥
यत्र लिङ्गं पुरानीय स्नातुं ब्रह्मा यदा गतः । तदानीं स्थापयामास विष्णुस्तल्लिङ्गमैश्वरम् ॥१०॥
ततः स्नात्वा समागत्य ब्रह्मा प्रोवाच तं हरिम् । मयाऽनीतमिदं लिङ्गं कस्मात् स्थापितवानसि ॥११॥
तमाह विष्णुस्त्वत्तोऽपि रुद्रे भक्तिर्दृढा यतः । तस्मात् प्रतिष्ठितं लिङ्गं नाम्ना तव भविष्यति ॥१२॥
भूतेश्वरं तथा तीर्थं तीर्थं धर्मसमुद्भवम् । गन्धर्वतीर्थं सुशुभं वाह्नेयं तीर्थमुत्तमम् ॥१३॥
दौर्वासिकं होमतीर्थं चन्द्रतीर्थं द्विजोत्तमाः । चित्राङ्गदेश्वरं पुण्यं पुण्यं विद्याधरेश्वरम् ॥१४॥
केदारतीर्थमुग्राख्यं कालञ्जरमनुत्तमम् । सारस्वतं प्रभासञ्च भद्रकर्णं तथा शुभम् ॥१५॥
लौकिकाख्यं महातीर्थं तीर्थञ्चैव हिमालयम् । हिरण्यगर्भं गोप्रख्यं तीर्थञ्चैव वृषध्वजम् ॥१६॥
उपशान्तं शिवञ्चैव व्याघ्रेश्वरमनुत्तमम् । त्रिलोचनं महातीर्थं लोलार्कञ्चोत्तराह्वयम् ॥१७॥
कपालमोचनं तीर्थं ब्रह्महत्याविनाशनम् । शक्रेश्वरं महापुण्यमानन्दपुरमुत्तमम् ॥१८॥
एवमादीनि तीर्थानि प्राधान्यात् कथितानि तु । न शक्या विस्तराद्वक्तुं तीर्थसंख्या द्विजोत्तमाः ॥१९॥
तेषु सर्वेषु तीर्थेषु स्नात्वाऽभ्यर्च्य कपर्दिनम् । उपोष्य तत्र तत्रासौ पाराशर्यो महामुनिः ॥२०॥
तर्पयित्वा पितॄन् देवान् कृत्वा पिण्डप्रदानकम् । जगाम पुनरेवापि यत्र विश्वेश्वरः शिवः ॥२१॥
स्नात्वाऽभ्यर्च्य महालिङ्गं शिष्यैः सह महामुनिः । उवाच शिष्यान् धर्मात्मा यथेष्टं गन्तुमर्हथ ॥२२॥
ते प्रणम्य महात्मानं जग्मुः पैलादयो द्विजाः । वासञ्च तत्र नियतो वाराणस्यां चकार सः ॥२३॥
शान्तो दान्तस्त्रिषवणं स्नात्वाऽभ्यर्च्य पिनाकिनम् । भैक्षाहारी विशुद्धात्मा ब्रह्मचर्यपरायणः ॥२४॥
कदाचित् तत्र वसता व्यासेनामिततेजसा । भ्रममाणेन भिक्षा वै नैव लब्धा द्विजोत्तमाः ॥२५॥
ततः क्रोधावृततनुर्नराणामिह वासिनाम् । विघ्नं सृजामि सर्वेषां येन सिद्धिर्हि हीयते ॥२६॥
तत्क्षणात् सा महादेवी शङ्करार्द्धशरीरिणी । प्रादुरासीत् स्वयं प्रीत्या वेषं कृत्वा तु मानुषम्॥२७॥
भो भो व्यास महाबुद्धे शप्तव्या न त्वया पुरी । गृहाण भिक्षां मत्तस्त्वमुक्त्वैवं प्रददौ शिवा ॥२८॥
उवाच च महादेवी क्रोधनस्त्वं यतो मुने । इह क्षेत्रे न वस्तव्यं कृतघ्नोऽसि यतः सदा ॥२९॥
एवमुक्तः स भगवान् ध्यात्वा ज्ञात्वा परां शिवाम् । उवाच प्रणतो भूत्वा स्तुत्वा च प्रवरैः स्तवैः ॥३०॥
चतुर्दश्यामथाष्टम्यां प्रवेशं देहि शङ्करि । एवमस्त्वित्यनुज्ञाय देवी चान्तरधीयत ॥३१॥
एवं स भगवान् व्यासो महायोगी पुरातनः । ज्ञात्वा क्षेत्रगुणान् सर्वान् स्थितस्तस्याथ पार्श्वतः॥३२॥
एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं सेवन्ति पण्डिताः । तस्मात् सर्वप्रयत्नेन वाराणस्यां वसेन्नरः ॥३३॥

## सूत उवाच

यः पठेदविमुक्तस्य माहात्म्यं शृणुयादथ । श्रावयेद्वा द्विजाञ्छान्तान् स याति परमां गतिम्॥३४॥
श्राद्धे वा दैविके कार्ये रात्रावहनि वा द्विजाः । नदीनाञ्चैव तीरेषु देवतायतनेषु च ॥३५॥
स्नात्वा समाहितमनाः कामक्रोधविवर्जितः । जपेदीशं नमस्कृत्य स याति परमां गतिम् ॥३६॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वाराणसीमाहात्म्यं नाम चतुस्त्रिंशोऽध्यायः ॥३४

# पञ्चत्रिंशोऽध्यायः

## ऋषय ऊचुः

माहात्म्यविमुक्तस्य यथावत् समुदीरितम् । इदानीञ्च प्रयागस्य माहात्म्यं ब्रूहि सुव्रत ॥ १ ॥
यानि तीर्थानि तत्रैव विश्रुतानि महान्ति वै । इदानीं कथयास्माकं सूत सर्वार्थविद् भवान् ॥ २ ॥

## सूत उवाच

शृणुध्वमृषयः सर्वे विस्तरेण ब्रवीमि वः । प्रयागस्य च माहात्म्यं यत्र देवः पितामहः ॥ ३ ॥
मार्कण्डेयेन कथितं कौन्तेयाय महात्मने । यथा युधिष्ठिरायैतत् तद्वक्ष्ये भवतामहम् ॥ ४ ॥
निहत्य कौरवान् सर्वान् भ्रातृभिः सह पार्थिवः । शोकेन महताविष्टो मुमोह स युधिष्ठिरः ॥ ५ ॥
अचिरेणाथ कालेन मार्कण्डेयो महातपाः । सम्प्राप्तो हास्तिनपुरं राजद्वारे स तिष्ठति ॥ ६ ॥
द्वारपालोऽपि तं दृष्ट्वा राज्ञे कथितवान् द्रुतम् । मार्कण्डेयो द्रष्टुमिच्छुस्त्वामास्ते द्वार्यसौ मुनिः ॥७॥
त्वरितो धर्मपुत्रस्तु द्वारमभ्येत्य सत्वरम् । द्वारमभ्यागतस्येह स्वागतं ते महामुने ॥ ८ ॥
अद्य मे सफलं जन्म अद्य मे तारितं कुलम् । अद्य मे पितरस्तुष्टास्त्वयि तुष्टे सदा मुने ॥ ९ ॥
सिंहासनमुपस्थाप्य पादशौचार्चनादिभिः । युधिष्ठिरो महात्मेति पूजयामास तं मुनिम् ॥१०॥
मार्कण्डेयस्तु संपृष्टः प्रोवाच स युधिष्ठिरम् । किमर्थं मुह्यसे विद्वन् सर्वं ज्ञात्वाऽहमागतः ॥११॥
ततो युधिष्ठिरो राजा प्रणम्य शिरसाऽब्रवीत् । कथयस्व समासेन येन मुच्ये च किल्विषैः ॥१२॥
निहता बहवो युद्धे पुंसो निरपराधिनः । अस्माभिः कौरवैः सार्द्धं प्रसङ्गान्मुनिसत्तम ॥१३॥
येन हिंसा समुद्भूता जन्मान्तरकृतादपि । मुच्येम पातकादद्य तद् भवान् वक्तुमर्हति ॥१४॥

## मार्कण्डेय उवाच

शृणु राजन् महाभाग यन्मां पृच्छसि भारत । प्रयागगमनं श्रेष्ठं नराणां पापनाशनम् ॥१५॥
तत्र देवो महादेवो रुद्रो विश्वामरेश्वरः । समास्ते भगवान् ब्रह्मा स्वयम्भूः सह दैवतैः ॥१६॥

## युधिष्ठिर उवाच

भगवन् श्रोतुमिच्छामि प्रयागगमने फलम् । मृतानां का गतिस्तत्र स्नातानाञ्चैव किं फलम्॥१७॥
ये वसन्ति प्रयागे तु ब्रूहि तेषान्तु किं फलम् । भवतो विदितं ह्येतत् तन्मे ब्रूहि नमोऽस्तु ते ॥१८॥

## मार्कण्डेय उवाच

कथयिष्यामि ते वत्स प्रयागस्नानजं फलम् । पुरा महर्षिभिः सम्यक् कथ्यमानं मया श्रुतम् ॥१९॥
एतत् प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् । अत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः॥२०॥
तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति सङ्गताः । बहून्यन्यानि तीर्थानि सर्वपापापहानि तु ॥२१॥
कथितुं नेह शक्नोमि बहुवर्षशतैरपि । संक्षेपेण प्रवक्ष्यामि प्रयागस्येह कीर्त्तनम् ॥२२॥
षष्टिर्धनुःसहस्राणि यानि रक्षन्ति जाह्नवीम् । यमुनां रक्षति सदा सविता सप्तवाहनः ॥२३॥
प्रयागे तु विशेषेण स्वयं वसति वासवः । मण्डलं रक्षति हरिः सर्वदेवैश्च सम्मितम् ॥२४॥

न्यग्रोधं रक्षते नित्यं शूलपाणिर्महेश्वरः । स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् ॥२५॥
स्वकर्मणा वृता लोका नैव गच्छन्ति तत्पदम् । स्वल्पमल्पतरं पापं यस्य चास्ति नराधिप ॥२६॥
प्रयागं स्मरमाणस्य सर्वमायाति सक्षयम् । दर्शनात् तस्य तीर्थस्य नामसङ्कीर्त्तनादपि ॥२७॥
मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते । पञ्च कुण्डानि राजेन्द्र येषां मध्ये तु जाह्नवी ॥२८॥
प्रयागं विशतः पुंसः पापं नश्यति तत्क्षणात् । योजनानां सहस्रेषु गङ्गां स्मरति यो नरः ॥२९॥
अपि दुष्कृतकर्म्मासौ लभते परमां गतिम । कीर्त्तनान्मुच्यते पापाद् दृष्ट्वा भद्राणि पश्यति॥३०॥
तथोपस्पृश्य राजेन्द्र सुरलोके महीयते । व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ॥३१॥
पितृणां तारकश्चैव सर्वपापप्रणाशनम् । यः प्रयागे कृतो वास उत्तीर्णो भवसागरः ॥३२॥
गङ्गा यमुनमासाद्य त्यजेत् प्राणान् प्रयत्नतः । ईप्सितांल्लभते कामान् वदन्ति मुनिपुङ्गवाः ॥३३॥
दीप्तकाञ्चनवर्णाभैर्विमानैर्भानुवर्णिभिः । सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ॥३४॥
वराङ्गनासमाकीर्णैर्मोदते शुभलक्षणः । गीत-वादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥३५॥
यावन्न स्मरते जन्म तावत् स्वर्गे महीयते । तस्मात् स्वर्गात् परिभ्रष्टः क्षीणकर्मा नरोत्तमः॥३६॥
हिरण्यरत्नसम्पूर्णे समृद्धे जायते कुले । तदेव स्मरते तीर्थे स्मरणात् तत्र गच्छति ॥३७॥
देशे वा यदि वाऽरण्ये विदेशे यदि वा गृहे । प्रयागं स्मरमाणस्तु यस्तु प्राणान् परित्यजेत् ॥३८॥
ब्रह्मलोकमवाप्नोति वदन्ति मुनिपुङ्गवाः । सर्वकामफला वृक्षा मही यत्र हिरण्मयी ॥३९॥
ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति । स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे ॥४०॥
मोदते मुनिभिः सार्द्धं सुकृतेनेह कर्मणा । सिद्ध-चारण-गन्धर्वैः पूज्यते देव-दानवैः ॥४१॥
ततः स्वर्गात् परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् । ततः शुभानि कर्माणि चिन्तयानः पुनःपुनः ॥४२॥
गुणवान् वित्तसम्पन्नो भवतीत्यनुशुश्रुम । कर्मणा मनसा वाचा सत्ये धर्मे प्रतिष्ठितः ॥४३॥
गङ्गा-यमुनयोर्मध्ये यस्तु ग्रामं प्रतीच्छति । सुवर्णमथ मुक्तां वा तथैवान्यत् परिग्रहम् ॥४४॥
स्वकार्ये पितृकार्ये वा देवताभ्यर्च्चनेऽपि वा । निष्फलं तस्य तत् तीर्थं यावत् तद्धनमश्नुते ॥४५॥
अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च । निमित्तेषु च सर्वेषु अप्रमत्तो द्विजो भवेत् ॥४६॥
कपिलां पाटलां धेनुं यस्तु कृष्णां प्रयच्छति । स्वर्णशृङ्गीं रौप्यखुरां चैलकण्ठीं पयस्विनीम् ॥४७॥
तस्या यावन्ति लोमानि सन्ति गात्रेषु सत्तम । तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥४८॥

इति श्रीकौर्मे महापुराणे पूर्वभागे प्रयाग-माहात्म्यं नाम पञ्चविंशोऽध्यायः ॥३५॥

---

# षट्त्रिंशोऽध्यायः

## मार्कण्डेय उवाच

कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम् । आर्षेण तु विधानेन यथादृष्टं यथाश्रुतम् ॥१॥
प्रयागतीर्थयात्रार्थी यः प्रयाति नरः क्वचित् । बलीवर्दं समारूढः शृणु तस्यापि यत् फलम् ॥२॥
नरके वसते घोरे समाः कल्पशतायुतम् । ततो निवर्त्तितो घोरो गवां क्रोधः सदारुणः ।
सलिलञ्च न गृह्णन्ति पितरस्तस्य देहिनः ॥३॥

ऐश्वर्याल्लोभ-मोहाद्वा गच्छेद्यानेन यो नरः । निष्फलं तस्य तत् तीर्थं तस्माद्यानं विवर्जयेत् ॥४॥
गङ्गा-यमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति । आर्षेण तु विधानेन यथाविभवविस्तरम् ॥५॥
न स पश्यति तं घोरं नरकं तेन कर्मणा । उत्तरान् स कुरून् गत्वा मोदते कालमव्ययम् ॥६॥
वटमूलं समाश्रित्य यस्तु प्राणान् परित्यजेत् । स्वर्गलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥७॥
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः । लोकपालाश्च पितरः सर्वे ते लोकसंस्थिताः ॥८॥
सनत्कुमारप्रमुखास्तथा ब्रह्मर्षयोऽपरे । नागाः सुपर्णाः सिद्धाश्च तथा नित्यं समासते ।
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥९॥
गङ्गा-यमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् । प्रयागं राजशार्दूल त्रिषु लोकेषु विश्रुतम् ॥१०॥
तत्राभिषेकं यः कुर्यात् सङ्गमे शंसितव्रतः । तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥११॥
न मातृवचनात् तात न लोकवचनादपि । मतिरुत्क्रमणीया ते प्रयागगमनं प्रति ॥१२॥
षष्टितीर्थसहस्राणि षष्टिकोटयस्तथापराः । तेषां सान्निध्यमत्रैव तीर्थानां कुरुनन्दन ॥१३॥
या गतिर्योगयुक्तस्य संन्यस्तस्य मनीषिणः । सा गतिस्त्यजतः प्राणान् गङ्गा-यमुनसङ्गमे ॥१४॥
न ते जीवन्ति लोकेऽस्मिन् यत्र तत्र युधिष्ठिर । ये प्रयागं न सम्प्राप्तास्त्रिषु लोकेषु वञ्चिताः ॥१५॥
एवं दृष्ट्वा तु तत् तीर्थं प्रयागं परमं पदम् । मुच्यते सर्वपापेभ्यः शशाङ्क इव राहुणा ॥१६॥
कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे । तत्र स्नात्वा च पीत्वा च मुच्यते सर्वपातकैः ॥१७॥
तत्र गत्वा नरः स्थानं महादेवस्य धीमतः । समस्तांस्तारयेत् पूर्वान् दशातीतान् दशावरान्॥१८॥
कृत्वाऽभिषेकन्तु नरः सोऽश्वमेधफलं लभेत् । स्वर्गलोकमवाप्नोति यावदाभूतसंप्लवम् ॥१९॥
पूर्वपार्श्वे तु गङ्गायास्त्रैलोक्ये ख्यातिमान् नृप । अवटः सर्वसामुद्रः प्रतिष्ठानञ्च विश्रुतम् ॥२०॥
ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति । सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥२१॥
उत्तरेण प्रतिष्ठानं भागीरथ्यास्तु सव्यतः । हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥२२॥
अश्वमेधफलं तत्र स्मृतमात्रे तु जायते । यावच्चन्द्रश्च सूर्यश्च तावत् स्वर्गे महीयते ॥२३॥
उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे । परित्यजति यः प्राणान् शृणु तस्यापि यत् फलम्॥२४॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । आस्ते स पितृभिः सार्द्धं स्वर्गलोके नराधिप ॥२५॥
अथ सन्ध्यावटे रम्ये ब्रह्मचारी समाहितः । नरः शुचिरुपासीत ब्रह्मलोकमवाप्नुयात् ॥२६॥
कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् । कोटिवर्षसहस्राणि स्वर्गलोके महीयते ॥२७॥
यत्र गङ्गा महाभागा बहुतीर्थतपोवना । सिद्धं क्षेत्रं हि तज्ज्ञेयं नात्र कार्या विचारणा ॥२८॥
क्षितौ तारयते मर्त्यान् नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता ॥२९॥
यावदस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य तु । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥३०॥
तीर्थानां परमं तीर्थं नदीनां परमा नदी । मोक्षदा सर्वभूतानां महापातकिनामपि ॥३१॥
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा । गङ्गाद्वारे प्रयागे च गङ्गा-सागरसङ्गमे ॥३२॥
सर्वेषामेव भूतानां पापोपहतचेतसाम् । गतिमन्वेषमाणानां नास्ति गङ्गासमा गतिः ॥३३॥
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् । महेश्वरात् परिभ्रष्टा सर्वपापहरा शुभा ॥३४॥
कृते तु नैमिषं तीर्थं त्रेतायां पुष्करं वरम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते ॥३५॥
गङ्गामेव निषेवन्ते प्रयागे तु विशेषतः । नान्यत् कलियुगे रौद्रे भेषजं नृप विद्यते ॥३६॥
अकामो वा सकामो वा गङ्गायां यो विपद्यते । स मृतो जायते स्वर्गे नरकञ्च न पश्यति ॥३७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे प्रयागमाहात्म्यं नाम षट्त्रिंशोऽध्यायः ॥३६॥

# सप्तत्रिंशोऽध्यायः

## मार्कण्डेय उवाच

षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च । माघमासे गमिष्यन्ति गङ्गा-यमुनसङ्गमे ॥१॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत् फलम् । प्रयागे माघमासे तु त्र्यहं स्नातस्य तत् फलम् ॥२॥
गङ्गा-यमुनयोर्मध्ये करीषाग्निञ्च साधयेत् । अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥३॥
यावन्ति रोमकूपाणि तस्य गात्रेषु भूमिप । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥४॥
ततः स्वर्गात् परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् । भुक्त्वा स विपुलान् भोगांस्तत् तीर्थं लभते पुनः ॥५॥
जलप्रवेशं यः कुर्यात् सङ्गमे लोकविश्रुते । राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः ॥६॥
सोमलोकमवाप्नोति सोमेन सह मोदते । षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥७॥
स्वर्गतः शक्रलोकेऽसौ मुनि-गन्धर्वसेविते । ततो भ्रष्टस्तु राजेन्द्र समृद्धे जायते कुले ॥८॥
अधः शिरास्तु यो धारामूर्ध्वपादः पिबेन्नरः । शतवर्षसहस्राणि स्वर्गलोके महीयते ॥९॥
तस्माद् भ्रष्टस्तु राजेन्द्र अग्निहोत्री भवेन्नरः । भुक्त्वाथ विपुलान् भोगांस्तत् तीर्थं भजते पुनः ॥१०॥
यः शरीरं विकर्त्तित्वा शकुनिभ्यः प्रयच्छति । विहङ्गैरुपभुक्तस्य शृणु तस्यापि यत् फलम् ॥११॥
शतं वर्षसहस्राणां सोमलोके महीयते । ततस्तस्मात् परिभ्रष्टो राजा भवति धार्मिकः ॥१२॥
गुणवान् रूपसम्पन्नो विद्वांस्तु प्रियवाक्यवान् । भुक्त्वा तु विपुलान् भोगांस्तत् तीर्थं भजते पुनः ॥१३॥
उत्तरे यमुनातीरे प्रयागस्य च दक्षिणे । ऋणप्रमोचनं नाम तीर्थन्तु परमं स्मृतम् ॥१४॥
एकरात्रोषितः स्नात्वा ऋणात् तत्र प्रमुच्यते । स्वर्गलोकमवाप्नोति अनृणश्च सदा भवेत् ॥१५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे प्रयाग-माहात्म्यं नाम सप्तत्रिंशोऽध्यायः ॥३७॥

---

# अष्टत्रिंशोऽध्यायः

## मार्कण्डेय उवाच

तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । समागता महाभागा यमुना यत्र निम्नगा ॥१॥
येनैव निःसृता गङ्गा तेनैव यमुना गता । योजनानां सहस्रेषु कीर्त्तनात् पापनाशिनी ॥ २ ॥
तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर । सर्वपापविनिमुक्तः पुनात्यासप्तमं कुलम् ॥ ३ ॥
प्राणांस्त्यजति यस्तत्र स याति परमां गतिम् । अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे ॥ ४ ॥
पश्चिमे धर्मराजस्य तीर्थन्त्वनरकं स्मृतम् । तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ५ ॥
कृष्णपक्षे चतुर्दश्यां स्नात्वा सन्तर्प्य वै शुचिः । धर्मराजं महापापैर्मुच्यते नात्र संशयः ॥ ६ ॥
दश तीर्थसहस्राणि दश कोटयस्तथापराः । प्रयागसंस्थितानि स्युरेवमाहुर्मनीषिणः ॥ ७ ॥
तिस्रः कोटयोऽर्द्धकोटिश्च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरीक्षे च तत् सर्वं जाह्नवी स्मृता ॥ ८ ॥
यत्र गङ्गा महाभागा स देवस्तत् तपोवनम् । सिद्धक्षेत्रन्तु तज्ज्ञेयं गङ्गातीरं-समाश्रितम् ॥ ९ ॥

यत्र देवो महादेवो माधवेन महेश्वरः । आस्ते देवेश्वरो नित्यं तत् तीर्थं तत् तपोवनम्॥१०॥
इदं सत्यं द्विजातीनां साधूनामात्मजस्य च । सुहृदाञ्च जपेत् कर्णे शिष्यस्यानुगतस्य च ॥११॥
इदं धन्यमिदं स्वर्ग्यमिदं मेध्यमिदं शुभम् । इदं पुण्यमिदं रम्यं पावनं धर्ममुत्तमम् ॥१२॥
महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् । अत्राधीत्य द्विजोऽध्यायं निर्मलत्वमवाप्नुयात्॥१३॥
यश्चेदं शृणुयान्नित्यं तीर्थं पुण्यं सदा शुचिः । जातिस्मरत्वं लभते नाकपृष्ठे च मोदते ॥१४॥
प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टानुदर्शिभिः । स्नाहि तीर्थेषु कौरव्य मा च वक्रमतिर्भव ॥१५॥
एवमुक्त्वा स भगवान् मार्कण्डेयो महामुनिः । तीर्थानि कथयामास पृथिव्यां यानि कानिचित्॥१६॥
भूसमुद्रादिसंस्थानं ग्रहाणां ज्योतिषां स्थितिम् । पृष्टः प्रोवाच सकलमुक्त्वाऽथ प्रययौ मुनिः ॥१७॥

### सूत उवाच

य एवं कल्यमुत्थाय शृणोति पठतेऽथवा । मुच्यते सर्वपापैस्तु रुद्रलोकं स गच्छति ॥१८॥

इति श्रीकौर्मे महापुराणे पूर्वभागे प्रयागमाहात्म्यं नामाष्टत्रिंशोऽध्यायः ॥३८॥

---

## एकोनचत्वारिंशोऽध्यायः

एवमुक्तास्तु मुनयो नैमिषीया महामुनिम् । पप्रच्छुरुत्तरं सूतं पृथिव्यादिविनिर्णयम् ॥ १ ॥

### ऋषय ऊचुः

कथितो भवता सूत सर्गः स्वायम्भुवः शुभः । इदानीं श्रोतुमिच्छामस्त्रिलोकस्यास्य मण्डलम्॥ २ ॥
यावन्तः सागर-द्वीपास्तथा वर्षाणि पर्वताः । वनानि सरितः सूर्यो ग्रहाणां स्थितिरेव च ॥ ३ ॥
यदाधारमिदं सर्वं येषां पृथ्वी पुरा त्वियम् । नृपाणां तत् समासेन सूत वक्तुमिहार्हसि ॥ ४ ॥

### सूत उवाच

वक्ष्ये देवाधिदेवाय विष्णवे प्रभविष्णवे । नमस्कृत्याप्रमेयाय यदुक्तं तेन धीमता ॥ ५ ॥
स्वायम्भुवस्यास्य मनोः प्रागुक्तो यः प्रियव्रतः । पुत्रस्तस्याभवन् पुत्राः प्रजापतिसमा दश ॥ ६ ॥
आग्नीध्रश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा । मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ॥ ७ ॥
ज्योतिष्मान् दशमस्तेषां महाबलपराक्रमः । धार्मिको दाननिरतः सर्वभूतानुकम्पनः ॥ ८ ॥
मेधाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः । जातिस्मरा महाभागा न राज्ये दधिरे मतिम्॥ ९ ॥
प्रियव्रतोऽभ्यषिञ्चद्वै सप्तद्वीपेषु सप्त तान् । जम्बूद्वीपेश्वरं पुत्रमाग्नीध्रमकरोन्नृपः ॥१०॥
प्लक्षद्वीपेश्वरश्चैव तेन मेधातिथिः कृतः । शाल्मलीशं वपुष्मन्तं नरेन्द्रमभिषिक्तवान् ॥११॥
ज्योतिष्मन्तं कुशद्वीपे राजानं कृतवान् प्रभुः । द्युतिमन्तञ्च राजानं क्रौञ्चद्वीपे समादिशत् ॥१२॥
शाकद्वीपेश्वरञ्चापि भव्यं चक्रे प्रियव्रतः । पुष्कराधिपतिं चक्रे सवनञ्च प्रजापतिः ॥१३॥
पुष्करेश्वरतश्चापि महावीतः सुतोऽभवत् । धातकिश्चैव द्वावेतौ पुत्रौ पुत्रवतां वरौ ॥१४॥
महावीतं स्मृतं वर्षं तस्य स्यात् तु महात्मनः । नाम्ना वै धातकेश्चापि धातकीखण्डमुच्यते ॥१५॥

शाकद्वीपेश्वरस्यापि भव्यस्याप्यभवन् सुताः । जलदश्च कुमारश्च सुकुमारो मणीचकः ॥१६॥
कुशोत्तरोऽथ मोदाकिः सप्तमः स्यान्महाद्रुमः । जलदं जलदस्याथ वर्षं प्रथममुच्यते ॥१७॥
कुमारस्य तु कौमारं तृतीयं सुकुमारकम् । मणीचकं चतुर्थञ्च पञ्चमञ्च कुशोत्तरम् ॥१८॥
मोदाकं षष्ठमित्युक्तं सप्तमन्तु महाद्रुमम् । क्रौञ्चद्वीपेश्वरस्यापि सुता द्युतिमतोऽभवन् ॥१९॥
कुशलः प्रथमस्तेषां द्वितीयस्तु मनोहरः । उष्ण तृतीयः सम्प्रोक्तश्चतुर्थः पीवरः स्मृतः ॥२०॥
अन्धकारो मुनिश्चैव दुन्दुभिश्चापि सप्तमः । तेषां स्वनामभिर्देशाः क्रौञ्चद्वीपाश्रयाः शुभाः॥२१॥
ज्योतिष्मतः कुशद्वीपे सप्तैवासन् महौजसः । उद्भेदो वेणुमांश्चैवाश्वरथो लम्बनो धृतिः ॥२२॥
षष्ठः प्रभाकरश्चापि सप्तमः कपिलः स्मृतः । स्वनामचिह्नतश्चात्र तथा वर्षाणि सुव्रताः ॥२३॥
ज्ञेयानि च तथान्येषु द्वीपेष्वेतानि नामतः । शाल्मलिद्वीपनाथस्य सुताश्चासन् वपुष्मतः ॥२४॥
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा । वैद्युतो मानसश्चैव सप्तमः सुप्रभो मतः ॥२५॥
प्लक्षद्वीपेश्वरस्यापि सप्त मेधातिथेः सुताः । ज्येष्ठः शान्तभयस्तेषां शिशिरस्तु सुखोदयः ॥२६॥
आनन्दश्च शिवश्चैव क्षेमकश्च ध्रुवस्तथा । प्लक्षद्वीपादिषु ज्ञेया शाकद्वीपान्तिकेषु च ॥२७॥
वर्णाश्रमविभागेन स्वधर्मो मुक्तये मतः । जम्बूद्वीपेश्वरस्यापि पुत्राश्चासन् महाबलाः ॥२८॥
आग्नीध्रस्य द्विजश्रेष्ठास्तन्नामानि निबोधत । नाभिः किम्पुरुषश्चैव तथा हरिरिलावृतः ॥२९॥
रम्यो हिरण्वांश्च कुरुर्भद्राश्वः केतुमालकः । जम्बूद्वीपेश्वरो राजा स चाग्नीध्रो महामतिः ॥३०॥
विभज्य नवधा तेभ्यो यथान्यायं ददौ पुनः । नाभेस्तु दक्षिणं वर्षं हिमाह्वं प्रददौ पिता ॥३१॥
हेमकूटं ततो वर्षं ददौ किम्पुरुषाय सः । तृतीयं नैषधं वर्षं हरये दत्तवान् पिता ॥३२॥
इलावृताय प्रददौ मेरुमध्यमिलावृतम् । नीलाचलाश्रयं वर्षं रम्याय प्रददौ पिता ॥३३॥
श्वेतं यदुत्तरं वर्षं पित्रा दत्तं हिरण्वते । यदुत्तरं शृङ्गवतो वर्षं तत् कुरवे ददौ ॥३४॥
मेरोः पूर्वेण यद्वर्षं भद्राश्वाय न्यवेदयत् । गन्धमादनवर्षन्तु केतुमालाय दत्तवान् ॥३५॥
वर्षेष्वेतषु तान् पुत्रानभ्यषिञ्चन् नराधिपः । संसारासारतां ज्ञात्वा तपस्तप्तुं वनं गतः ॥३६॥
हिमाह्वयन्तु यस्यैतन्नाभेरासीन्महात्मनः । तस्यर्षभोऽभवत् पुत्रो मरुदेव्यां महाद्युतिः ॥३७॥
ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः । सोऽभिषिच्यर्षभः पुत्रं भरतं पृथिवीपतिः ॥३८॥
वानप्रस्थाश्रमं गत्वा तपस्तेपे यथाविधि । तपसा कर्षितोऽत्यर्थं कृशोऽयमनिशं ततः ॥३९॥
ज्ञानयोगरतो भूत्वा महापाशुपतोऽभवत् । सुमतिर्भरतस्यापि पुत्रः परमधार्मिकः ॥४०॥
सुमतेस्तैजसस्तस्मादिन्द्रद्युम्नो व्यजायत । परमेष्ठी सुतस्तस्मात् प्रतीहारस्तदन्वयः ॥४१॥
प्रतिहर्त्तेति विख्यात उत्पन्नस्तस्य चात्मजः । भवस्तस्मादथोद्गाथः प्रस्तावि-तत्सुतोऽभवत्॥४२॥
पृथुस्ततस्ततो नक्तो नक्तस्यापि गयः स्मृतः । नरा गयस्य तनयस्तस्य पुत्रो विराडभूत् ॥४३॥
तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत । महान्तोऽपि ततश्चाभूच्चौचनस्तत्सुतोऽभवत् ॥४४॥
त्वष्टा त्वष्टुश्च विरजो रजस्तस्मादभूत् सुतः । शतजिद्रथजित् तस्य जज्ञे पुत्रशतं द्विजाः ॥४५॥
तेषां प्रधानो बलवान् विश्वज्योतिरिति स्मृतः । आराध्य देवं ब्रह्माणं क्षेमकं नाम पार्थिवम् ।
असूत पुत्रं धर्मज्ञं महाबाहुमरिन्दमम् ॥४६॥
एते पुरस्ताद्राजानो महासत्त्वा महौजसः । एषां वंशप्रसूतैस्तु भुक्तेयं पृथिवी पुरा ॥४७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासो नाम एकोनचत्वारिंशोऽध्यायः ॥३९॥

# चत्वारिंशोऽध्यायः

## सूत उवाच

अतः परं प्रवक्ष्यामि संक्षेपेण द्विजोत्तमाः । त्रैलोक्यस्यास्य मानं वो न शक्यं विस्तरेण तु ।१॥
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा । जनस्तपश्च सत्यश्च लोकास्त्वण्डोद्भवा मताः ॥२।
सूर्याचन्द्रमसोर्यावत् किरणैरवभासते । तावद्भूर्लोक आख्यातः पुराणे द्विजपुङ्गवाः ॥ ३ ॥
यावत्प्रमाणो भूर्लोको विस्तरात् परिमण्डलात् । भुवर्लोकोऽपि तावत् स्यान्मण्डलाद्भास्करस्य तु॥४॥
ऊर्ध्वं यन्मण्डलं व्योम्नि ध्रुवो यावद् व्यवस्थितः । स्वर्लोकः स समाख्यातस्तत्र वायोस्तु नेमयः॥ ५ ॥
आवहः प्रवहश्चैव तत्रैवानुवहः पुनः । संवहो विवहश्चैव तदूर्ध्वं स्यात् परावहः ॥ ६ ॥
तथा परिवहश्चोर्द्ध्वं वायोर्वै सप्त नेमयः । भूमेर्योजनलक्षे तु भानोर्वै मण्डलं स्थितम् ॥ ७ ॥
लक्षे दिवाकरस्यापि मण्डलं शशिनः स्मृतम् । नक्षत्रमण्डलं कृत्स्नं तल्लक्षेण प्रकाशते ॥ ८ ॥
द्विलक्षे ह्यन्तरे विप्रा बुधो नक्षत्रमण्डलात् । तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थितः ॥ ९ ॥
अङ्गारकोऽपि शुक्रस्य तत्प्रमाणो व्यवस्थितः । लक्षद्वयेन भौमस्य स्थितो देवपुरोहितः ॥१०॥
सौरिर्द्विलक्षेण गुरोर्ग्रहाणामथ मण्डलात् । सप्तर्षिमण्डलं तस्माल्लक्षमात्रे प्रकाशते ॥११॥
ऋषीणां मण्डलादूर्ध्वं लक्षमात्रे स्थितो ध्रुवः । मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ।
तत्र धर्मः स भगवान् विष्णुर्नारायणः स्थितः ॥१२॥
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः । त्रिगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ॥१३॥
द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः । तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाऽधस्तात् प्रसर्पति ।१४॥
उद्धृत्य पृथिवीच्छायां निर्मितो मण्डलाकृतिः । स्वर्भानोस्तु बृहत् स्थानं तृतीयं यत् तमोमयम्॥१५॥
चन्द्रस्य षोडशो भागो भार्गवस्य विधीयते । भार्गवात् पादहीनस्तु विज्ञेयो वै बृहस्पतिः ॥१६॥
बृहस्पतेः पादहीनौ भौम-सौरावुभौ स्मृतौ । विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः ॥१७॥
तारानक्षत्ररूपाणि वपुष्मन्तीह यानि वै । बुधेन तानि तुल्यानि विस्तारान्मण्डलात् तथा॥१८॥
तारानक्षत्ररूपाणि हीनानि तु परस्परम् । शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने ॥१९॥
सर्वतो वै निकृष्टानि तारकामण्डलानि तु । योजनान्यर्द्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ॥२०॥
उपरिष्टात् त्रयस्तेषां ग्रहा वै दूरसर्पिणः । सौरोऽङ्गिराश्च वक्रश्च ज्ञेया मन्दविचारिणः ॥२१॥
तेभ्योऽधस्ताच्च चत्वारः पुनरन्ये महाग्रहाः । सूर्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ॥२२॥
दक्षिणायनमार्गस्थो यदा चरति रश्मिमान् । तदा पूर्वग्रहेणैव सूर्योऽधस्तात् प्रसर्पति ॥२३॥
विस्तीर्णं मण्डलं कृत्वा तस्योर्द्ध्वं चरते शशी । नक्षत्रमण्डलं कृत्स्नं सोमादूर्द्ध्वं प्रसर्पति ॥२४॥
नक्षत्रेभ्यो बुधश्चोर्द्ध्वं बुधादूर्ध्वन्तु भार्गवः । वक्रस्तु भार्गवादूर्ध्वं वक्रादूर्ध्वं बृहस्पतिः ॥२५॥
तस्माच्छनैश्चरोऽप्यूर्द्ध्वं तस्मात् सप्तर्षिमण्डलम् । ऋषीणाञ्चैव सप्तानां ध्रुवश्चोर्द्ध्वं व्यवस्थितः॥२६॥
योजनानां सहस्राणि भास्करस्य रथो नव । ईशादण्डस्तथा तस्य द्विगुणो द्विजसत्तमाः ॥२७॥
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि तु । योजनानान्तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥२८॥
त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके । संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥२९॥
चत्वारिंशत्सहस्राणि द्वितीयाक्षो व्यवस्थितः । पञ्चाशतानि सार्द्धानि योजनानि द्विजोत्तमाः॥३०॥
अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोः । ह्रस्वोऽक्षस्तद्युगार्द्धेन ध्रुवाधारो रथस्य तु ॥३१॥

द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले । हयाश्च सप्त च्छन्दांसि तन्नामानि निबोधत ॥३२॥
गायत्री च बृहत्युष्णिग् जगती पङ्क्तिरेव च । अनुष्टुप् त्रिष्टुबप्युक्ता च्छन्दांसि हरयो हरेः ॥३३॥
मानसोपरि माहेन्द्री प्राच्यां दिशि महापुरी । दक्षिणायां यमस्याथ वरुणस्य तु पश्चिमे ॥३४॥
उत्तरेण च सोमस्य तन्नामानि निबोधत । अमरावती संयमनी सुखा चैव विभावरी ॥३५॥
काष्ठागतो दक्षिणतः क्षिप्तेषुरिव सर्पति । ज्योतिषां चक्रमादाय देवदेवः पितामहः ॥३६॥
दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः । सर्वद्वीपेषु विप्रेन्द्रा निशार्द्धस्य च सम्मुखः ॥३७॥
उदयास्तमने चैव सर्वकालन्तु सम्मुखे । दिशास्वशेषासु तथा विप्रेन्द्रा विदिशासु च ॥३८॥
कुलालचक्रपर्यन्तं भ्रमन्नेष यथेश्वरः । करोत्यहस्तथा रात्रिं विमुञ्चन् मेदिनीं द्विजाः ॥३९॥
दिवाकरकरैरेतत् पूरितं भुवनत्रयम् । त्रैलोक्यं कथितं सद्भिर्लोकानां मुनिपुङ्गवाः ॥४०॥
आदित्यमूलमखिलं त्रैलोक्यं नात्र संशयः । भवत्यस्माज्जगत् सर्वं सदेवासुरमानुषम् ॥४१॥
रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्राणां दिवौकसाम् । द्युतिमान् द्युतिमत्कृत्स्नमजयत् सार्वलौकिकम् ॥४२॥
सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः । सूर्य एष त्रिलोकस्य मूलं परमदैवतम् ॥४३॥
द्वादशान्ये तथादित्या देवास्ते येऽधिकारिणः । निर्वहन्ति वदन्त्यस्य तदंशा विष्णुमूर्त्तयः ॥४४॥

सर्वे नमस्यन्ति सहस्रभानुं गन्धर्व - यक्षोरग - किन्नराद्याः ।
यजन्ति यज्ञैर्विविधैर्मुनीन्द्राश्छन्दोमयं ब्रह्ममयं पुराणम् ॥४५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासो नाम चत्वारिंशोऽध्यायः ॥४०॥

---

# एकचत्वारिंशोऽध्यायः

## सूत उवाच

स रथोऽधिष्ठितो देवैरादित्यैर्मुनिभिस्तथा । गन्धर्वैरप्सरोभिश्च ग्रामणी - सर्प - राक्षसैः ॥ १ ॥
धाताऽर्यमा च मित्रश्च वरुणः शक्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥ २ ॥
भगस्त्वष्टा च विष्णुश्च द्वादशैते दिवाकराः । आप्याययति वै भानुर्वसन्तादिषु वै क्रमात् ॥ ३ ॥
पुलस्त्यः पुलहश्चात्रिर्वसिष्ठश्चाङ्गिरा भृगुः । भरद्वाजो गौतमश्च कश्यपः क्रतुरेव च ॥ ४ ॥
जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः । स्तुवन्ति देवं विविधैश्छन्दोभिस्ते यथाक्रमम् ॥ ५ ॥
रथकृच्च रथौजाश्च रथचित्रः सुबाहुकः । रथस्वनोऽथ वरुणः सुषेणः सेनजित् तथा ॥ ६ ॥
तार्क्ष्यश्चारिष्टनेमिश्च कृतजित् सत्यजित् तथा । ग्रामण्यो देवदेवस्य कुर्वतेऽभीषुसंग्रहम् ॥ ७ ॥
अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा । सर्पो व्याघ्रस्तथापश्च वातो विद्युद् दिवाकरः ॥ ८ ॥
ब्रह्मोपेतश्च विप्रेन्द्रा यज्ञोपेतस्तथैव च । राक्षसप्रवरा ह्येते प्रयान्ति पुरतः क्रमात् ॥ ९ ॥
वासुकिः कङ्कनीलश्च तक्षकः सर्पपुङ्गवः । एलापत्रः शङ्खपालस्तथैरावतसंज्ञितः ॥१०॥
धनञ्जयो महापद्मस्तथा कर्कोटको द्विजाः । कम्बलोऽश्वतरश्चैव वहन्त्येनं यथाक्रमम् ॥११॥
तुम्बुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा । उग्रसेनो वसुरुचिर्वर्चावसुस्तथापरः ॥१२॥
चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः । सूर्यवर्च्चा द्वादशैते गन्धर्वा गायना वराः ॥१३॥

गायन्ति गानैर्विविधैर्भानुं षड्जादिभिः क्रमात् । ऋतुस्थलाऽप्सरोवर्या तथान्या पुञ्जिकस्थला ॥१४॥
मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः । अनुम्लोचा च विश्वाची घृताची चोर्वशी तथा॥१५॥
अन्या च पूर्वचित्तिः स्याद्रम्भा चैव तिलोत्तमा । ताण्डवैर्विविधैरेनं वसन्तादिषु वै क्रमात् ॥१६॥
तोषयन्ति महादेवं भानुमात्मानमव्ययम् । एवं देवा वसन्त्यर्के द्वौ द्वौ मासौ क्रमेण तु ।
सूर्यमाप्याययन्त्येते तेजसा तेजसां निधिम् ॥१७॥
ग्रथितैः स्वैर्वचोभिस्तु स्तुवन्ति मुनयो रविम् । गन्धर्वाप्सरसश्चैनं नृत्य-गेयैरुपासते ॥१८॥
ग्रामणी - यज्ञ - भूतानि कुर्वतेऽभीषुसंग्रहम् । सर्पा वहन्ति देवेशं यातुधानाः प्रयान्ति च ॥१९॥
बालखिल्या नयन्त्यस्तं परिवार्योदयाद्रविम् । एते तपन्ति वर्षन्ति भान्ति वान्ति सृजन्ति च॥२०॥
भूतानामशुभं कर्म व्यपोहन्तीति कीर्त्तिताः । एते सहैव सूर्येण भ्रमन्ति दिवि भानुगाः ॥२१॥
विमाने च स्थिता नित्यं कामगे वातरंहसि । वर्षन्तश्च तपन्तश्च ह्लादयन्तश्च वै क्रमात् ।
गोपायन्तीह भूतानि सर्वाणीह युगक्रमात् ॥२२॥
एतेषामेव देवानां यथावीर्यं यथातपः । यथायोगं यथासत्त्वं स एष तपति प्रभुः ॥२३॥
अहोरात्रव्यवस्थानकारणं स प्रजापतिः । पितृ-देव-मनुष्यादीन् स सदाऽप्याययद्रविः ॥२४॥
तत्र देवो महादेवो भास्वान् साक्षान्महेश्वरः । भासते वेदविदुषां नीलग्रीवः सनातनः ॥२५॥
स एष देवो भगवान् परमेष्ठी प्रजापतिः । स्थानं तद्विदुरादित्ये वेदज्ञा वेदविग्रहम् ॥२६॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासो नाम एकचत्वारिंशोऽध्यायः ॥४१॥

---

# द्विचत्वारिंशोऽध्यायः

## सूत उवाच

एवमेष महादेवो देवदेवः पितामहः । करोति नियतं कालं कालात्मा ह्यैश्वरी तनुः ॥ १ ॥
तस्य ये रश्मयो विप्राः सप्तलोकप्रदीपकाः । तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥ २ ॥
सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च । विश्वश्रवाः पुनश्चान्यः संयद्वसुरतः परः ॥ ३ ॥
अर्वावसुरिति ख्यातः स्वरकः सप्त कीर्त्तिताः । सुषुम्णः सूर्यरश्मिस्तु पुष्णाति शिशिरद्युतिम् ॥ ४ ॥
तिर्यगूर्ध्वप्रचारोऽसौ सुषुम्णः परिपठ्यते । हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः ॥ ५ ॥
विश्वकर्मा तथा रश्मिर्बुधं पुष्णाति सर्वदा । विश्वश्रवास्तु यो रश्मिः शुक्रं पुष्णाति नित्यदा ॥ ६ ॥
संयद्वसुरिति ख्यातो यः पुष्णाति स लोहितम् । बृहस्पतिं प्रपुष्णाति रश्मिरर्वावसुः प्रभुः ॥ ७ ॥
शनैश्चरं प्रपुष्णाति सप्तमस्तु स्वरस्तथा । एवं सूर्यप्रभावेण सर्वा नक्षत्र-तारकाः ॥ ८ ॥
वर्धन्ते वर्धिता नित्यं नित्यमाप्याययन्ति च । दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव नित्यशः ॥ ९ ॥
आदानान्नित्यमादित्यस्तेजसां तमसामपि । आदत्ते स तु नाडीनां सहस्रेण समन्ततः ॥१०॥
नादेयञ्चैव सामुद्रं कौप्यञ्चैव सहस्रदृक् । स्थावरं जङ्गमञ्चैव यच्च कुल्यादिकं पयः ॥११॥
तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिस्रवम् । तासां चतुःशता नाड्यो वर्षन्ति चित्रमूर्त्तयः ॥१२॥
चन्द्रगाश्चैव गाहाश्च काञ्चनाः शातनास्तथा । अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः ॥१३॥

हिमोद्वताश्च ता नाड्यो रश्मयो निःसृताः पुनः । रेष्यो मेष्यश्च वास्यश्च ह्लादिन्यः सर्जनास्तथा ॥१४॥
चन्द्रास्ता नामतः सर्वाः पीतास्ताः स्युर्गभस्तयः । शुक्लाश्च कुङ्कुमाश्चैव गावो विश्वभृतस्तथा ॥१५॥
शुक्लास्ता नामतः सर्वास्त्रिविधा घर्मसर्जनाः । समं बिभर्ति ताभिः स मनुष्य-पितृ-देवताः ॥१६॥
मनुष्यानौषधेनेह स्वधया च पितॄनपि । अमृतेन सुरान् सर्वांस्त्रींस्त्रिभिस्तर्पयत्यसौ ॥१७॥
वसन्ते ग्रीष्मके चैव षड्भिः स तपति प्रभुः । शरद्यपि च वर्षासु चतुर्भिः सम्प्रवर्षति ॥१८॥
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः । वरुणो माघमासे तु सूर्यः पूषा तु फाल्गुने ॥१९॥
चैत्रे मासि भवेदंशुर्धाता वैशाखतापनः । ज्येष्ठे मासे भवेदिन्द्र आषाढे तपते रविः ॥२०॥
विवस्वान् श्रावणे मासि प्रोष्ठपद्यां भगः स्मृतः । पर्जन्यश्चाश्विने त्वष्टा कार्तिके मासि भास्करः॥२१॥
मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः । पञ्च रश्मिसहस्राणि वरुणस्यार्ककर्मणि ॥२२॥
षड्भिः सहस्रैः पूषा तु देवोंऽशुः सप्तभिस्तथा । धाताष्टाभिः सहस्रैस्तु नवभिश्च शतक्रतुः ॥२३॥
विवस्वान् दशभिः पाति पात्येकादशभिर्भगः । सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत् ॥२४॥
अर्यमा दशभिः पाति पर्जन्यो नवभिस्तथा । षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति विश्वधृक् ॥२५॥
वसन्ते कपिलः सूर्यो ग्रीष्मे काञ्चनमप्रभः । श्वेतो वर्षासु विज्ञेयः पाण्डुरः शरदि प्रभुः ॥२६॥
हेमन्ते ताम्रवर्णः स्याच्छिशिरे लोहितो रविः । ओषधीषु कलां धत्ते स्वधामपि पितृष्वथ ॥२७॥
सूर्योऽमरेष्वमृतन्तु त्रयं त्रिषु नियच्छति । अन्ये चाष्टौ ग्रहा ज्ञेया सूर्येणाधिष्ठिता द्विजाः ॥२८॥
चन्द्रमाः सोमपुत्रश्च शुक्रश्चैव बृहस्पतिः । भौमो मन्दस्तथा राहुः केतुमानपि चाष्टमः ॥२९॥
सर्वे ध्रुवे निबद्धा वै ग्रहास्ते वातरश्मिभिः । भ्राम्यमाणा यथायोगं भ्रमन्त्यनु दिवाकरम् ॥३०॥
अलातचक्रवद् यान्ति वातचक्रेरितास्तथा । यस्माद्वहति तान् वायुः प्रवहस्तेन स स्मृतः ॥३१॥
रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः । वामदक्षिणतो युक्ता दश तेन क्षपाकरः ॥३२॥
वीथ्याश्रयाणि चरति नक्षत्राणि रविर्यथा । ह्रास-वृद्धी तु विप्रेन्द्रा रश्मीनां सूर्यवत् स्मृते ॥३३॥
स सोमः शुक्लपक्षे तु भास्करे परतः स्थिते । आपूर्यते परस्यान्ते सततश्चैव ताः प्रभाः ॥३४॥
क्षीणं पीतं सुरैः सोममाप्याययति नित्यदा । एकेन रश्मिना विप्राः सुषुम्णाख्येन भास्करः ॥३५॥
एषा सूर्यस्य वीर्येण सोमस्याप्यायिता तनुः । पौर्णमास्यां स दृश्येत सम्पूर्णो दिवसक्रमात् ॥३६॥
सम्पूर्णमर्द्धमासेन तं सोममममृतात्मकम् । पिबन्ति देवता विप्रा यतस्तेऽमृतभोजनाः ॥३७॥
ततः पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके । अपराह्णे पितृगणा जघन्यं पर्युपासते ॥३८॥
पिबन्ति द्विलवं कालं शिष्टा तस्य कला तु या । स्वधामृतमयीं पुण्यां तामिन्दोरमृतात्मिकाम् ॥३९॥
निःसृतं तदमावास्यां गभस्तिभ्यः स्वधामृतम् । मासतृप्तिमवाप्याग्र्यां पितरः सन्ति निर्वृताः॥४०॥
न सोमस्य विनाशः स्यात् सुधा चैव सुपीयते । एवं सूर्यनिमित्तोऽस्य क्षयो वृद्धिश्च सत्तमाः ॥४१॥
सोमपुत्रस्य चाष्टाभिर्वाजिभिर्वायुवेगिभिः । वाजिभिः स्यन्दनो युक्तस्तेनासौ याति सर्वतः॥४२॥
शुक्रस्य भूमिजैरश्वैः स्यन्दनो दशभिर्वृतः । अष्टाभिश्चापि भौमस्य रथो हैमः सुशोभनः ॥४३॥
बृहस्पतेरथाष्टाश्वः स्यन्दनो हेमनिर्मितः । रथस्तमोमयोऽष्टाश्वो मन्दस्यायसनिर्मितः ॥४४॥
स्वर्भानोर्भास्करारेश्च तथाष्टाभिर्हयैर्वृतः । एते महाग्रहाणां वै समाख्याता रथाश्च वै ॥४५॥
सर्वे ध्रुवे महाभागा निबद्धा वायुरश्मिभिः । ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः ।
भ्रमन्ति भ्रामयन्त्येनं सर्वाण्यनिलरश्मिभिः ॥४६॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासो नाम द्विचत्वारिंशोऽध्यायः ॥४२॥

# त्रिचत्वारिंशोऽध्यायः

## सूत उवाच

ध्रुवादूर्ध्वं महर्लोकः कोटियोजनविस्तृतः । कल्पाधिकारिणस्तत्र संस्थिता द्विजपुङ्गवाः ॥ १ ॥
जनलोका महर्लोकात् तथा कोटिद्वयात्मकः । सनकाद्यास्तथा तत्र संस्थिता ब्रह्मणः सुताः ॥ २ ॥
जनलोकात् तपोलोकः कोटित्रयसमन्वितः । वैराजास्तत्र वै देवाः स्थिता दाहविवर्जिताः ॥ ३ ॥
प्राजापत्यात् सत्यलोकः कोटिषट्केन संयुतः । अपुनर्मारको नाम ब्रह्मलोकस्तु स स्मृतः ॥ ४ ॥
अत्र लोकगुरुर्ब्रह्मा विश्वात्मा विश्वभावनः । आस्ते स योगिभिर्नित्यं पीत्वा योगामृतं परम् ॥ ५ ॥
वसन्ति यतयः शान्ता नैष्ठिका ब्रह्मचारिणः । योगिनस्तापसाः सिद्धा जापकाः परमेष्ठिनः ॥ ६ ॥
द्वारं तद्योगिनामेकं गच्छतां परमं पदम् । तत्र गत्वा न शोचन्ति स विष्णुः स च शङ्करः ॥ ७ ॥
सूर्यकोटिप्रतीकाशं पुरं तस्य दुरासदम् । न मे वर्णयितुं शक्यं ज्वालामालासमाकुलम् ॥ ८ ॥
तत्र नारायणस्यापि भवनं ब्रह्मणः पुरे । शेते तत्र हरिः श्रीमान् योगी मायामयः परः ॥ ९ ॥
स विष्णुलोकः कथितः पुनरावृत्तिवर्जितः । यान्ति तत्र महात्मानो ये प्रपन्ना जनार्दनम् ॥१०॥
ऊर्ध्वं तद्ब्रह्मसदनात् पुरं ज्योतिर्मयं शुभम् । वह्निना च परिक्षिप्तं तत्रास्ते भगवान् हरः ॥११॥
देव्या सह महादेवश्चिन्त्यमानो मनीषिभिः । योगिभिः शतसाहस्रैर्भूतै रुद्रैश्च संवृतः ॥१२॥
तत्र ये यान्ति निरता भक्ता वै ब्रह्मचारिणः । महादेवपराः शान्तास्तापसाः सत्यवादिनः ॥१३॥
निर्ममा निरहङ्काराः काम - क्रोधविवर्जिताः । द्रक्ष्यन्ति ब्राह्मणा युक्ता रुद्रलोकः स वै स्मृतः ॥१४॥
एते सप्त महालोकाः पृथिव्याः परिकीर्त्तिताः । महातलादयश्चाधः पातालाः सन्ति वै द्विजाः ॥१५॥
महातलञ्च पातालं सर्वरत्नोपशोभितम् । प्रासादैर्विविधैः शुभ्रै देवतायतनैर्युतम् ॥१६॥
अनन्तेन च संयुक्तं मुचुकुन्देन धीमता । नृपेण बलिना चैव पातालस्वर्गवासिना ॥१७॥
शैलं रसातलं विप्राः शार्करं हि तलातलम् । पीतं सुतलमित्युक्तं नितलं विद्रुमप्रभम् ।
सितञ्च वितलं प्रोक्तं तलश्चैव सितेतरम् ॥१८॥
सुपर्णेन मुनिश्रेष्ठास्तथा वासुकिना शुभम् । रसातलमिति ख्यातं तथान्यैश्च निषेवितम् ॥१९॥
विरोचन - हिरण्याक्ष - तारकाद्यैश्च सेवितम् । तलातलमिति ख्यातं सर्वशोभासमन्वितम् ॥२०॥
वैनतेयादिभिश्चैव कालनेमिपुरोगमैः । पूर्वदेवैः समाकीर्णं सुतलञ्च तथापरैः ।
नितलं यवनाद्यैश्च तारकाग्निमुखैस्तथा ॥२१॥
तक्षकाद्यैस्तथा नागैः प्रह्लादेनासुरेण च । वितलञ्चैव विख्यातं कम्बलाहीन्द्रसेवितम् ॥२२॥
महाजम्भेन वीरेण हयग्रीवेण धीमता । शङ्कुकर्णेन सम्भिन्नं तथा नमुचिपूर्वकैः ॥२३॥
तथान्यैर्विविधैर्नागैस्तलञ्चैव सुशोभनम् । तेषामधस्तान्नरकाः कालाद्याः परिकीर्त्तिताः ॥२४॥
पापिनस्तेषु पच्यन्ते न ते वर्णयितु क्षमाः । पातालानामधश्चास्ते शेषाख्या वैष्णवी तनुः ॥२५॥
कालाग्निरुद्रो योगात्मा नारसिंहोऽपि माधवः । योऽनन्त पठ्यते देवो नागरूपी जनार्दनः ।
तदाधारमिदं सर्वं स कालाग्नि समाश्रितः ॥२६॥
तमाविश्य महायोगी कालस्तद्वदनोत्थितः । विषज्वालामयोऽन्तेऽसौ जगत् संहरति स्वयम् ॥२७॥
सहस्रमायोऽप्रतिमः संहर्ता शङ्करो भवः । तामसी शाम्भवी मूर्त्तिः कालो लोकप्रकालनः ॥२८॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासो नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

# चतुश्चत्वारिंशोऽध्यायः

## सूत उवाच

एतद् ब्रह्माण्डमाख्यातं चतुर्दशविधं महत् । अतः परं प्रवक्ष्यामि भूर्लोकस्यास्य निर्णयम् ॥ १ ॥
जम्बूद्वीपः प्रधानोऽयं प्लक्षः शाल्मलिरेव च । कुशः क्रौञ्चश्च शाकश्च पुष्करश्चैव सप्तमः ॥ २ ॥
एते सप्त महाद्वीपाः समुद्रैः सप्तभिर्वृताः । द्वीपाद् द्वीपो महानुक्तः सागराच्चापि सागरः ॥ ३ ॥
क्षारोदेक्षुरसोदश्च सुरोदश्च घृतोदकः । दध्योदः क्षीरसलिलः स्वादूदश्चापि सागराः ॥ ४ ॥
पञ्चाशतकोटिविस्तीर्णा ससमुद्रा धरा स्मृता । द्वीपैश्च सप्तभिर्युक्ता योजनानां समन्ततः ॥ ५ ॥
जम्बूद्वीपः समस्तानां मध्ये चैव व्यवस्थितः । तस्य मध्ये महामेरुर्विश्रुतः कनकप्रभः ॥ ६ ॥
चतुरशीतिसाहस्रो योजनैस्तस्य चोच्छ्रयः । प्रविष्टः षोडशाधस्ताद् द्वात्रिंशद् मूर्ध्नि विस्तृतः ॥ ७ ॥
मूले षोडशसाहस्रो विस्तारस्तस्य सर्वतः । भूपद्मस्यास्य शैलोऽसौ कर्णिकात्वेन संस्थितः ॥ ८ ॥
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ ९ ॥
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे । सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ १० ॥
भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् । हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विजाः ॥११॥
रम्यकञ्चोत्तरं वर्षं तथैवानु हिरण्मयम् । उत्तराः कुरवश्चैव यथैते भारतास्तथा ॥१२॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तमाः । इलावृतञ्च तन्मध्ये तन्मध्ये मेरुरुच्छ्रितः ॥१३॥
मेरोश्चतुर्दशं तत्र नवसाहस्रविस्तरम् । इलावृतं महाभागाश्चत्वारस्तत्र पर्वताः ।
विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः ॥१४॥
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः । विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरः स्मृतः ॥१५॥
कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च । जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्महर्षयः ॥१६॥
महागजप्रमाणानि जम्ब्वास्तस्याः फलानि च । पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः ॥१७॥
रसेन तस्याः प्रख्याता तत्र जम्बूनदीति वै । सरित् प्रवर्त्तते सापि पीयते तत्र वासिभिः ॥१८॥
न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः । तत्पानात् सुस्थमनसां नराणां तत्र जायते ॥१९॥
तत्तीरमृद्रसं प्राप्य वायुना सुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥२०॥
भद्राश्वः पूर्वतो मेरोः केतुमालश्च पश्चिमे । वर्षे द्वे तु मुनिश्रेष्ठास्तयोर्मध्ये इलावृतम् ॥२१॥
वनं चैत्ररथं पूर्वं दक्षिणं गन्धमादनम् । वैभ्राजं पश्चिमं विद्यादुत्तरं सवितुर्वनम् ॥२२॥
अरुणोदं महाभद्रमसितोदञ्च मानसम् । सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ॥२३॥
सितान्तश्च कुमुद्वांश्च कुवरी माल्यवांस्तथा । वैकङ्को मणिशैलश्च ऋक्षवांश्चाचलोत्तमः ॥२४॥
महानीलोऽथ रुचकः सबिन्दुर्मन्दरस्तथा । वेणुमांश्चैव मेघश्च निषधो देवपर्वतः ॥२५॥
इत्येते देवरचिताः सिद्धावासाः प्रकीर्त्तिताः । अरुणोदस्य सरसः पूर्वतः केशराचलाः ।
त्रिकूटः शिखरश्चैव पतङ्गो रुचकस्तथा ॥२६॥
निषधो वसुधारश्च कलङ्कश्शिखः स्मृतः । समूलो वसुवेदिश्च कुरुरश्चैव सानुमान् ॥२७॥
ताम्राभश्च विशालश्च कुमुदो वेणुपर्वतः । एकशृङ्गो महाशैलो गजशैलश्च पिञ्जकः ॥२८॥
पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः । इत्येते देवरचिता उत्कटाः पर्वतोत्तमाः ॥२९॥
महाभद्रस्य सरसो दक्षिणे केशराचलाः । शिखिवासाश्च वैदूर्यः कपिलो गन्धमादनः ॥३०॥

जारुधिश्च सुराम्बुश्च सर्वगन्धाचलोत्तमः । सुपार्श्वश्च सुप्रक्षश्च कङ्कः कपिल एव च ॥३१॥
विरजो भद्रजालश्च सुरसश्च महाबलः । अञ्जनो मधुमांस्तद्वच्चित्रश्रृङ्गो महालयः ॥३२॥
कुमुदो मुकुटश्चैव पाण्डुरः कृष्ण एव च । पारिपात्रो महाशैलस्तथैव कपिलाचलः ॥३३॥
सुषेणः पुण्डरीकश्च महामेघस्तथैव च । एते पर्वतराजानः सिद्ध - गन्धर्वसेविताः ॥३४॥
असितोदस्य सरसः पश्चिमे केशराचलाः । शङ्खकूटोऽथ वृषभो हंसो नागस्तथैव च ॥३५॥
कालञ्जरः शक्रशैलो नीलः कमल एव च । पारिजातो महाशैलः शैलः कनक एव च ॥३६॥
पुष्पकश्च सुमेघश्च वाराहो विरजास्तथा । मयूरः कपिलश्चैव महाकपिल एव च ॥३७॥
इत्येते देव - गन्धर्व - सिद्ध - यक्षैश्च सेविताः । सरसो मानसस्येह उत्तरे केशराचलाः ॥३८॥
एतेषां शैलमुख्यानामन्तरेषु यथाक्रमम् । सन्ति चैवान्तरद्रोण्यः सरांसि च वनानि च ॥३९॥
वसन्ति तत्र मुनयः सिद्धा वै ब्रह्मभाविताः । प्रसन्नाः शान्तरजसः सर्वदुःखविवर्जिताः ॥४०।

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासे पर्वतसंख्यानं नाम
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

# पञ्चचत्वारिंशोऽध्यायः

## सूत उवाच

चतुर्दश सहस्राणि योजनानां महापुरी । मेरोरुपरि विख्याता देवदेवस्य वेधसः ॥ १ ॥
तत्रास्ते भगवान् ब्रह्मा विश्वात्मा विश्वभावनः । उपास्यमानो योगीन्द्रैर्मुनीन्द्रोपेन्द्रशङ्करैः ॥ २ ॥
तत्र देवेश्वरेशानं विश्वात्मानं प्रजापतिम् । सनत्कुमारो भगवानुपास्ते नित्यमेव हि ॥ ३ ॥
स सिद्ध - ऋषि - गन्धर्वैः पूज्यमानः सुरैरपि । समास्ते योगयुक्तात्मा पीत्वा तत् परमामृतम्॥ ४ ॥
तत्र देवाधिदेवस्य शम्भोरमिततेजसः । दीप्तमायतनं शुभ्रं पुरस्ताद् ब्रह्मणः स्थितम् ॥ ५ ॥
दिव्यकान्तिसमायुक्तं चतुर्द्वारं सुशोभनम् । महर्षिगणसङ्कीर्णं ब्रह्मविद्भिर्निषेवितम् ॥ ६ ॥
देव्या सह महादेवः शशाङ्कार्काग्निलोचनः । रमते तत्र विश्वेशः प्रमथैः प्रमथेश्वरः ॥ ७ ॥
तत्र वेदविदः शान्ता मुनयो ब्रह्मचारिणः । पूजयन्ति महादेवं तापसाः सत्यवादिनः ॥ ८ ॥
तेषां साक्षान्महादेवो मुनीनां भावितात्मनाम् । गृह्णाति पूजां शिरसा पार्वत्या परमेश्वरः ॥ ९ ॥
तत्रैव पर्वतवरे शक्रस्य परमा पुरी । नाम्नाऽमरावती पूर्वे सर्वशोभासमन्विता ॥१०॥
तमिन्द्रमप्सरः-सङ्घा गन्धर्वाः सिद्धचारणाः । उपासते सहस्राक्षं देवास्तत्र सहस्रशः ॥११॥
ये धार्मिका वेदविदो याग-होमपरायणाः । तेषां तत् परमं स्थानं देवानामपि दुर्लभम् ॥१२॥
तस्माद्दक्षिणदिग्भागे वह्नेरमिततेजसः । तेजोवती नाम पुरी दिव्याश्चर्यसमन्विता ॥१३॥
तत्रास्ते भगवान् वह्निर्भ्राजमानः स्वतेजसा । जपिनां होमिनां स्थानं दानवानां दुरासदम् ॥१४॥
दक्षिणे पर्वतवरे यमस्यापि महापुरी । नाम्ना संयमनी दिव्या सर्वशोभासमन्विता ॥१५॥
तत्र वैवस्वतं देवं देवाद्याः पर्युपासते । स्थानं तत् सत्यसन्धानां लोके पुण्यकृतां नृणाम् ॥१६॥
तस्यास्तु पश्चिमे भागे निर्ऋतेस्तु महात्मनः । रक्षोवती नाम पुरी राक्षसैः संवृता तु या ॥१७॥

तत्र ते निर्ऋतिं देवं राक्षसाः पर्युपासते । गच्छन्ति तां धर्मरता ये तु तामसवृत्तयः ॥१८॥
पश्चिमे पर्वतवरे वरुणस्य महापुरी । नाम्ना शुद्धवती पुण्या सर्वकामर्द्धिसंयुता ॥१९॥
तत्राप्सरोगणैः सिद्धैः सेव्यमानोऽमराधिपैः । आस्ते स वरुणो राजा तत्र गच्छन्ति येऽम्बुदाः ॥२०॥
तस्या उत्तरदिग्भागे वायोरपि महापुरी । नाम्ना गन्धवती पुण्या यत्रास्तेऽसौ प्रभञ्जनः ॥२१॥
अप्सरोगणगन्धर्वैः सेव्यमानो महान् प्रभुः । प्राणायामपरा विप्राः स्थानं तद् यान्ति शाश्वतम् ॥२२॥
तस्याः पूर्वे तु दिग्भागे सोमस्य परमा पुरी । नाम्ना कान्तिमती शुभ्रा तस्यां सोमो विराजते ॥२३॥
तत्र ये धर्मनिरताः स्वधर्मं पर्युपासते । तेषां तदुचितं स्थानं नानाभोगसमन्वितम् ॥२४॥
तस्यास्तु पूर्वदिग्भागे शङ्करस्य शुभा पुरी । नाम्ना यशोवती पुण्या सर्वेषां सा दुरासदा ॥२५॥
तत्रेशानस्य भवनं रुद्रेणाधिष्ठितं शुभम् । गणेश्वरस्य विपुलं तत्रास्ते स गणावृतः ॥२६॥
तत्र भोगादिलिप्सूनां भक्तानां परमेष्ठिनः । निवासः कल्पितः पूर्वं देवदेवेन शूलिना ॥२७॥
विष्णुपादाद्विनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै ततः ॥२८॥
सा तत्र पतिता दिक्षु चतुर्द्धा ह्यभवद् द्विजाः । सीता चालकनन्दा च सुवङ्क्षुर्भद्रनामिका ॥२९॥
पूर्वेण शैलाच्छैलन्तु सीता यात्यन्तरिक्षगा । ततश्च पूर्ववर्षेण भद्राश्वाद् याति चार्णवम् ॥३०॥
तथैवालकनन्दा च दक्षिणादेत्य भारतम् । प्रयाति सागरं भित्वा सप्तभेदा द्विजोत्तमाः ॥३१॥
सुवङ्क्षुःपश्चिमगिरीनतीत्य सकलांस्तथा । पश्चिमं केतुमालाख्यं वर्षं गत्वैति चार्णवम् ॥३२॥
भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् । अतीत्य चोत्तराम्भोधिं समभ्येति महर्षयः ॥३३॥
आनील-निषधायामौ माल्यवद्-गन्धमादनौ । तयोर्मध्यं गतो मेरुः कर्णिकाकारसंस्थितः ॥३४॥
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा । पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥३५॥
जठरो देवकूटश्च मर्यादापर्वतावुभौ । दक्षिणोत्तरमायामावानील-निषधायतौ ॥३६॥
गन्धमादन-कैलासौ पूर्व-पश्चायतावुभौ । अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥३७॥
निषधः पारिपात्रश्च मर्यादापर्वताविमौ । मेरोः पश्चिमदिग्भागे यथापूर्वं व्यवस्थितौ ॥३८॥
त्रिशृङ्गो जारुधिस्तद्वदुत्तरे वर्षपर्वतौ । पूर्व-पश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥३९॥
मर्यादापर्वताः प्रोक्ता अष्टाविह मया द्विजाः । जठराद्याः स्थिता मेरोश्चतुर्दिक्षु महर्षयः ॥४०॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासे मेरुवर्णनं नाम
पञ्चचत्वारिंशोऽध्यायः ॥४५॥

---

# षट्चत्वारिंशोऽध्यायः

## सूत उवाच

केतुमाले नराः कालाः सर्वे पनसभोजनाः । स्त्रियश्चोत्पलपत्राभास्ते जीवन्ति वर्षायुतम् ॥ १ ॥
भद्राश्वे पुरुषाः शुक्लाः स्त्रियश्चन्द्रांशुमन्निभाः । दशवर्षसहस्राणि जीवन्ते चान्नभोजनाः ॥ २ ॥
रम्यके पुरुषा नार्यो रमन्ति रजतप्रभाः । दशवर्षसहस्राणि शतानि दश पञ्च च ॥ ३ ॥
जीवन्ति चैव सत्त्वस्था न्यग्रोधफलभोजनाः । हिरण्मये हिरण्याभाः सर्वे श्रीफलभोजनाः ॥ ४ ॥
एकादशसहस्राणि शतानि दश पञ्च च । जीवन्ति पुरुषा नार्यो देवलोकस्थिता इव ॥ ५ ॥

त्रयोदशसहस्राणि शतानि दश पञ्च च । जीवन्ति कुरुवर्षे तु श्यामाङ्गाः क्षीरभोजनाः॥ ६ ॥
सर्वे मिथुनजाताश्च नित्यं सुखनिषेविताः । चन्द्रद्वीपे महादेवं यजन्ति सततं शिवम् ॥ ७ ॥
तथा किम्पुरुषे विप्रा मानवा हेमसन्निभाः । दशवर्षसहस्राणि जीवन्ति प्लक्षभोजनाः ॥ ८ ॥
यजन्ति सततं देवं चतुःशीर्षं चतुर्भुजम् । ध्याने मनः समाधाय सादरं भक्तिसंयुताः ॥ ९ ॥
तथा च हरिवर्षे तु महारजतसन्निभाः । दशवर्षसहस्राणि जीवन्तीक्षुरसाशिनः ॥१०॥
तत्र नारायणं देवं विश्वयोनिं सनातनम् । उपासते सदा विष्णुं मानवा विष्णुभाविताः ॥११॥
तत्र चन्द्रप्रभं शुभ्रं शुद्धस्फटिकसन्निभम् । विमानं वासुदेवस्य पारिजातवनाश्रितम् ॥१२॥
चतुर्द्वारमनौपम्यं चतुस्तोरणसंयुतम् । प्राकारैर्दशभिर्युक्तं दुराधर्षं सुदुर्गमम् ॥१३॥
स्फाटिकैर्मण्डपैर्युक्तं देवराजगृहोपमम् । सुवर्णस्तम्भसाहस्रैः सर्वतः समलंकृतम् ॥१४॥
हेमसोपानसंयुक्तं नानारत्नोपशोभितम् । दिव्यसिंहासनोपेतं सर्वशोभासमन्वितम् ॥१५॥
सरोभिः स्वादुपानीयैर्नदीभिश्चोपशोभितम् । नारायणपरैः शुद्धैर्वेदाध्ययनतत्परैः ॥१६॥
योगिभिश्च समाकीर्णं ध्यायद्भिः पुरुषं हरिम् । स्तुवद्भिः सततं मन्त्रैर्नमस्यद्भिश्च माधवम् ॥१७॥
तत्र देवाधिदेवस्य विष्णोरमिततेजसः । राजानः सर्वकालन्तु महिमानं प्रकुर्वते ॥१८॥
गायन्ति चैव नृत्यन्ति विलासिन्यो मनोहराः । स्त्रियो यौवनशालिन्यः सदा मण्डनतत्पराः ॥१९॥
इलावृते पद्मवर्णा जम्बूफलरसाशिनः । त्रयोदशसहस्राणि वर्षाणाञ्च स्थिरायुषः ॥२०॥
भारतेषु स्त्रियः पुंसो नानावर्णाः प्रकीर्तिताः । नानादेवार्चने युक्ता नानाकर्माणि कुर्वते ॥२१॥
परमायुः स्मृतं तेषां शतं वर्षाणि सुव्रताः । नवयोजनसाहस्रं वर्षमेतत् प्रकीर्त्तितम् ॥२२॥
कर्मभूमिरियं विप्रा नराणामधिकारिणाम् । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥२३॥
विन्ध्यश्च पारिपात्रश्च सप्तात्र कुलपर्वताः । इन्द्रद्वीपः कसेरुमांस्ताम्रपर्णो गभस्तिमान् ॥२४॥
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः । अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ॥२५॥
योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरः । पूर्वे किरातास्तस्यान्ते पश्चिमे यवनास्तथा ॥२६॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्रास्तथैव च । इज्या-युद्ध-वणिज्याभिर्वर्त्तयन्त्यत्र मानवाः ॥२७॥
स्रवन्ते पावना नद्यः पर्वतेभ्यो विनिःसृताः । शतद्रुश्चन्द्रभागा च सरयूर्यमुना तथा ॥२८॥
इरावती वितस्ता च विपाशा देविका कुहूः । गोमती धूतपापा च बाहुदा च दृषद्वती ॥२९॥
कौशिकी लोहिनी चेति हिमवत्पादनिःसृताः । वेदस्मृतिर्वेदवती व्रतघ्नी त्रिदिवा तथा ॥३०॥
पर्णाशा चन्दना चैव सदानीरा मनोरमा । चर्मण्वती तथा दूर्या विदिशा वेत्रवत्यपि ।
शिप्रः सुशिल्पापि तथा पारियात्रात् तु निःसृताः ॥३१॥
नर्मदा सुरसा शोणो दर्शाणा च महानदी । मन्दाकिनी चित्रकूटा तामसी च पिशाचिका ॥३२॥
चित्रोत्पला विशाला च मञ्जुला बालुवाहिनी । ऋक्षवत्पादजा नद्यः सर्वपापहरा नृणाम् ॥३३॥
तापी पयोष्णी निर्विन्ध्या शीघ्रोदा च महानदी । वेण्या वैतरणी चैव बलाका च कुमुद्वती ॥३४॥
तोया चैव मही गौरी दुर्गा चान्तःशिला तथा । विन्ध्यपादप्रसूतास्ताः नद्यः पापहरा नृणाम् ॥३५॥
गोदावरी भीमरथी कृष्णा वेणा च वश्यता । तुङ्गभद्रा सुप्रयोगा कावेरी च द्विजोत्तमाः ॥३६॥
दक्षिणापथनद्यस्तु सह्यपादाद्विनिःसृताः । कृतमाला ताम्रपर्णी पुष्पवत्युत्पलावती ॥३७॥
मलयान्निःसृता नद्यः सर्वाः शीतजलाः स्मृताः । ऋषिकुल्या त्रिसामा च गन्धमादनगामिनी ॥३८॥
क्षिप्रा पलाशिनी चैव ऋषीका वंशधारिणी । शुक्तिमत्पादसञ्जाताः सर्वपापहरा नृणाम् ॥३९॥

आसां नद्युपनद्यश्च शतशो द्विजपुङ्गवाः । सर्वपापहराः पुण्याः स्नानदानादिकर्मसु ॥४०॥
तास्विमे कुरुपञ्चाला मध्यदेशादयो जनाः । पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥४१॥
पुण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च कृत्स्नशः । तथाऽपरान्ताः सौराष्ट्रशूद्राभीरास्तथार्बुदाः ॥४२॥
मालका मालवाश्चैव पारियात्रनिवासिनः । सौवीराः सैन्धवा हूणा शाल्वा कल्पनिवासिनः ॥४३॥
माद्रा रामास्तथैवान्ध्राः पारसीकास्तथैव च । आसां पिबन्ति सलिलं वसन्ति सरितां सदा ॥४४॥
चत्वारि भारते वर्षे युगानि कवयोऽब्रुवन् । कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित् ॥४५॥
यानि किम्पूरुषाद्यानि वर्षाण्यष्टौ महर्षयः । न तेषु शोको नायासो नोद्वेगः क्षुद्भयं न च ॥४६॥
स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः । रमन्ते विविधैर्भावैः सर्वाश्च स्थिरयौवनाः ॥४७॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासे केतुमालादिवर्षवर्णनं
नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

# सप्तचत्वारिंशोऽध्यायः

## सूत उवाच

हेमकूटगिरेः शृङ्गे महाकूटं सुशोभनम् । स्फाटिकं देवदेवस्य विमानं परमेष्ठिनः ॥ १ ॥
तत्र देवाधिदेवस्य भूतेशस्य त्रिशूलिनः । देवाः सर्षिगणाः सिद्धाः पूजां नित्यं प्रकुर्वते ॥ २ ॥
स देवो गिरिशः सार्द्धं महादेव्या महेश्वरः । भूतैः परिवृतो नित्यं भाति तत्र पिनाकधृक् ॥ ३ ॥
विभक्तचारुशिखरः कैलासो यत्र पर्वतः । निवासः कोटियक्षाणां कुबेरस्य च धीमतः ॥ ४ ॥
तत्रापि देवदेवस्य भवस्यायतनं महत् । मन्दाकिनी तत्र पुण्या रम्या सुविमलोदका ॥ ५ ॥
नदी नानाविधैः पद्मैरनेकैः समलंकृता । देव - दानव - गन्धर्व - यक्ष-राक्षस-किन्नरैः ॥ ६ ॥
उपस्पृष्टजला नित्यं सुपुण्या सुमनोरमा । अन्याश्च नद्यः शतशः स्वर्णपद्मैरलंकृताः ॥ ७ ॥
तासां कूले तु देवस्य स्थानानि परमेष्ठिनः । देवर्षिगणजुष्टानि तथा नारायणस्य तु ॥ ८ ॥
तस्यापि शिखरे शुभ्रं पारिजातवनं शुभम् । तत्र शुक्रस्य विपुलं भवनं रत्नमण्डितम् ॥ ९ ॥
स्फाटिकस्तम्भसंयुक्तं हेमगोपुरशोभितम् । तत्राथ देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ।
पुण्यश्च भवनं रम्यं सर्वरत्नोपशोभितम् ॥१०॥
तत्र नारायणः श्रीमाँल्लक्ष्म्या सह जगत्पतिः । आस्ते सर्वेश्वरः श्रेष्ठः पूज्यमानः सनातनः ॥११॥
तथा च वसुधारे तु वसूनां रत्नमण्डितम् । स्थानानामष्टमं पुण्यं दुराधर्षं सुरद्विषाम् ॥१२॥
रत्नधारे गिरिवरे सप्तर्षीणां महात्मनाम् । सप्ताश्रमाणि पुण्यानि सिद्धावासैर्युतानि च ॥१३॥
तत्र हैमं चतुर्द्वारं वज्रनीलादिमण्डितम् । सुपुण्यं सदवस्थानं ब्रह्मणोऽव्यक्तजन्मनः ॥१४॥
तत्र देवर्षयो विप्राः सिद्धा ब्रह्मर्षयोऽपरे । उपासते देवदेवं पितामहमजं परम् ॥१५॥
स तैः सम्पूजितो नित्यं देव्या सह चतुर्मुखः । आस्ते हिताय लोकानां शान्तानां परमा गतिः॥१६॥
तस्यैकशृङ्गशिखरे महापद्मैरलंकृतम् । स्वच्छामृतजलं पुण्यं सुगन्धं सुमहत् सरः ।
जैगीषव्याश्रमं पुण्यं योगीन्द्रैरुपसेवितम् ॥१७॥

तत्रासौ भगवान् नित्यमास्ते शिष्यैः समावृतः । प्रशान्तदोषैरक्षुद्रैर्ब्रह्मविद्भिर्महात्मभिः ॥१८॥
शङ्खो मनोहरश्चैव कौशिकः कृष्ण एव च । सुमना वेदवादश्च शिष्यास्तस्य प्रधानतः ॥१९॥
सर्वयोगरताः शान्ता भस्मोद्धूलितविग्रहाः । उपासते महाचार्या ब्रह्मविद्यापरायणाः ॥२०॥
तेषामनुग्रहार्थाय यतीनां शान्तचेतसाम् । सान्निध्यं कुरुते भूयो देव्या सह महेश्वरः ॥२१॥
अनेकान्याश्रमाणि स्युस्तस्मिन् गिरिवरोत्तमे । मुनीनां युक्तमनसां सरांसि सरितस्तथा ॥२२॥
तेषु योगरता विप्रा जापकाः संयतेन्द्रियाः । ब्रह्मण्यासक्तमनसो रमन्ते ज्ञानतत्पराः ॥२३॥
आत्मन्यात्मानमाधाय शिखान्तान्तरसंस्थितम् । ध्यायन्ति देवमीशानं येन सर्वमिदं ततम् ॥२४॥
सुमेघं वासवस्थानं सहस्रादित्यसन्निभम् । तत्रास्ते भगवानिन्द्रः शच्या सह सुरेश्वरः ॥२५॥
गजशैले तु दुर्गाया भवनं मणितोरणम् । आस्ते भगवती दुर्गा तत्र साक्षान्महेश्वरी ॥२६॥
उपास्यमाना विविधैः शक्तिभेदैरितस्ततः । पीत्वा योगामृतं लब्ध्वा साक्षादमृतमैश्वरम् ॥२७॥
सुनीलस्य गिरेः शृङ्गे नानाधातुसमुज्ज्वले । राक्षसानां पुराणि स्युः सरांसि शतशो द्विजाः ॥२८॥
तथा पुरशतं विप्राः शतशृङ्गे महाचले । स्फाटिकस्तम्भसंयुक्तं यक्षाणाममितौजसाम् ॥२९॥
श्वेतोदरगिरेः शृङ्गे सुपर्णस्य महात्मनः । प्राकारगोपुरोपेतं मणितोरणमण्डितम् ॥३०॥
स तत्र गरुडः श्रीमान् साक्षाद्विष्णुरिवापरः । ध्यात्वाऽऽस्ते तत् परं ज्योतिरात्मानं विष्णुमव्ययम् ॥३१॥
अन्यच्च भवनं पुण्यं श्रीशृङ्गे मुनिपुङ्गवाः । श्रीदेव्याः सर्वरत्नाढ्यं हैमं समणितोरणम् ॥३२॥
तत्र सा परमा शक्तिर्विष्णोरतिमनोरमा । अनन्तविभवा लक्ष्मीर्जगत्सम्मोहनोत्सुका ॥३३॥
अध्यास्ते देव - गन्धर्व - सिद्ध-चारणवन्दिता । विचिन्त्या जगतो योनिः स्वशक्तिकिरणोज्ज्वला ॥३४॥
तत्रैव देवदेवस्य विष्णोरायतनं महत् । सरांसि तत्र चत्वारि विचित्रकमलाशयाः ॥३५॥
तथा सहस्रशिखरे विद्याधरपुराष्टकम् । रत्नसोपानसंयुक्तं सरोभिश्चोपशोभितम् ॥३६॥
नद्यो विमलपानीयाश्चित्रनीलोत्पलाकराः । कर्णिकारवनं दिव्यं तत्रास्ते शङ्करः स्वयम् ॥३७॥
पारिपात्रे महाशैले महालक्ष्म्याः पुरं शुभम् । रम्यप्रासादसंयुक्तं घण्टा-चामरभूषितम् ॥३८॥
नृत्यद्भिरप्सरः - सङ्घैरितश्चेतश्च शोभितम् । मृदङ्ग - पणवोद्घुष्टं वेणुवीणानिनादितम् ॥३९॥
गन्धर्व - किन्नराकीर्णं संवृतं सिद्धपुङ्गवैः । भास्वद्भित्तिसमायुक्तं महाप्रासादसंकुलम् ।
महागणेश्वरैर्जुष्टं धार्मिकाणां सुदर्शनम् ॥४०॥
तत्र सा वसते देवी नित्यं योगपरायणा । महालक्ष्मीर्महादेवी त्रिशूलवरधारिणी ॥४१॥
त्रिनेत्रा शक्तिभिर्देवी संवृता सदसन्मयी । पश्यन्ति तत्र मुनयः सिद्धा ये ब्रह्मवादिनः ॥४२॥
सुपार्श्वस्योत्तरे भागे सरस्वत्याः पुरोत्तमम् । सरांसि सिद्धजुष्टानि देवभोग्यानि सत्तमाः ॥४३॥
पाण्डुरस्य गिरेः शृङ्गे विचित्रद्रुमसंकुले । गन्धर्वाणां पुरशतं दिव्यस्त्रीभिः समावृतम् ॥४४॥
तेषु नित्यं मदोत्सिक्ता नरा नार्यस्तथैव च । क्रीडन्ति मुदिता नित्यं विलासैर्भोगतत्पराः ॥४५॥
अञ्जनस्य गिरेः शृङ्गे नारीपुरमनुत्तमम् वसन्ति तत्राप्सरसो रम्भाद्या रतिलालसाः ॥४६॥
चित्रसेनादयो यत्र समायान्त्यर्थिनः सदा । सा पुरी सर्वरत्नाढ्या नैकप्रस्रवणैर्युता ॥४७॥
अनेकानि पुराणि स्युः कौमुदे चापि सत्तमाः । रुद्राणां शान्तरजसामीश्वरासक्तचेतसाम् ॥४८॥
तेषु रुद्रा महायोगा महेशान्तरचारिणः । समासते परं ज्योतिरारूढाः स्थानमैश्वरम् ॥४९॥
पिञ्जरस्य गिरेः शृङ्गे गणेशानां पुरत्रयम् । नन्दीश्वरस्य कपिला तत्रास्ते स महामतिः ॥५०॥
तथा च जारुधेः शृङ्गे देवदेवस्य धीमतः । दीप्तमायतनं पुण्यं भास्करस्यामितौजसः ॥५१॥

तस्यैवोत्तरदिग्भागे चन्द्रस्थानमनुत्तमम् । वसते तत्र रम्ये तु भगवान् शीतदीधितिः ॥५२॥
अन्यच्च भवनं दिव्यं हंसशैले महर्षयः । सहस्रयोजनायामं सुवर्णमणितोरणम् ॥५३॥
तत्रास्ते भगवान् ब्रह्मा सिद्धसंघैरभिष्टुतः । सावित्र्या सह विश्वात्मा वासुदेवादिभिर्युतः ॥५४॥
तस्य दक्षिणदिग्भागे सिद्धानां पुरमुत्तमम् । सनन्दनादयो यत्र वसन्ति मुनिपुङ्गवाः ॥५५॥
पञ्चशैलस्य शिखरे दानवानां पुरत्रयम् । नातिदूरेण तस्माच्च दैत्याचार्यस्य धीमतः ॥५६॥
सुगन्धशैलशिखरे सरिद्भिरुपशोभितम् । कर्दमस्याश्रमं पुण्यं तत्रास्ते भगवानृषिः ॥५७॥
तस्यैव पूर्वदिग्भागे किञ्चिद्वै दक्षिणाश्रिते । सनत्कुमारो भगवांस्तत्रास्ते ब्रह्मवित्तमः ॥५८॥
सर्वेष्वेतेषु शैलेषु तथान्येषु मुनीश्वराः । सरांसि विमला नद्यो देवानामालयानि च ॥५९॥
सिद्धलिङ्गानि पुण्यानि मुनिभिः स्थापितानि च । वनान्याश्रमवर्याणि संख्यातुं नैव शक्यते ॥६०॥
एष संक्षेपतः प्रोक्तो जम्बूद्वीपस्य विस्तरः । न शक्यो विस्तराद्वक्तुं मया वर्षशतैरपि ॥६१॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासे जम्बूद्वीपवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः

### सूत उवाच

जम्बूद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः । संवेष्टयित्वा क्षीरोदं प्लक्षद्वीपो व्यवस्थितः ॥ १ ॥
प्लक्षद्वीपे च विप्रेन्द्राः सप्तासन् कुलपर्वताः । ऋज्वायताः सुपर्वाणः सिद्धसङ्घनिषेविताः ॥ २ ॥
गोमेदः प्रथमस्तेषां द्वितीयश्चन्द्र उच्यते । नारदो दुन्दुभिश्चैव मणिमान् मेघनिस्वनः ।
वैभ्राजः सप्तमस्तेषां ब्रह्मणोऽत्यन्तवल्लभः ॥ ३ ॥
तत्र देवर्षिगन्धर्वैः सिद्धैश्च भगवानजः । उपास्यते स विश्वात्मा साक्षी सर्वस्य विश्वदृक् ॥ ४ ॥
तेषु पुण्या जनपदा आधयो व्याधयो न च । न तत्र पापकर्त्तारः पुरुषा वै कदाचन ॥ ५ ॥
तेषां नद्यश्च सप्तैव वर्षाणान्तु समुद्रगाः । तासु ब्रह्मर्षयो नित्यं पितामहमुपासते ॥ ६ ॥
अनुतप्ता-शिखे चैव विपाषा त्रिदिवा कुभा । अमृता सुकृता चैव नामतः परिकीर्त्तिताः ॥ ७ ॥
क्षुद्रनद्यस्तु विख्याताः सरांसि च बहून्यपि । न चैतेषु युगावस्था पुरुषा वै चिरायुषः ॥ ८ ॥
आर्यकाः कुररास्चैव विदेहा भाविनस्तथा । ब्रह्म-क्षत्रिय-विट्शूद्रास्तस्मिन् द्वीपे प्रकीर्त्तिताः ॥ ९ ॥
इज्यते भगवान् सोमो वर्णैस्तत्र निवासिभिः । तेषाञ्च सोमसायुज्यं सारूप्यं मुनिपुङ्गवाः ॥१०॥
सर्वे धर्मरता नित्यं सर्वे मुदितमानसाः । पञ्चवर्षसहस्राणि जीवन्ति च निरामयाः ॥११॥
प्लक्षद्वीपप्रमाणात् तु द्विगुणेन समन्ततः । संवेष्टयेक्षुरसाम्भोधिं शाल्मलिः संव्यवस्थितः ॥१२॥
सप्त वर्षाणि तत्रापि सप्तैव कुलपर्वताः । ऋज्वायताः सुपर्वाणः सप्त नद्यश्च सुव्रताः ॥१३॥
कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः । द्रोणः कङ्कस्तु महिषः ककुद्मान् सप्तमस्तथा ॥१४॥
योनी तोया वितृष्णा च चन्द्रा शुक्ला विमोचनी । निवृत्तिश्चेति ता नद्यः स्मृता पापहरा नृणाम् ॥१५॥

न तेषु विद्यते लोभः क्रोधो वा द्विजसत्तमाः । न चैवास्ति युगावस्था जना जीवन्त्यनामयाः ॥१६॥
यजन्ति सततं तत्र वर्णा वायुं सनातनम् । तेषां तस्याथ सायुज्यं सारूप्यञ्च सलोकता ॥१६॥
कपिला ब्राह्मणाःप्रोक्ता राजानश्चारुणास्तथा । पीता वैश्याः स्मृताःकृष्णाद्वीपेऽस्मिन् वृषलाद्विजाः॥१८॥
शाल्मलस्य तु विस्ताराद् द्विगुणेन समन्ततः । संवेष्ट्य तु सुरोदाब्धिं कुशद्वीपो व्यवस्थितः ॥१९॥
विद्रुमश्चैव हेमश्च द्युतिमान् पुष्पवांस्तथा । कुशेशयो हरिश्चैव मन्दरः सप्त पर्वताः ॥२०॥
धूतपापा शिवा चैव पवित्रा सम्मिता तथा । तथा विद्युत्प्रभा रामा महानद्यश्च सप्त वै ॥२१॥
अन्याश्च शतशो विप्रा नद्यो मणिजलाः शुभाः । तास्तु ब्रह्माणमीशानं देवाद्याः पर्युपासते ॥२२॥
ब्राह्मणा द्रविणो विप्राः क्षत्रियाः शुष्मिणस्तथा । वैश्याः स्तोभास्तु मन्देहा शूद्रास्तत्र प्रकीर्त्तिताः॥२३॥
सर्वेऽपि ज्ञानसम्पन्ना मैत्र्यादिगुणसंयुताः । यथोक्तकारिणः सर्वे सर्वभूतहिते रताः ॥२४॥
यजन्ति यज्ञैर्विविधैर्ब्रह्माणं परमेष्ठिनम् । तेषाञ्च ब्रह्मसायुज्यं सारूप्यञ्च सलोकता ॥२५॥
कुशद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः । क्रौञ्चद्वीपः स्थितो विप्रा वेष्टयित्वा घृतोदधिम् ॥२६॥
क्रौञ्चो वामनकश्चैव तृतीयश्चाधिकारिकः । देवावृच्च विविन्दश्च पुण्डरीकस्तथैव च ।
नाम्ना च सप्तमः प्रोक्तः पर्वतो दुन्दुभिस्वनः ॥२७॥
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा । ख्यातिश्च पुण्डरीकाक्षा नद्यः प्राधान्यतः स्मृताः ॥२८॥
पुष्कला पुष्करा धन्यास्तिष्या वर्णाः क्रमेण वै । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव द्विजोत्तमाः॥२९॥
अर्चयन्ति महादेवं यज्ञ-दान-शमादिभिः । व्रतोपवासैर्विविधैर्होमैश्च पितृतर्पणैः ॥३०॥
तेषां वै रुद्रसायुज्यं सारूप्यञ्चातिदुर्लभम् । सलोकता च सामीप्यं जायते तत्प्रसादतः ॥३१॥
क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः । शाकद्वीपः स्थितो विप्रा आवेष्ट्य दधिसागरम् ॥३२॥
उदयो रैवतश्चैव श्यामाकोऽस्तगिरिस्तथा । आम्बिकेयस्तथा रम्यः केशरी चेति पर्वताः ॥३३॥
सुकुमारी कुमारी च नलिनी रेणुका तथा । इक्षुका धेनुका चैव गभस्तिश्चेति निम्नगाः ॥३४॥
आसां पिबन्तः सलिलं जीवन्ते तत्र मानवाः । अनामया ह्यशोकाश्च राग-द्वेषविवर्जिताः ॥३५॥
मगाश्च मगधाश्चैव मानसा मन्दगास्तथा । ब्राह्मणाःक्षत्रिया वैश्याः शूद्राश्चात्र क्रमेण तु ॥३६॥
यजन्ति सततं देवं सर्वलोकैकसाक्षिणम् । व्रतोपवासैर्विविधैर्देवदेवं दिवाकरम् ॥३७॥
तेषां वै सूर्यसायुज्यं सामीप्यञ्च सरूपता । सलोकता च विप्रेन्द्रा जायते तत्प्रसादतः ॥३८॥
शाकद्वीपं समावृत्य क्षीरोदः सागरः स्थितः । श्वेतद्वीपश्च तन्मध्ये नारायणपरायणाः ॥३९॥
तत्र पुण्या जनपदा नानाश्चर्यसमन्विताः । श्वेतास्तत्र नरा नित्यं जायन्ते विष्णुतत्पराः ॥४०॥
नाधयो व्याधयस्तत्र जरामृत्युभयं न च । क्रोधलोभविनिर्मुक्ता माया-मात्सर्यवर्जिताः ॥४१॥
नित्यपुष्टा निरातङ्का नित्यानन्दाश्च भोगिनः । नारायणसमाः सर्वे नारायणपरायणाः ॥४२॥
केचिद् ध्यानपरा नित्यं योगिनः संयतेन्द्रियाः । केचिज् जपन्ति तप्यन्ति केचिद्विज्ञानिनोऽपरे॥४३॥
अन्ये निर्बीजयोगेन ब्रह्मभावेण भाविताः । ध्यायन्ति तत् परं ब्रह्म वासुदेवं सनातनम् ॥४४॥
एकान्तिनो निरालम्बा महाभागवताः परे । पश्यन्ति तत् परं ब्रह्म विष्ण्वाख्यं तमसः परम् ॥४५॥
सर्वे चतुर्भुजाकाराः शङ्ख-चक्र-गदाधराः । सुपतवाससः सर्वे श्रीवत्साङ्कितवक्षसः ॥४६॥
अन्ये महेश्वरपरास्त्रिपुण्ड्राङ्कितमस्तकाः । सुयोगाद्भूतिकरणा महागरुडवाहनाः ॥ ४७ ॥
सर्वे शक्तिसमायुक्ता नित्यानन्दाश्च निर्मलाः । वसन्ति तत्र पुरुषा विष्णोरन्तरचारिणः ॥४८॥
तत्र नारायणस्यान्यद् दुर्गमं दुरतिक्रमम् । नारायणं नाम पुरं प्रासादैरुपशोभितम् ॥४९॥

हेमप्राकारसंयुक्तं स्फाटिकैर्मण्डपैर्युतम् । प्रभासहस्रकलिलं दुराधर्षं सुशोभनम् ॥५०॥
हर्म्यप्रासाद संयुक्तमट्टालसमाकुलम् । हेमगोपुरसाहस्रै र्नानारत्नोपशोभितैः ॥५१॥
शुभ्रास्तरणसंयुक्तैर्विचित्रैः समलङ्कृतम् । नन्दनैर्विविधाकारैः सरिद्भिरुपशोभितम् ॥५२॥
सरोभिः सर्वतो युक्तं वीणावेणुनिनादितम् । पताकाभिर्विचित्राभिरनेकाभिश्च शोभितम् ॥५३॥
वीथीभिः सर्वतो युक्तं सोपाने रत्नभूषितैः । नदीशतसहस्राढ्यं दिव्यगाननिनादितम् ॥५४॥
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् । चतुर्द्वारमनौपम्यमगम्यं देवविद्विषाम् ॥५५॥
तत्र तत्राप्सरः सङ्घैर्नृत्यद्भिरुपशोभितम् । नानागीतविधानज्ञैर्देवानामपि दुर्लभैः ॥५६॥
नानाविलाससम्पन्नैः कामुकैरतिकोमलैः । प्रभूतचन्द्रवदनैर्नूपुरारावसंयुतैः ॥५७॥
ईषत् - स्मितैः सुबिम्बोष्ठैर्बालमुग्धमृगेक्षणैः । अशेषविभवोपेतैस्तनुमध्यविभूषितैः ॥ ५८ ॥
सुराजहंसचलनैः सुवेषैर्मधुरस्वनैः । संलापालापकुशलैर्दिव्याभरणभूषितैः ॥५९॥
स्तनभारविनम्रैश्च मधुघूर्णितलोचनैः । नानावर्णविचित्राङ्गैर्नानाभोगरतिप्रियैः ।
उत्फुलकुसुमोद्यानैरितश्चेतश्च शोभितम् ॥६०॥
असंख्येयगुणं शुद्धमगम्यं त्रिदशैरपि । श्रीमत् पवित्रं देवस्य श्रीपतेरमितौजसः ॥६१॥
तस्य मध्येऽतितेजस्कमुच्चत्प्राकारतोरणम् । स्थानं तद्वैष्णवं दिव्यं योगिनां सिद्धिदायकम् ॥६२॥
तन्मध्ये भगवानेकः पुण्डरीकदलद्युतिः । शेतेऽशेषजगत्सूतिः शेषाहिशयने हरिः ॥६३॥
विचिन्त्यमानो योगीन्द्रैः सनन्दनपुरोगमैः । स्वात्मानन्दामृतं पीत्वा पुरस्तात् तमसः परः ॥६४॥
पीतवासा विशालाक्षो महामायो महाभुजः । क्षीरोदकन्यया नित्यं गृहीतचरणद्वयः ॥६५॥
सा च देवी जगद्वन्द्या पादमूले हरिप्रिया । समास्ते तन्मना नित्यं पीत्वा नारायणामृतम् ॥६६॥
न तत्राधार्मिका यान्ति न च देवान्तरालयाः । वैकुण्ठं नाम तत् स्थानं त्रिदशैरपि वन्दितम् ॥६७॥
न मे प्रभवति प्रज्ञा कृत्स्नशास्त्रनिरूपणे । एतावच्छक्यते वक्तुं नारायणपुरं हि तत् ॥६८॥
स एव परमं ब्रह्म वासुदेवः सनातनः । शेते नारायणः श्रीमान् मायया मोहयञ् जगत् ॥६९॥
नारायणादिदं जातं तस्मिन्नेव व्यवस्थितम् । तमेवाभ्येति कल्पान्ते स एव परमा गतिः ॥७०॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासे प्लक्षद्वीपादिकथनं

नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

# एकोनपञ्चाशोऽध्यायः

## सूत उवाच

शाकद्वीपस्य विस्ताराद् द्विगुणेन व्यवस्थितः । क्षीरार्णवं समावृत्य द्वीपः पुष्करसंज्ञितः ॥ १ ॥
एक एवात्र विप्रेन्द्रा पर्वतो मानसोत्तरः । योजनानां सहस्राणि चोर्द्धं पञ्चाशदुच्छ्रितः ॥ २ ॥
तावदेव च विस्तीर्णः सर्वतः परिमण्डलः । स एव द्वीपश्चार्द्धेन मानसोत्तरसंस्थितः ॥ ३ ॥
एक एव महाभागः सन्निवेशाद् द्विधा कृतः । तस्मिन् द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ।
अपरौ मानसस्याथ पर्वतस्यानुमण्डलौ ॥ ४ ॥

महावीतं स्मृतं वर्षं धातकीखण्डमेव च । स्वादूदकेनोदधिना पुष्करः परिवारितः ॥ ५ ॥
तस्मिन् द्वीपे महावृक्षो न्यग्रोधोऽमरपूजितः । तस्मिन् निवसति ब्रह्मा विश्वात्मा विश्वभावनः ॥६॥
तत्रैव मुनिशार्दूलाः शिव - नारायणालयः । वसत्यत्र महादेवो हरोर्ध्वं हरिरव्ययः ॥ ७ ॥
सम्पूज्यमानो ब्रह्माद्यैः कुमाराद्यैश्च योगिभिः । गन्धर्वैः किन्नरैर्यक्षैरीश्वरः कृष्णपिङ्गलः ॥ ८ ॥
स्वस्थास्तत्र प्रजाः सर्वा ब्रह्मणा सदृशत्विषः । निरामया विशोकाश्च राग - द्वेषविवर्जिताः ॥ ९ ॥
सत्यानृते न तत्रास्तां नोत्तमाधममध्यमाः । न वर्णाश्रमधर्माश्च न नद्यो न च पर्वताः ॥१०॥
परेण पुष्करेणाथ समावृत्य स्थितो महान् । स्वादूदकसमुद्रस्तु समन्ताद् द्विजसत्तमाः ॥११॥
परेण तस्य महती दृश्यते लोकसंस्थितिः । काञ्चनी द्विगुणा भूमिः सर्वत्रैकशिलोपमा ॥१२॥
तस्याः परेण शैलस्तु मर्यादा भानुमण्डलः । प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥१३॥
योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः । तावानेव च विस्तारो लोकालोकमहागिरेः ॥१४॥
समावृत्य तु तं शैलं सर्वतो वै समास्थितम् । तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम् ॥१५॥
एते सप्त महालोकाः पातालाः सम्प्रकीर्त्तिताः । ब्रह्माण्डाशेषविस्तारः संक्षेपेण मयोदितः ॥१६॥
अण्डानामीदृशानान्तु कोट्यो ज्ञेयाः सहस्रशः । सर्वगत्वात् प्रधानस्य कारणस्याव्ययात्मनः ॥१७॥
अण्डेष्वेतेषु सर्वेषु भुवनानि चतुर्दश । तत्र तत्र चतुर्वक्त्रा रुद्रा नारायणादयः ॥१८॥
दशोत्तरमथैकैक - मण्डावरणसप्तकम् । समन्तात् संस्थितं विप्रास्तत्र यान्ति मनीषिणः ॥१९॥
अनन्तमेकमव्यक्तमनादिनिधनं महत् । अतीत्य वर्त्तते सर्वं जगत्प्रकृतिरक्षरम् ॥२०॥
अनन्तत्वमनन्तस्य यतः संख्या न विद्यते । तदव्यक्तमिदं ज्ञेयं तद् ब्रह्म परमं ध्रुवम् ॥२१॥
अनन्त एष सर्वत्र सर्वस्थानेषु पठ्यते । तस्य पूर्वं मयाऽप्युक्तं यत्तन्माहात्म्यमुत्तमम् ॥२२॥
स एव सर्वत्र गतः सर्वस्थानेषु पूज्यते । भूमौ रसातले चैव आकाशे पवनेऽनले ॥२३॥
अर्णवेषु च सर्वेषु दिवि चैव न संशयः । तथा तमसि सत्त्वे वाऽप्येष एव महाद्युतिः ।
अनेकधा विभक्ताङ्गः क्रीडते पुरुषोत्तमः ॥२४॥
महेश्वरः परोऽव्यक्तादण्डमव्यक्तसम्भवम् । अण्डाद् ब्रह्मा समुत्पन्नस्तेन सृष्टमिदं जगत् ॥२५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे भुवनकोशविन्यासो नामैकोनपञ्चाशोऽध्यायः ॥४९॥

# पञ्चाशोऽध्यायः

## ऋषय ऊचुः

अतीतानागतानीह यानि मन्वन्तराणि वै । तानि त्वं कथयास्माकं व्यासांश्च द्वापरे युगे ॥ १ ॥
वेदशाखाप्रणयिनो देवदेवस्य धीमतः । तथाऽवतारान् धर्मार्थमीशानस्य कलौ युगे ॥ २ ॥
कियन्तो देवदेवस्य शिष्याः कलियुगेऽपि वै । एतत् सर्वं समासेन सूत वक्तुमिहार्हसि ॥ ३ ॥

## सूत उवाच

मनुः स्वायम्भुवः पूर्वं ततः स्वारोचिषो मतः । उत्तमस्तामसश्चैव रैवताश्चाक्षुषस्तथा ॥ ४ ॥
षडेते मनवोऽतीताः साम्प्रतन्तु रवेः सुतः । वैवस्वतोऽयं यस्यैतत् सप्तमं वर्त्ततेऽन्तरम् ॥ ५ ॥
स्वायम्भुवन्तु कथितं कल्पादावन्तरं मया । अत ऊर्ध्वं निबोधध्वं मनोः स्वारोचिषस्य तु ॥६॥
पारावताश्च तुषिता देवाः स्वारोचिषेऽन्तरे । विपश्चिन्नाम देवेन्द्रो बभूवासुरमर्दनः ॥ ७ ॥
ऊर्जस्तम्बस्तथा प्राणो दम्भोलिर्वृषभस्तथा । तिमिरश्चावत्रीरांश्च सप्त सप्तर्षयोऽभवन् ॥ ८ ॥
चैत्रकिम्पुरुषाद्यास्तु सुताः स्वारोचिषस्य तु । द्वितीयमेतदाख्यातमन्तरं शृणु चोत्तमम् ॥ ९ ॥
तृतीयेऽप्यन्तरे चैव उत्तमो नाम वै मनुः । सुशान्तिस्तत्र देवेन्द्रो बभूवामित्रकर्षणः ॥१०॥
सुधामानस्तथा सत्या शिवाश्चाथ प्रतर्दनाः । वशवर्तिनः पञ्चैते गणा द्वादशकाः स्मृताः ॥११॥
रजोगात्रोद्ध्वबाहुश्च सवनश्चानघस्तथा । सुतपाः शुक्र इत्येते सप्त सप्तर्षयोऽभवन् ॥१२॥
तामसस्यान्तरे देवाः सुरावा हरयस्तथा । सत्याश्च सुधियश्चैव सप्तविंशतिका गणाः ॥१३॥
शिविरिन्द्रस्तथैवासीच्छतयज्ञोपलक्षणः । बभूव शङ्करे भक्तो महादेवार्चने रतः ॥१४॥
ज्योतिर्द्धाम पृथुः काव्यश्चैत्रोऽग्निर्वरुणस्तथा । पीवरस्त्वृषयो ह्येते सप्त तत्रापि चान्तरे ॥१५॥
पञ्चमे चापि विप्रेन्द्रा रैवतो नाम नामतः । मनुर्विभुश्च तत्रेन्द्रो बभूवासुरमर्दनः ॥१६॥
अमिता भूतयस्तत्र वैकुण्ठाश्च सुरोतमाः । एते देवगणास्तत्र चतुर्दश चतुर्दश ॥१७॥
हिरण्यरोमा वेदश्रीरूर्द्ध्वबाहुस्तथैव च । वेदबाहुः सुबाहुश्च सपर्जन्यो महामुनिः ।
एते सप्तर्षयो विप्रास्तत्रासन् रैवतेऽन्तरे ॥१८॥
स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा । प्रियव्रतान्विता ह्येते चत्वारो मनवः स्मृताः ॥१९॥
षष्ठे मन्वन्तरे चापि चाक्षुषस्तु मनुर्द्विजाः । मनोजवस्तथैवेन्द्रो देवांश्चैव निबोधत ॥२०॥
आद्याः प्रसूता भव्याश्च पृथुकाश्च दिवौकसः । महानुभावा लेख्याश्च पञ्चैते ह्यष्टका गणाः ॥२१॥
सुमेधा विरजाश्चैव हविष्मानुत्तमो मधुः । अभिमानः सहिष्णुश्च सप्तासन्नृषयः शुभाः ॥२२॥
विवस्वतः सुतो विप्राः श्राद्धदेवो महाद्युतिः । मनुः स वर्त्तते धीमान् साम्प्रतं सप्तमेऽन्तरे ॥२३॥
आदित्या वसवो रुद्रा देवास्तत्र मरुद्गणाः । पुरन्दरस्तथैवेन्द्रो बभूव परवीरहा ॥२४॥
वसिष्ठः कश्यपश्चात्रिर्जमदग्निश्च गौतमः । विश्वामित्रो भरद्वाजः सप्त सप्तर्षयोऽभवन् ॥२५॥
विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थिता स्थितौ । तदंशभूता राजानः सर्वे च त्रिदिवौकसः ॥२६॥
स्वायम्भुवेऽन्तरे पूर्वमाकूत्यां मानसः सुतः । रुचेः प्रजापतेर्जज्ञे तदंशेनाभवद् द्विजाः ॥२७॥
ततः पुनरसौ देवः प्राप्ते स्वारोचिषेऽन्तरे । तुषितायां समुत्पन्नस्तुषितैः सह दैवतैः ॥२८॥

औत्तमेऽप्यन्तरे विष्णुः सत्यैः सह सुरोत्तमः । सत्यायामभवत् सत्यः सत्यरूपो जनार्दनः ॥२९॥
तामसस्यान्तरे चैव सम्प्राप्ते पुनरेव हि । हर्यायां हरिभिर्देवैर्हरिरेवाभवद्धरिः ॥३०॥
रैवतेऽप्यन्तरे चैव सङ्कल्पान्मानसो हरिः । सम्भूतो मानसैः सार्द्धं देवैः सह महाद्युतिः ॥३१॥
चाक्षुषेऽप्यन्तरे चैव वैकुण्ठः पुरुषोत्तमः । विकुण्ठायामसौ जज्ञे वैकुण्ठर्दैवतैः सह ॥३२॥
मन्वन्तरेऽत्र सम्प्राप्ते तथा वैवस्वतेऽन्तरे । वामनः काश्यपाद्विष्णुरदित्यां सम्बभूव ह ॥३३॥
त्रिभिः क्रमैरिमाँल्लोकान् जित्वा येन महात्मना । पुरन्दराय त्रैलोक्यं दत्तं निहतकण्टकम् ॥३४॥
इत्येतास्तनवस्तस्य सप्तमन्वन्तरेषु वै । सप्त चैवाभवन् विप्रा याभिः संरक्षिताः प्रजाः ॥३५॥
यस्माद्विश्वमिदं कृत्स्नं वामनेन महात्मना । तस्मात् सर्वैः स्मृतो विष्णुर्विशेर्धातोः प्रवेशनात् ॥३६॥
एष सर्वं सृजत्यादौ पाति हन्ति च केशवः । भूतान्तरात्मा भगवान् नारायण इति श्रुतिः ॥३७॥
एकांशेन जगत् सर्वं व्याप्य नारायणः स्थितः । चतुर्द्धा संस्थितो व्यापी सगुणो निर्गुणोऽपि च ॥३८॥
एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला ॥३९॥
द्वितीया कालसंज्ञाऽन्या तामसी शिवसंज्ञिता । निहन्त्री सकलस्यान्ते वैष्णवी परमा तनुः ॥४०॥
सत्त्वोद्रिक्ता तृतीयाऽन्या प्रद्युम्नेति च संज्ञिता । जगत् संस्थापयेद्विश्वं सा विष्णोः प्रकृतिर्ध्रुवा ॥४१॥
चतुर्थी वासुदेवस्य मूर्त्तिर्ब्रह्मेति संज्ञिता । राजसी चानिरुद्धाख्या प्रद्युम्नसृष्टिकारिका ॥४२॥
यः स्वपित्यखिलं हत्वा प्रद्युम्नेन सह प्रभुः । नारायणाख्यो ब्रह्मासौ प्रजासर्गं करोति सः ॥४३॥
यासौ नारायणतनुः प्रद्युम्नाख्या शुभा स्मृता । तया सम्मोहयेद्विश्वं सदेवासुरमानुषम् ॥४४॥
सा वै सर्वजगत्सूतिः प्रकृतिः परिकीर्त्तिता । वासुदेवो ह्यनन्तात्मा केवलो निर्गुणो हरिः ॥४५॥
प्रधानं पुरुषः कालः तत्त्वत्रयमनुत्तमम् । वासुदेवात्मकं नित्यमेतद्विज्ञाय मुच्यते ॥४६॥
एकञ्चेदं चतुष्पादं चतुर्द्धा पुनरच्युतः । बिभेद वासुदेवोऽसौ प्रद्युम्नो भगवान् हरिः ॥४७॥
कृष्णद्वैपायनो व्यासो विष्णुर्नारायणः स्वयम् । अपान्तरतमाः पूर्णं स्वेच्छया ह्यभवद्धरिः ॥४८॥
अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः । एकोऽयं वेद भगवान् व्यासो नारायणः प्रभुः ॥४९॥
इत्येतद्विष्णुमाहात्म्यं कथितं मुनिसत्तमाः । एतत् सत्यं पुनः सत्यमेवं ज्ञात्वा न मुह्यति ॥५०॥

इति श्रीकौर्मे महापुराणे पूर्वभागे मन्वन्तरकीर्त्तने विष्णुमाहात्म्यं

नाम पञ्चाशोऽध्यायः ॥ ५० ॥

# एकपञ्चाशोऽध्यायः

## सूत उवाच

अस्मिन् मन्वन्तरे पूर्वं वर्त्तमाने महान् प्रभुः । द्वापरे प्रथमे व्यासो मनुः स्वायम्भुवो मतः ॥ १ ॥
बिभेद बहुधा वेदं नियोगाद् ब्रह्मणः प्रभोः । द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥ २ ॥
तृतीये चोशना व्यासश्चतुर्थे स्याद्बृहस्पतिः । सविता पञ्चमे व्यासः षष्ठे मृत्युः प्रकीर्त्तितः ॥ ३ ॥
सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे मतः । सारस्वतश्च नवमे त्रिधामा दशमे मतः ॥ ४ ॥
एकादशे तु ऋषभः सुतेजा द्वादशे स्मृतः । त्रयोदशे तथा धर्मः सुचक्षुस्तु चतुर्दशे ॥ ५ ॥
त्र्य्यारुणिः पञ्चदशे षोडशे तु धनञ्जयः । कृतञ्जयः सप्तदशे ह्यष्टादशे ऋतञ्जयः ॥ ६ ॥
ततो व्यासो भरद्वाजस्तस्मादूर्ध्वन्तु गौतमः । वाचश्रवाश्चैकविंशे तस्मान्नारायणः परः ॥ ७ ॥
तृणबिन्दुस्त्रयोविंशे वाल्मीकिस्तत्परः स्मृतः । पञ्चविंशे तथा शक्तिः षड्विंशे तु पराशरः ॥ ८ ॥
सप्तविंशे तथा व्यासो जातूकर्णो महामुनिः । अष्टाविंशे पुनःप्राप्ते ह्यस्मिन् वै द्वापरे द्विजाः ॥ ९ ॥
पराशरसुतो व्यासः कृष्णद्वैपायनोऽभवत् । स एव सर्ववेदानां पुराणानां प्रदर्शकः ॥१०॥
पाराशर्यो महायोगी कृष्णद्वैपायनो हरिः । आराध्य देवमीशानं दृष्ट्वा स्तुत्वा त्रिलोचनम् ॥११॥
तत्प्रसादादसौ व्यासं वेदानामकरोत् प्रभुः । अथ शिष्यान् स जग्राह चतुरो वेदपारगान् ॥१२॥
जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च । पैलं तेषां चतुर्थञ्च पञ्चमं मां महामुनिः ॥१३॥
ऋग्वेदपाठकं पैलं जग्राह स महामुनिः । यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥१४॥
जैमिनिं सामवेदस्य पाठकं सोऽन्वपद्यत । तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम् ।
इतिहासपुराणानि प्रवक्तुं मामयोजयत् ॥१५॥
एक आसीद् यजुर्वेदस्तं चतुर्द्धा प्रकल्पयत् । चातुर्होत्रमभूत् तस्मिंस्तेन यज्ञमथाकरोत् ॥१६॥
आध्वर्यवं यजुर्भिः स्यादृग्भिर्होत्रं द्विजोत्तमाः । औदगात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्वभिः ॥१७॥
ततः स ऋचमुद्धृत्य ऋग्वेदं कृतवान् प्रभुः । यजूंषि तु यजुर्वेदं सामवेदन्तु सामभिः ॥१८॥
एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा । शाखानान्तु शतेनैव यजुर्वेदमथाकरोत् ॥१९॥
सामवेदं सहस्रेण शाखानां प्रबिभेद सः । अथर्वाणमथो वेदं बिभेद नवकेन तु ।
भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः ॥२०॥
सोऽयमेकश्चतुष्पादो वेदः पूर्वं पुरातनः । ओङ्कारो ब्रह्मणो जातः सर्वदोषविशोधनः ॥२१॥
वेदवेद्यो हि भगवान् वासुदेवः सनातनः । स गीयते परो वेदैर्यो वेदैनं स वेदवित् ॥२२॥
एतत् परतरं ब्रह्म ज्योतिरानन्दमुत्तमम् । वदवाक्योदितं तत्त्वं वासुदेवः परं पदम् ॥२३॥
वेदविद्यामिमां वेत्ति वेदं वेदपरो मुनिः । अवेद्यं परमं वत्ति वेदनिष्ठः सदेश्वरः ॥२४॥
स वेदवेद्यो भगवान् वेदमूर्त्तिर्महेश्वरः । स एव वेद्यो वेदश्च तमेवाश्रित्य मुच्यते ॥२५॥
इत्येतदक्षरं वेद्यमोङ्कारं वेदमव्ययम् । अवेदञ्च विजानाति पाराशर्यो महामुनिः ॥२६॥

इति श्रीकौर्मे महापुराणे पूर्वभागे वेदव्यासकथनं नाम

एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

# द्विपञ्चाशोऽध्यायः

## सूत उवाच

वेदव्यासावताराणि द्वापरे कथितानि तु । महादेवावताराणि कलौ शृणुत सुव्रताः ॥ १ ॥
आद्ये कलियुगे श्वेतो देवदेवो महाद्युतिः । नाम्ना हिताय विप्राणामभूद्वैवस्वतेऽन्तरे ॥ २ ॥
हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे । तस्य शिष्याः प्रशिष्याश्च बभूवुरमितप्रभाः ॥ ३ ॥
श्वेतः श्वेतशिखश्चैव श्वेतास्यः श्वेतलोहितः । चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥ ४ ॥
सुतारो मदनश्चैव सुहोत्रः कङ्कणस्तथा । लोकाक्षिस्त्वथ योगीन्द्रो जैगीषव्योऽथ सप्तमे ॥ ५ ॥
अष्टमे दधिवाहः स्यान्नवमे ऋषभः प्रभुः । भृगुस्तु दशमे प्रोक्तस्तस्मादुग्रः परः स्मृतः ॥ ६ ॥
द्वादशेऽत्रिः समाख्यातो बाली वाथ त्रयोदशे । चतुर्दशे गौतमस्तु वेदशीर्षा ततः परः ॥ ७ ॥
गोकर्णश्चाभवत् तस्माद्गुहावासः शिखण्डधृक् । जटामाल्यट्टहासश्च दारुको लाङ्गली तथा ॥ ८ ॥
महायामो मुनिः शूली डिण्डमुण्डीश्वरः स्वयम् । सहिष्णुः सोमशर्मा च नकुलीश्वर एव च ॥ ९ ॥
वैवस्वतेऽन्तरे शम्भोरवतारास्त्रिशूलिनः । अष्टाविंशतिराख्याता ह्यन्ते कलियुगे प्रभोः ।
तीर्थे कायावतारे स्याद् देवेशो नकुलीश्वरः ॥१०॥
तत्र देवाधिदेवस्य चत्वारः सुतपोधनाः । शिष्या बभूवुश्चान्येषां प्रत्येकं मुनिपुङ्गवाः ॥११॥
प्रसन्नमनसो दान्ता ऐश्वरीं भक्तिमास्थिताः । क्रमेण तान् प्रवक्ष्यामि योगिनो योगवित्तमान् ॥१२॥
दुन्दुभिः शतरूपश्च ऋचीकः केतुमांस्तथा । विशोकश्च विकेशश्च विशाखः शापनाशनः ॥१३॥
सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः । सनकश्च सनन्दश्च कुमारश्च सनातनः ॥१४॥
वाष्कलश्च महायोगी धर्मात्मानो महौजसः । सुनामा विरजाश्चैव शङ्खपाण्यज एव च ॥१५॥
सारस्वतस्तथा मेघो घनवाहः सुवाहनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखो मुनिः ॥१६॥
पराशरश्च गर्गश्च भार्गवश्चाङ्गिरास्तथा । चलबन्धुर्निरामित्रः केतुशृङ्गस्तपोधनाः ॥१७॥
लम्बोदरश्च लम्बश्च लम्बाक्षो लम्बकेशकः । सर्वज्ञः समबुद्धिश्च साध्यासाध्यस्तथैव च ॥१ ॥
सुधामा काश्यपश्चाथ वसिष्ठो विरजास्तथा । अत्रिरुग्रस्तथा चैव श्रवणोऽथ सुवैद्यकः ॥१९॥
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः । कश्यपो ह्युशना चैव च्यवनोऽथ बृहस्पतिः ॥२०॥
उतथ्यो वामदेवश्च महाकायो महानिलः । वाजःश्रवाः सुकेशश्च श्यावाश्वः सुपथीश्वरः ॥२१॥
हिरण्यनाभः कौशल्यो लोकाक्षिः कुथुमिस्तथा । सुमन्तवर्चसो विद्वान् कबन्धः कुशिकन्धरः ॥२२॥
प्लक्षो दर्वायणिश्चैव केतुमान् गौतमस्तथा । भल्लावी मधुपिङ्गश्च श्वेतकेतुस्तपोधनः ॥२३॥
उषिजो बृहदक्षश्च देवलः कविरेव च । शालिहोत्रोऽग्निवेश्यस्तु युवनाश्वः शरद्वसुः ॥२४॥
छगलः कुण्डकर्णश्च कुन्तश्चैव प्रवाहकः । उलूको विद्युतश्चैव शाद्वको ह्याश्वलायनः ॥२५॥
अक्षपादः कुमारश्च उलूको वसुवाहनः । कुणिकश्चैव गर्गश्च मित्रको रुरुरेव च ॥२६॥
शिष्या एते महात्मानः सर्वावर्त्तेषु योगिनाम् । विमला ब्रह्मभूयिष्ठा ज्ञानयोगपरायणाः ॥२७॥
कुर्वन्ति चावताराणि ब्राह्मणानां हिताय च । योगेश्वराणामादेशाद्वेदसंस्थापनाय वै ॥२८॥
ये ब्राह्मणाः संस्मरन्ति नमस्यन्ति च सर्वदा । तर्पयन्त्यर्चयन्त्येतान् ब्रह्मविद्यामवाप्नुयुः ॥२९॥
इदं वैवस्वतं प्रोक्तमन्तरं विस्तरेण तु । भविष्यति च सावर्णो दक्षसावर्ण एव च ॥३०॥
दशमो ब्रह्मसावर्णो धर्म एकादशः स्मृतः । द्वादशो रुद्रसावर्णो रौच्यनामा त्रयोदशः ।
भौत्यश्चतुर्दशः प्रोक्तो भविष्या मनवः क्रमात् ॥३१॥

अयं वः कथितो ह्यंशः पूर्वो नारायणेरितः । भूतैर्भव्यैर्वर्त्तमानैराख्यानैरुपबृंहितः ॥३२॥
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥३३॥
पठेद् देवालये स्नात्वा नदीतीरेषु चैव हि । नारायणं नमस्कृत्य भावेन पुरुषोत्तमम् ॥३४॥
नमो देवाधिदेवाय देवानां परमात्मने । पुरुषाय पुराणाय विष्णवे कूर्मरूपिणे ॥३५॥

इति श्रीकौर्मे महापुराणे पूर्वभागे महादेवावतारकथनं
नाम द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

पूर्वभागः समाप्तः

---

# उत्तर-भागः

## प्रथमोऽध्यायः

### [ ईश्वरगीता १-११ अ० ]

### ऋषय ऊचुः

भवता कथितः सम्यक् सर्गः स्वायम्भुवस्ततः । ब्रह्माण्डस्यास्य विस्तारो मन्वन्तरविनिश्चयः ॥ १ ॥
तत्रेश्वरेश्वरो देवो वर्णिभिर्धर्मतत्परैः । ज्ञानयोगरतैर्नित्यमाराध्यः कथितस्त्वया ॥ २ ॥
तत्त्वश्चाशेषसंसार - दुःखनाशमनुत्तमम् । ज्ञानं ब्रह्मैकविषयं येन पश्येम तत् परम् ॥ ३ ॥
त्वं हि नारायणः साक्षात् कृष्णद्वैपायनात् प्रभो । अवाप्ताखिलविज्ञानस्तत् त्वां पृच्छामहे पुनः ॥ ४ ॥
श्रुत्वा मुनीनां तद्वाक्यं कृष्णद्वैपायनं प्रभुम् । सूतः पौराणिकः स्मृत्वा भाषितुं ह्युपचक्रमे ॥ ५ ॥
अथास्मिन्नन्तरे व्यासः कृष्णद्वैपायनः स्वयम् । आजगाम मुनिश्रेष्ठा यत्र सत्रं समासते ॥ ६ ॥
तं दृष्ट्वा वेदविद्वांसं कालमेघसमद्युतिम् । व्यासं कमलपत्राक्षं प्रणेमुर्द्विजपुङ्गवाः ॥ ७ ॥
पपात दण्डवद्भूमौ दृष्ट्वासौ लोमहर्षणः । प्रदक्षिणीकृत्य गुरुं प्राञ्जलिः पार्श्वगोऽभवत् ॥ ८ ॥
पृष्टास्तेऽनामयं विप्राः शौनकाद्या महामुनिम् । समासृत्यासनं तस्मै तद्योग्यं समकल्पयन् ॥ ९ ॥
अथैनानब्रवीद्वाक्यं पराशरसुतः प्रभुः । कच्चिन्न हानिस्तपसः स्वाध्यायस्य श्रुतस्य च ॥१०॥
ततश्च सूतः स्वगुरुं प्रणम्याह महामुनिम् । ज्ञानं तद् ब्रह्मविषयं मुनीनां वक्तुमर्हसि ॥११॥
इमे हि मुनयः शान्तास्तापसा धर्मतत्पराः । शुश्रूषा जायते चैषां वक्तुमर्हसि तत्त्वतः ॥१२॥
ज्ञानं विमुक्तिदं दिव्यं यन्मे साक्षात् त्वयोदितम् । मुनीनां व्याहृतं पूर्वं विष्णुना कूर्मरूपिणा ॥१३॥
श्रुत्वा सूतस्य वचनं मुनिः सत्यवतीसुतः । प्रणम्य शिरसा रुद्रं वचः प्राह सुखावहम् ॥१४॥

### व्यास उवाच

वक्ष्ये देवो महादेवः पृष्टो योगीश्वरैः पुरा । सनत्कुमारप्रमुखैः स्वयं यत् समभाषत ॥१५॥
सनत्कुमारः सनकस्तथैव च सनन्दनः । अङ्गिरा रुद्रसहितो भृगुः परमधर्मवित् ॥१६॥
कणादः कपिलो गर्गो वामदेवो महामुनिः । शुक्रो वसिष्ठो भगवान् सर्वे संयतमानसाः ॥१७॥
परस्परं विचार्यैते संशयाविष्टचेतसः । तप्तवन्तस्तपो घोरं पुण्ये बदरिकाश्रमे ॥१८॥
अपश्यंस्ते महायोगमृषिं धर्मसुतं मुनिम् । नारायणमनाद्यन्तं नरेण सहितं तदा ॥१९॥
संस्तूय विविधैः स्तोत्रैः सर्ववेदसमुद्भवैः । प्रणेमुर्भक्तिसंयुक्ता योगिनो योगवित्तमम् ॥२०॥
विज्ञाय वाञ्छितं तेषां भगवानपि सर्ववित् । प्राह गम्भीरया वाचा किमर्थं तप्यते तपः ॥२१॥

अब्रुवन् हृष्टमनसो विश्वात्मानं सनातनम् । साक्षान्नारायणं देवमागतं सिद्धिसूचकम् ।।२२।।
वयं संशयमापन्नाः सर्वे वै ब्रह्मवादिनः । भवन्तमेव शरणं प्रपन्नाः पुरुषोत्तमम् ।।२३।।
त्वं वेत्सि परमं गुह्यं सर्वन्तु भगवानृषिः । नारायणः स्वयं साक्षात् पुराणोऽव्यक्तपूरुषः ।।२४।।
न ह्यन्यो विद्यते वेत्ता त्वामृते परमेश्वरम् । स त्वमस्माकमचलं संशयं छेत्तुमर्हसि ।।२५।।
किंकारणमिदं कृत्स्नं को नु संसरते सदा । कश्चिदात्मा च का मुक्तिः संसारः किंनिमित्तकः ।।२६।।
कः संसारपतीशानः को वा सर्वं प्रपश्यति । किं तत् परतरं ब्रह्म सर्वं नो वक्तुमर्हसि ।।२७।।
एवमुक्त्वा तु मुनयः प्रापश्यन् पुरुषोत्तमम् । विहाय तापसं वेषं संस्थितं स्वेन तेजसा ।।२८।।
विभ्राजमानं विमलं प्रभामण्डलमण्डितम् । श्रीवत्सवक्षसं देवं तप्तजाम्बूनदप्रभम् ।।२९।।
शङ्ख-चक्र-गदापाणिं शार्ङ्गहस्तं श्रिया वृतम् । न दृष्टस्तत्क्षणादेव नरस्तस्यैव तेजसा ।।३०।।
तदन्तरे महादेवः शशाङ्काङ्कितशेखरः । प्रसादाभिमुखो रुद्रः प्रादुरासीन्महेश्वरः ।।३१।।
निरीक्ष्य ते जगन्नाथं त्रिनेत्रं चन्द्रभूषणम् । तुष्टुवुर्हृष्टमनसो भक्त्या तं परमेश्वरम् ।।३२।।
जयेश्वर महादेव जय भूतपते शिव । जयाशेषमुनीशान तपसाभिप्रपूजित ।।३३।।
सहस्रमूर्त्ते विश्वात्मन् जगद्यन्त्रप्रवर्त्तक । जयानन्त जगज्जन्म-त्राण-संहारकारक ।।३४।।
सहस्रचरणेशान शम्भो योगीन्द्रवन्दित । जयाम्बिकापते देव नमस्ते परमेश्वर ।।३५।।
संस्तुतो भगवानीशस्त्र्यम्बको भक्तवत्सलः । समालिङ्ग्य हृषीकेशं प्राह गम्भीरया गिरा ।।३६।।
किमर्थं पुण्डरीकाक्ष मुनीन्द्रा ब्रह्मवादिनः । इमं समागता देशं किं नु कार्यं मयाच्युत ।।३७।।
आकर्ण्य तस्य तद्वाक्यं देवदेवो जनार्दनः । प्राह देवो महादेव प्रसादाभिमुखं स्थितम् ।।३८।।
इमे हि मुनयो देव तापसाः क्षीणकल्मषाः । अभ्यागतानां शरणं सम्यग्दर्शनकाङ्क्षिणाम् ।।३९।।
यदि प्रसन्नो भगवान् मुनीनां भावितात्मनाम् । सन्निधौ मम तज्ज्ञानं दिव्यं वक्तुमिहार्हसि ।।४०।।
त्वं हि वेत्थ स्वमात्मानं न ह्यन्यो विद्यते शिव । ततस्त्वमात्मनात्मानं मुनीन्द्रेभ्यः प्रदर्शय ।।४१।।
एवमुक्त्वा हृषीकेशः प्रोवाच मुनिपुङ्गवान् । प्रदर्शयन् योगसिद्धिं निरीक्ष्य वृषभध्वजम् ।।४२।।
सन्दर्शनान्महेशस्य शङ्करस्याथ शूलिनः । कृतार्थं स्वयमात्मानं ज्ञातुमर्हथ तत्त्वतः ।।४३।।
प्रष्टुमर्हथ विश्वेशं प्रत्यक्षं पुरतः स्थितम् । ममैव सन्निधावेष यथावद्वक्ष्यतीश्वरः ।।४४।।
निशम्य विष्णोर्वचनं प्रणम्य वृषभध्वजम् । सनत्कुमारप्रमुखाः पृच्छन्ति स्म महेश्वरम् ।।४५।।
अथास्मिन्नन्तरे दिव्यमासनं विमलं शिवम् । किमप्यचिन्त्यं गगनादीश्वरार्थं समुद्बभौ ।।४६।।
तत्रासमाद योगात्मा विष्णुना सह विश्वकृत् । तेजसा पूरयन् विश्वं भाति देवो महेश्वरः ।।४७।।
ततो देवाधिदेवेशं शङ्करं ब्रह्मवादिनः । विभ्राजमानं विमले तस्मिन् ददृशुरासने ।।४८।।
यं प्रपश्यन्ति योगस्थाः स्वात्मन्यात्मानमीश्वरम् । अनल्पतेजसं शान्तं शिवं ददृशिरे किल ।।४९।।
यतः प्रसूतिर्भूतानां यत्रैतत् प्रविलीयते । तमासनस्थं भूतानामीशं ददृशिरे किल ।।५०।।
यदन्तरा सर्वमेतद् यतोऽभिन्नमिदं जगत् । सवासुदेवमीशानमीशं ददृशिरे परम् ।।५१।।
प्रोवाच पृष्टो भगवान् मुनीनां परमेश्वरः । निरीक्ष्य पुण्डरीकाक्षं स्वात्मयोगमनुत्तमम् ।।५२।।
तच्छृणुध्वं यथान्यायमुच्यमानं मयानघाः । प्रशान्तमनसः सर्वे ज्ञानमीश्वरभाषितम् ।।५३।।

इति श्रीकौर्मे महापुराणे उत्तर-भागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋष्यादिसंवादे ज्ञानयोगो नाम प्रथमोऽध्यायः ।।१।।

# द्वितीयोऽध्यायः

## ईश्वर उवाच

अवाच्यमेतद्विज्ञानमात्मगुह्यं सनातनम् । यन्न देवा विजानन्ति यतन्तोऽपि द्विजातयः ॥ १ ॥
इदं ज्ञानं समाश्रित्य ब्रह्मभूता द्विजोत्तमाः । न संसारं प्रपद्यन्ते पूर्वेऽपि ब्रह्मवादिनः ॥ २ ॥
गुह्याद् गुह्यतमं साक्षाद् गोपनीयं प्रयत्नतः । वक्ष्ये भक्तिमतामद्य युष्माकं ब्रह्मवादिनाम् ॥ ३ ॥
आत्माऽयं केवलः स्वच्छः शुद्धः सूक्ष्मः सनातनः । अस्ति सर्वान्तरः साक्षाच्चिन्मात्रस्तमसः परः ॥ ४ ॥
सोऽन्तर्यामी स पुरुषः स प्राणः स महेश्वरः । स कालोऽत्र तदव्यक्तं स च वेद इति श्रुतिः ॥ ५ ॥
अस्माद्विजायते विश्वमत्रैव प्रविलीयते । स मायी मायया बद्धः करोति विविधास्तनूः ॥ ६ ॥
न चाप्ययं संसरति न संसारमयः प्रभुः । नायं पृथ्वी न सलिलं न तेजः पवनो नभः ॥ ७ ॥
न प्राणो न मनोऽव्यक्तं न शब्दः स्पर्श एव च । न रूपं न रसो गन्धो नायं कर्त्ता न वागपि ॥ ८ ॥
न पाणि-पादौ नो पायुर्न चोपस्थं द्विजोत्तमाः । न च कर्त्ता न भोक्ता वा न च प्रकृति-पूरुषौ ।
न माया नैव च प्राणा न चैव परमार्थतः ॥ ९ ॥
यथा प्रकाश - तमसोः सम्बन्धो नोपपद्यते । तद्वदैक्यं न सम्बन्धः प्रपञ्च - परमात्मनोः ॥१०॥
छायातपौ यथा लोके परस्परविलक्षणौ । तद्वत् प्रपञ्च-पुरुषौ विभिन्नौ परमार्थतः ॥११॥
यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वरूपतः । न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥१२॥
पश्यन्ति मुनयो मुक्ताः स्वात्मानं परमार्थतः । विकारहीनं निर्द्वन्द्वमानन्दात्मानमव्ययम् ॥१३॥
अहं कर्त्ता सुखी दुःखी कृशः स्थूलेति या मतिः । सा चाहङ्कारकर्तृत्वादात्मन्यारोपिता जनैः ॥१४॥
वदन्ति वेदविद्वांसः साक्षिणं प्रकृतेः परम् । भोक्तारमक्षरं बुद्धं सर्वत्र समवस्थितम् ॥१५॥
तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् । अज्ञानादन्यथाज्ञानात् तत्त्वं प्रकृतिसङ्गतम् ॥१६॥
नित्योदितं स्वयं ज्योतिः सर्वगः पुरुषः परः । अहङ्काराविवेकेन कर्त्ताहमिति मन्यते ॥१७॥
पश्यन्ति ऋषयोऽव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं बुद्धेः कारणं ब्रह्मवादिनः ॥१८॥
तेनायं सङ्गतः स्वात्मा कूटस्थोऽपि निरञ्जनः । स्वात्मानमक्षरं ब्रह्म नावबुध्येत तत्त्वतः ॥१९॥
अनात्मन्यात्मविज्ञानं तस्माद् दुःखं तथेरितम् । रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ॥२०॥
कर्मण्यस्य महान् दोषःपुण्यापुण्यमिति स्थितिः । तद्वशादेव सर्वेषां सर्वदेहसमुद्भव. ॥२१॥
नित्यः सर्वत्रगो ह्यात्मा कूटस्थो दोषवर्जितः । एकः सन्तिष्ठते शक्त्या मायया न स्वभावतः ॥२२॥
तस्मादद्वैतमेवाहुर्मुनयः परमार्थतः । भेदोऽव्यक्तस्वभावेन सा च मायात्मसंश्रया ॥२३॥
यथा हि धूमसम्पर्कान्नाकाशो मलिनो भवेत् । अन्तःकरणजैर्भावैरात्मा तद्वन्न लिप्यते ॥२४॥
यथा स्वप्रभया भाति केवलः स्फटिकोपलः । उपाधिहीनो विमलस्तथैवात्मा प्रकाशते ॥२५॥
ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः । अर्थस्वरूपमेवान्ये पश्यन्त्यन्ये कुदृष्टयः ॥२६॥
कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः । दृश्यते ह्यर्थरूपेण पुरुषैर्भ्रान्तदृष्टिभिः ॥२७॥
यथा संलक्ष्यते रक्तः केवलं स्फाटिको जनैः । रञ्जकाद्युपधानेन तद्वत् परमपूरुषः ॥२८॥
तस्मादात्माक्षरः शुद्धो नित्यः सर्वत्रगोऽव्ययः । उपासितव्यो मन्तव्यः श्रोतव्यश्च मुमुक्षुभिः ॥२९॥
यदा मनसि चैतन्यं भाति सर्वत्र सर्वदा । योगिनः श्रद्दधानस्य तदा सम्पद्यते स्वयम् ॥३०॥
यदा सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति । सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा ॥३१॥

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति । एकीभूतः परेणासौ तदा भवति केवलः ॥३२॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । तदासावमृतीभूतः क्षेमं गच्छति पण्डितः ॥३३॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥३४॥
यदा पश्यति चात्मानं केवलं परमार्थतः । मायामात्रं जगत् कृत्स्नं तदा भवति निर्वृतः ॥३५॥
यदा जन्म - जरा - दुःख - व्याधीनामेकभेषजम् । केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ॥३६॥
यथा नदीनदा लोके सागरेणैकतां ययुः । तद्वदात्माक्षरेणासौ निष्कलेनैकतां व्रजेत् ॥३७॥
तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संस्थितिः । अज्ञानेनावृतं लोके विज्ञानं तेन मुह्यति ॥३८॥
विज्ञानं निर्मलं सूक्ष्मं निर्विकल्पं यदव्ययम् । अज्ञानमितरत् सर्वं विज्ञानमिति तन्मतम् ॥३९॥
एतद्वः परमं सांख्यं भाषितं ज्ञानमुत्तमम् । सर्ववेदान्तसारं हि योगस्तत्रैकचित्तता ॥४०॥
योगात् सञ्जायते ज्ञानं ज्ञानाद्योगः प्रवर्त्तते । योगज्ञानाभियुक्तस्य नावाप्यं विद्यते क्वचित् ॥४१॥
यदेव योगिनो यान्ति सांख्यैस्तदधिगम्यते । एकं सांख्यञ्च योगञ्च यः पश्यति स तत्त्ववित्॥४२॥
अन्ये हि योगिनो विप्रा ह्यैश्वर्यासक्तचेतसः । मज्जन्ति तत्र तत्रैव ये चान्ये कुण्ठबुद्धयः ॥४३॥
यत्तत् सर्वगतं दिव्यमैश्वर्यममलं महत् । ज्ञानयोगाभियुक्तस्तु देहान्ते तदवाप्नुयात् ॥४४॥
एष आत्माहमव्यक्तो मायावी परमेश्वरः । कीर्त्तितः सर्ववेदेषु सर्वात्मा सर्वतोमुखः ॥४५॥
सर्वरूपः सर्वरसः सर्वगन्धोऽजरोऽमरः । सर्वतःपाणिपादोऽहमन्तर्यामी सनातनः ॥४६॥
अपाणिपादो जवनो ग्रहीता हृदि संस्थितः । अचक्षुरपि पश्यामि तथाकर्णः शृणोम्यहम् ॥४७॥
वेदाहं सर्वमेवेदं न मां जानाति कश्चन । प्राहुर्महान्तं पुरुषं मामेकं तत्त्वदर्शिनः ॥४८॥
पश्यन्ति ऋषयो हेतुमात्मनः सूक्ष्मदर्शिनः । निर्गुणामलरूपस्य यदैश्वर्यमनुत्तमम् ॥४९॥
यन्न देवा विजानन्ति मोहिता मम मायया । वक्ष्ये समाहिता यूयं शृणुध्वं ब्रह्मवादिनः ॥५०॥
नाहं प्रशास्ता सर्वस्य मायातीतः स्वभावतः । प्रेरयामि तथापीदं कारणं सूरयो विदुः ॥५१॥
यन्मे गुह्यतमं देहं सर्वगं तत्त्वदर्शिनः । प्रविष्टा मम सायुज्यं लभन्ते योगिनोऽव्ययम् ॥५२॥
ये हि मायामतिक्रान्ता मम या विश्वरूपिणी । लभन्ते परमं शुद्धं निर्वाणं ते मया सह ॥५३॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि । प्रसादान्मम योगिन्द्रा एतद्वेदानुशासनम् ॥५४॥
तत् पुत्र-शिष्य-योगिभ्यो दातव्यं ब्रह्मवादिभिः । यदुक्तमेतद्विज्ञानं सांख्ययोगसमाश्रयम् ॥५५॥

इति श्रीकौर्मे महापुराणे उत्तर-भागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ज्ञानयोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः

## ईश्वर उवाच

अव्यक्तादभवत् कालः प्रधानं पुरुषः परः । तेभ्यः सर्वमिदं जातं तस्माद् ब्रह्ममयं जगत् ॥ १ ॥
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । सर्वाधारं सदानन्दमव्यक्तं द्वैतवर्जितम् ॥ ३ ॥
सर्वोपमानरहितं प्रमाणातीतगोचरम् । निर्विकल्पं निराभासं सर्वावासं परामृतम् ॥ ४ ॥
अभिन्नं भिन्नसंस्थानं शाश्वतं ध्रुवमव्ययम् । निर्गुणं परमं ज्योतिस्तज्ज्ञानं सूरयो विदुः ॥ ५ ॥
स आत्मा सर्वभूतानां स बाह्याभ्यन्तरः परः । सोऽहं सर्वत्रगः शान्तो ज्ञानात्मा परमेश्वरः ॥ ६ ॥
मया ततमिदं विश्वं जगत् स्थावर-जङ्गमम् । मत्स्थानि सर्वभूतानि यस्तं वेद स वेदवित् ॥ ७ ॥
प्रधानं पुरुषश्चैव तत्त्वद्वयमुदाहृतम् । तयोरनादिरुद्दिष्टः कालः संयोगजः परः ॥ ८ ॥
त्रयमेतदनाद्यन्तमव्यक्ते समवस्थितम् । तदात्मकं तदन्यत् स्यात् तद्रूपं मामकं विदुः॥ ९ ॥
महदाद्यं विशेषान्तं सम्प्रसूतेऽखिलं जगत् । या सा प्रकृतिरुद्दिष्टा मोहिनी सर्वदेहिनाम् ॥१०॥
पुरुषः प्रकृतिस्थो वै भुङ्क्ते यः प्राकृतान् गुणान् । अहङ्कारविमुक्तत्वात् प्रोच्यते पञ्चविंशकः ॥११॥
आद्यो विकारः प्रकृतेर्महानिति च कथ्यते । विज्ञातृशक्तिविज्ञानाद् ह्यहङ्कारस्तदुत्थितः ॥१२॥
एक एव महानात्मा सोऽहङ्कारोऽभिधीयते । स जीवः सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः॥१३॥
तेन वेदयते सर्वं सुखं दुःखञ्च जन्मसु । स विज्ञानात्मकस्तस्य मनः स्यादुपकारकम् ॥१४॥
तेनाविवेकतस्तस्मात् संसारः पुरुषस्य तु । स चाविवेकः प्रकृतौ सङ्गात् कालेन सोऽभवत्॥१५॥
कालः सृजति भूतानि कालः संहरते प्रजाः । सर्वे कालस्य वशगा न कालः कस्यचिद्वशे ॥१६॥
सोऽन्तरा सर्वमेवेदं नियच्छति सनातनः । प्रोच्यते भगवान् प्राणः सर्वज्ञः पुरुषोत्तमः ॥ ७॥
सर्वेन्द्रियेभ्यः परमं मन आहुर्मनीषिणः । मनसश्चाप्यहङ्कारस्त्वहङ्कारान्महान् परः ॥१८॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषाद्भगवान् प्राणस्तस्य सर्वमिदं जगत् ॥१९॥
प्राणात् परतरं व्योम व्योमातीतोऽग्निरीश्वरः । सोऽहं ब्रह्माव्ययःशान्तो ज्ञानात्मा परमेश्वरः ॥२०॥
नास्ति मत्तः परं भूतं माञ्च विज्ञाय मुच्यते । नित्यं नेहास्ति जगति भूतं स्थावर-जङ्गमम् ।
ऋते मामेकमव्यक्तं व्योमरूपं महेश्वरम् ॥२१॥
सोऽहं सृजामि सकलं संहरामि सदा जगत् । मायी मायामयो देवः कालेन सह सङ्गतः ॥२२॥
मत्सन्निधावेष कालः करोति सकलं जगत् । नियोजयत्यनन्तात्मा ह्येतद्वेदानुशासनम् ॥२३॥

इति श्रीकौर्मे महापुराणे उत्तर-भागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रेऽव्यक्तादिज्ञानयोगो
नाम तृतीयोऽध्यायः ॥ ३ ॥

———

# चतुर्थोऽध्यायः

## ईश्वर उवाच

वक्ष्ये समाहिता यूयं शृणुध्वं ब्रह्मवादिनः । माहात्म्यं देवदेवस्य येन सर्वं प्रवर्त्तते ॥ १ ॥
नाहं तपोभिर्विविधैर्न दानेन न चेज्यया । शक्यो हि पुरुषैर्ज्ञातुमृते भक्तिमनुत्तमाम् ॥ २ ॥
अहं हि सर्वभूतानामन्तस्तिष्ठामि सर्वगः । मां सर्वसाक्षिणं लोको न जानाति मुनीश्वराः॥ ३ ॥
यस्यान्तरा सर्वमिदं यो हि सर्वान्तरः परः । सोऽहं धाता विधाता च कालाग्निर्विश्वतोमुखः॥ ४ ॥
न मां पश्यन्ति मुनयः सर्वे पितृदिवौकसः । ब्रह्मा च मनवः शक्रो ये चान्ये प्रथितौजसः ॥ ५ ॥
गृणन्ति सततं वेदा मामेकं परमेश्वरम् । यजन्ति विविधैरग्निं ब्राह्मणा वैदिकैर्मखैः ॥ ६ ॥
सर्वे लोका न पश्यन्ति ब्रह्मा लोकपितामहः । ध्यायन्ति योगिनो देवं भूताधिपतिमीश्वरम् ॥ ७ ॥
अहं हि सर्वहविषां भोक्ता चैव फलप्रदः । सर्वदेवतनुर्भूत्वा सर्वात्मा सर्वसंस्थितः ॥ ८ ॥
मां पश्यन्तीह विद्वांसो धार्मिका वेदवादिनः । तेषां सन्निहितो नित्यं ये मां नित्यमुपासते ॥ ९ ॥
ब्राह्मणाः क्षत्रिया वैश्या धार्मिका मामुपासते । तेषां ददामि तत् स्थानमानन्दं परमं पदम् ॥१०॥
अन्येऽपि ये स्वधर्मस्थाः शूद्राद्या नीचजातयः । भक्तिमन्तः प्रमुच्यन्ते कालेन मयि सङ्गताः ॥११॥
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः । आदावेव प्रतिज्ञातं न मे भक्तः प्रणश्यति ॥१२॥
यो वै निन्दति तं मूढो देवदेवं स निन्दति । यो हि पूजयते भक्त्या स पूजयति मां सदा ॥१३॥
पत्रं पुष्पं फलं तोयं मदाराधनकारणात् । यो मे ददाति नियतं स मे भक्तः प्रियो मम ॥१४॥
अहं हि जगतामादौ ब्रह्माणं परमेष्ठिनम् । विदधौ दत्तवान् वेदानशेषानात्मनिःसृतान् ॥१५॥
अहमेव हि सर्वेषां योगिनां गुरुरव्ययः । धार्मिकाणाञ्च गोप्ताहं निहन्ता वेदविद्विषाम् ॥१६॥
अहं हि सर्वसंसारान्मोचको योगिनामिह । संसारहेतुरेवाहं सर्वसंसारवर्जितः ॥१७॥
अहमेव हि संहर्त्ता संस्रष्टा परिपालकः । माया वै मामिका शक्तिर्माया लोकविमोहनी ॥१८॥
ममैव च परा शक्तिर्या सा विद्येति गीयते । नाशयामि तया मायां योगिनां हृदि संस्थितः॥१९॥
अहं हि सर्वशक्तीनां प्रवर्त्तक - निवर्त्तकः । आधारभूतः सर्वासां निधानममृतस्य च ॥२०॥
एका सर्वान्तरा शक्तिः करोति विविधं जगत् । आस्थाय ब्रह्मणो रूपं मन्मयी मदधिष्ठिता ॥२१॥
अन्या च शक्तिर्विपुला संस्थापयति मे जगत् । भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः ॥२२॥
तृतीया महती शक्तिर्निहन्ति सकलं जगत् । तामसी मे समाख्याता कालाख्या रुद्ररूपिणी॥२३॥
ध्यानेन मां प्रपश्यन्ति केचिज् ज्ञानेन चापरे । अपरे भक्तियोगेन कर्मयोगेण चापरे ॥२४॥
सर्वेषामेव भक्तानामिष्टः प्रियतमो मम । यो हि ज्ञानेन मां नित्यमाराधयति नान्यथा ॥२५॥
अन्ये च हरये भक्ता मदाराधनकारिणः । तेऽपि मां प्राप्नुवन्त्येव नावर्त्तन्ते च वै पुनः ॥२६॥

मया ततमिदं कृत्स्नं प्रधान - पुरुषात्मकम् । मय्येव संस्थितं विश्वं मया सम्प्रेर्यते जगत् ॥२७॥
नाहं प्रेरयिता विप्राः परमं योगमास्थितः । प्रेरयामि जगत् कृत्स्नमेतद्यो वेद सोऽमृतः ॥२८॥
पश्याम्यशेषमेवेदं वर्त्तमानं स्वभावतः । करोति कालो भगवान् महायोगेश्वरः स्वयम् ॥२९॥
योऽहं सम्प्रोच्यते योगी मायी शास्त्रेषु सूरिभिः । योगेश्वरोऽसौ भगवान् महायोगेश्वरः स्वयम् ॥३०॥
महत्त्वं सर्वतत्त्वानां परत्वात् परमेष्ठिनः । प्रोच्यते भगवान् ब्रह्मा महाब्रह्ममयोऽमलः ॥३१॥
यो मामेवं विजानाति महायोगेश्वरेश्वरम् । सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥३२॥
सोऽहं प्रेरयिता देवः परमानन्दसंश्रितः । नृत्यामि योगी सततं यस्तद्वेद स योगवित् ॥३३॥
इति गुह्यतमं ज्ञानं सर्ववेदेषु निश्चितम् । प्रसन्नचेतसे देयं धार्मिकायाहिताग्नये ॥३४॥

इति श्रीकौर्मे महापुराणे उत्तर-भागे श्रीमद्भगदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे देवदेवमाहात्म्य-ज्ञानयोगो
नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः

## व्यास उवाच

एतावदुक्त्वा भगवान् योगिनां परमेश्वरः । ननर्त्त परमं भावमैश्वरं सम्प्रदर्शयन् ॥ १ ॥
तं ते ददृशुरीशानं तेजसां परमं निधिम् । नृत्यमानं महादेवं विष्णुना गगनेऽमले ॥ २ ॥
तं विदुर्योगतत्त्वज्ञा योगिनो यतमानसाः । तमीशं सर्वभूतानामाकाशे ददृशुः किल ॥ ३ ॥
यस्य मायामयं सर्वं येनेदं ध्रियते जगत् । नृत्यमानः स्वयं विप्रैर्विश्वेशः खलु दृश्यते ॥ ४ ॥
यत्पादपङ्कजं स्मृत्वा पुरुषोऽज्ञानजं भयम् । जहाति नृत्यमानं तं भूतेशं ददृशुः किल ॥ ५ ॥
यं विनिद्रा जितश्वासाः शान्ता भक्तिसमन्विताः । ज्योतिर्मयं प्रपश्यन्ति स योगी दृश्यते किल ॥ ६ ॥
योऽज्ञानान्मोचयेत् क्षिप्रं प्रसन्नो भक्तवत्सलः । तमेवं मोचकं रुद्रमाकाशे ददृशुः परम् ॥ ७ ॥
सहस्रशिरसं देवं सहस्रचरणाकृतिम् । सहस्रबाहुं जटिलं चन्द्रार्द्धकृतशेखरम् ॥ ८ ॥
वसानं चर्म वैयाघ्रं शूलासक्तमहाकरम् । दण्डपाणिं त्रयीनेत्रं सूर्यसोमाग्निलोचनम् ॥ ९ ॥
ब्रह्माण्डं तेजसा स्वेन सर्वमावृत्य विष्ठितम् । दंष्ट्राकरालं दुर्द्धर्षं सूर्यकोटिसमप्रभम् ॥१०॥
सृजन्तमनलज्वालां दहन्तमखिलं जगत् । नृत्यन्तं ददृशुर्देवं विश्वकर्माणमीश्वरम् ॥११॥
महादेवं महायोगं देवानामपि दैवतम् । पशूनां पतिमीशानं ज्योतिषां ज्योतिरव्ययम् ॥१२॥
पिनाकिनं विशालाक्षं भेषजं भवरोगिणाम् । कालात्मानं कालकालं देवदेवं महेश्वरम् ॥१३॥
उमापतिं विरूपाक्षं योगानन्दमयं परम् । ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम् ॥१४॥
शाश्वतैश्वर्यविटपं धर्माधारं दुरासदम् । महेन्द्रोपेन्द्रनमितं महर्षिगणवन्दितम् ॥१५॥
आधारं सर्वशक्तीनां महायोगेश्वरेश्वरम् । योगिनां हृदि तिष्ठन्तं योगमायासमावृतम् ॥१६॥
क्षणेन जगतो योनिं नारायणमनामयम् । ईश्वरेणैक्यमापन्नमपश्यन् ब्रह्मवादिनः ॥१७॥
दृष्ट्वा तदैश्वरं रूपं रुद्रं नारायणात्मकम् । कृतार्थं मेनिरे सन्तः स्वात्मानं ब्रह्मवादिनः ॥१८॥

सनत्कुमारः सनको भृगुश्च सनातनश्चैव सनन्दनश्च ।
रैभ्योऽङ्गिरा वामदेवोऽथ शुक्रो महर्षिरत्रिः कपिलो मरीचिः ॥१९॥
दृष्ट्वाथ रुद्रं जगदीशितारं तं पद्मनाभाश्रितवामभागम् ।
ध्यात्वा हृदिस्थं प्रणिपत्य मूर्द्ध्ना कृत्वाञ्जलिं स्वेषु शिरःसु भूयः ॥२०॥
ओङ्कारमुच्चार्य विलोक्य देवमन्तःशरीरं निहितं गुहायाम् ।
समस्तुवन् ब्रह्ममयैर्वचोभिरानन्दपूर्णाहितमानसा वै ॥२१॥

## मुनय ऊचुः

त्वामेकमीशं पुरुषं पुराणं प्राणेश्वरं रुद्रमनन्तयोगम् ।
नमाम सर्वे हृदि सन्निविष्टं प्रचेतसं ब्रह्ममयं पवित्रम् ॥२२॥
पश्यन्ति त्वां मुनयो ब्रह्मयोनिं दान्ताः शान्ता विमलं रुक्मवर्णम् ।
ध्यात्वात्मस्थमचलं स्वे शरीरे कविं परेभ्यः परमात् परञ्च ॥२३॥
त्वत्तः प्रसूता जगतः प्रसूतिः सर्वानुभूस्त्वं परमाणुभूतः ।
अणोरणीयान् महतो महीयांस्त्वामेव सर्वं प्रवदन्ति सन्तः ॥२४॥
हिरण्यगर्भो जगदन्तरात्मा त्वत्तोऽस्ति जातः पुरुषः पुराणः ।
स जायमानो भवता निसृष्टो यथाविधानं सकलं ससर्ज ॥२५॥
त्वत्तो वेदाः सकलाः सम्प्रसूतास्त्वय्येवान्ते संस्थितिं ते लभन्ते ।
पश्यामस्त्वां जगतो हेतुभूतं नृत्यन्तं स्वे हृदये सन्निविष्टम् ॥२६॥
त्वयैवेदं भ्राम्यते ब्रह्मचक्रं मायावी त्वं जगतामेकनाथः ।
नमामस्त्वां शरणं सम्प्रपन्ना योगात्मानं चित्पतिं दिव्यनृत्यम् ॥२७॥
पश्यामस्त्वां परमाकाशमध्ये नृत्यन्तं ते महिमानं स्मरामः ।
सर्वात्मानं बहुधा सन्निविष्टं ब्रह्मानन्दमनुभूयानुभूय ॥२८॥
ओङ्कारस्ते वाचको मुक्तिबीजं त्वमक्षरं प्रकृतौ गूढरूपम् ।
तत् त्वां सत्यं प्रवदन्तीह सन्तः स्वयम्प्रभं भवतो यत्प्रभावम् ॥२९॥
स्तुवन्ति त्वां सततं सर्ववेदा नमन्ति त्वामृषयः क्षीणदोषाः ।
शान्तात्मानः सत्यसन्धा वरिष्ठं विशन्ति त्वां यतयो ब्रह्मनिष्ठाः ॥३०॥
भवानीशोऽनादिमान् विश्वरूपो ब्रह्मा विष्णुः परमेष्ठी वरिष्ठः ।
स्वात्मानन्दमनुभूय विशन्ते स्वयंज्योतिरचला नित्यमुक्ताः ॥३१॥
एको रुद्रस्त्वं करोषीह विश्वं त्वं पालयस्यखिलं विश्वरूपः ।
त्वामेवान्ते विलयं विन्दतीदं नमामस्त्वां शरणं सम्प्रपन्नाः ॥३२॥
एको वेदो बहुशाखो ह्यनन्तस्त्वामेवैकं बोधयत्येकरूपम् ।
वेद्यं त्वां ये शरणं सम्प्रपन्ना मायामेतां ते तरन्तीह विप्राः ॥३३॥
त्वामेकमाहुः परमञ्च रुद्रं प्राणं बृहन्तं हरिमग्निमीशम् ।
इन्द्रं मृत्युमनिलं चेकितानं धातारमादित्यमनेकरूपम् ॥३४॥
त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषोत्तमोऽसि ॥३५॥

त्वमेव विष्णुश्चतुराननस्त्वं त्वमेव रुद्रो भगवानपीशः ।
त्वं विश्वनाथः प्रकृतिः प्रतिष्ठा सर्वेश्वरस्त्वं परमेश्वरोऽसि ॥३६॥
त्वामेकमाहुः पुरुषं पुराणमादित्यवर्णं तमसः परस्तात् ।
चिन्मात्रमव्यक्तमचिन्त्यरूपं खं ब्रह्म शून्यं प्रकृतिर्गुणाश्च ॥३७॥
यदन्तरा सर्वमिदं विभाति यदव्ययं निर्मलमेकरूपम् ।
किमप्यचिन्त्यं तव रूपमेतत् तदन्तरा सम्प्रतिभाति तत्त्वम् ॥३८॥
योगेश्वरं भद्रमनन्तभक्ति परायणं ब्रह्मतनुं पुराणम् ।
नमाम सर्वे शरणार्थिनस्त्वां प्रसीद भूताधिपते महेश ॥३९॥
त्वत्पादपद्मस्मरणादशेषसंसारबीजं निलयं प्रयाति ।
मनो नियम्य प्रणिधाय कायं प्रसादयामो वयमेकमीशम् ॥४०॥
नमो भवायास्तु भवोद्भवाय कालाय सर्वाय हराय तुभ्यम् ।
नमोऽस्तु रुद्राय कपर्दिने ते नमोऽग्नये देव नमः शिवाय ॥४१॥

ततः स भगवान् प्रीतः कपर्दी वृषवाहनः । संहृत्य परमं रूपं प्रकृतिस्थोऽभवद्भवः ॥४२॥
ते भवं भूतभव्येशं पूर्ववत् समवस्थितम् । दृष्ट्वा नारायणं देवं विस्मिता वाक्यमब्रुवन् ॥४३॥
भगवन् भूतभव्येश गोवृषाङ्कितशासन । दृष्ट्वा ते परमं रूपं निर्वृताः स्मः सनातन ॥४४॥
भवत्प्रसादादमले परस्मिन् परमेश्वर । अस्माकं जायते भक्तिस्त्वय्येवाव्यभिचारिणी॥४५॥
इदानीं श्रोतुमिच्छामो माहात्म्यं तव शङ्कर । भूयोऽपि चैवं यन्नित्यं याथात्म्यं परमेष्ठिनः ॥४६॥
स तेषां वाक्यमाकर्ण्य योगिनां योगसिद्धिदः । प्राह गम्भीरया वाचा समालोक्य च माधवम् ॥४७॥

इति श्रीकौर्मे महापुराणे उत्तरभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे देवदेवनृत्यदर्शन-भक्तियोगो
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः

### ईश्वर उवाच

शृणुध्वमृषयः सर्वे यथावत् परमेष्ठिनः । वक्ष्यामीशस्य माहात्म्यं यत्तद्वेदविदो विदुः ॥ १ ॥
सर्वलोकैकनिर्माता सर्वलोकैकरक्षिता । सर्वलोकैकसंहर्त्ता सर्वात्माहं सनातनः ॥ २ ॥
सर्वेषामेव वस्तूनामन्तर्यामी महेश्वरः । मध्येवान्ते स्थितं सर्वं नाहं सर्वत्र संस्थितः ॥ ३ ॥
भवद्भिरद्भुतं दृष्टं यत् स्वरूपञ्च मामकम् । ममैषा ह्युपमा विप्रा माया वै दर्शिता मया ॥ ४ ॥
सर्वेषामेव भावानामन्तरा समवस्थितः । प्रेरयामि जगत् कृत्स्नं क्रियाशक्तिरियं मम ॥ ५ ॥
मयेदं चेष्टते विश्वं तद्वै भावानुवर्त्ति मे । सोऽहं कालो जगत् कृत्स्नं प्रेरयामि कलात्मकम् ॥ ६ ॥
एकांशेन जगत् कृत्स्नं करोमि मुनिपुङ्गवाः । संहराम्येकरूपेण द्विधावस्था ममैव तु ॥ ७ ॥
आदिमध्यान्तनिर्मुक्तो मायातत्त्वप्रवर्त्तकः । क्षोभयामि च सर्गादौ प्रधान - पुरुषावुभौ ॥ ८ ॥

ताभ्यां सञ्जायते विश्वं संयुक्ताभ्यां परस्परम् । महदादिक्रमेणैव मम तेजो विजृम्भते ॥ ९ ॥
यो हि सर्वजगत्साक्षी कालचक्रप्रवर्त्तकः । हिरण्यगर्भो मार्त्तण्डः सोऽपि मद्देहसम्भवः ॥१०॥
तस्मै दिव्यं स्वमैश्वर्यं ज्ञानयोगं सनातनम् । दत्तवानात्मजान् वेदान् कल्पादौ चतुरो द्विजाः॥११॥
स मन्नियोगतो देवो ब्रह्मा मद्भावभावितः । दिव्यं तन्मामकैश्वर्यं सर्वदावगतः स्वयम् ॥१२॥
स सर्वलोकनिर्माता मन्नियोगेन सर्ववित् । भूत्वा चतुर्मुखः सर्गं सृजत्येवात्मसम्भवः ॥१३॥
योऽपि नारायणोऽनन्तो लोकानां प्रभवोऽव्ययः । ममैव च परा मूर्त्तिः करोति परिपालनम् ॥१४॥
योऽन्तकः सर्वभूतानां रुद्रः कालात्मकः प्रभुः । मदाज्ञयासौ सततं संहरिष्यति मे तनुः ॥१५॥
हव्यं वहति देवानां कव्यं कव्याशिनामपि । पाकञ्च कुरुते वह्निः सोऽपि मच्छक्तिनोदितः॥१६॥
भुक्तमाहारजातञ्च पचते तदहर्निशम् । वैश्वानरोऽग्निर्भगवानीश्वरस्य नियोगतः ॥१७॥
योऽपि सर्वाम्भसां योनिर्वरुणो देवपुङ्गवः । सोऽपि सञ्जीवयेत् कृत्स्नमीश्वरस्य नियोगतः ॥१८॥
योऽन्तस्तिष्ठति भूतानां बहिर्देवः प्रभञ्जनः । मदाज्ञयासौ भूतानां शरीराणि बिभर्त्ति हि ॥१९॥
योऽपि सञ्जीवनो नृणां देवानाममृताकरः । सोमः स मन्नियोगेन नोदितः किल वर्त्तते ॥२०॥
यः स्वभासा जगत् कृत्स्नं प्रभासयति सर्वशः । सूर्यो वृष्टिं वितनुते स्वोस्त्रेणैव स्वयम्भुवः ॥२१॥
योऽप्यशेषजगच्छास्ता शक्रः सर्वामरेश्वरः । यज्वनां फलदो देवो वर्त्ततेऽसौ मदाज्ञया ॥२२॥
यः प्रशास्ता ह्यसाधूनां वर्त्तते नियमादिह । यमो वैवस्वतो देवो देवदेवनियोगतः ॥२३॥
योऽपि सर्वधनाध्यक्षो धनानां सम्प्रदायकः । सोऽपीश्वरनियोगेन कुबेरो वर्त्तते सदा ॥२४॥
यः सर्वरक्षसां नाथस्तामसानां फलप्रदः । मन्नियोगादसौ देवो वर्त्तते निर्ऋतिः सदा । २५॥
वेतालगणभूतानां स्वामी भोगफलप्रदः । ईशानः किल भक्तानां सोऽपि तिष्ठेन्मदाज्ञया॥२६॥
यो वामदेवोऽङ्गिरसः शिष्यो रुद्रगणाग्रणीः । रक्षको योगिनां नित्यं वर्त्ततेऽसौ मदाज्ञया ॥२७॥
यश्च सर्वजगत्पूज्यो वर्त्तते विघ्ननायकः । विनायको धर्मरतः सोऽपि मद्वचनात् किल ॥२८॥
योऽपि ब्रह्मविदां श्रेष्ठो देवसेनापतिः प्रभुः । स्कन्दोऽसौ वर्त्तते नित्यं स्वयम्भूर्विधिनोदितः ॥२९॥
ये च प्रजानां पतयो मरीच्याद्या महर्षयः । सृजन्ति विविधं लोकं परस्यैव नियोगतः ॥३०॥
या च श्रीः सर्वभूतानां ददाति विपुलां श्रियम् । पत्नी नारायणस्यासौ वर्त्तते मदनुग्रहात् ॥३१॥
वाचं ददाति विपुलां या च देवी सरस्वती । सापीश्वरनियोगेन नोदिता सम्प्रवर्त्तते ॥३२॥
याऽशेषपुरुषान् घोरान् नरकात् तारयिष्यति । सावित्री संस्मृता देवी मदाज्ञानुविधायिनी ॥३३॥
पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी । यापि ध्याता विशेषेण सापि मद्वचनानुगा ॥३४॥
योऽनन्तमहिमानन्तः शेषोऽशेषामरप्रभुः । दधाति शिरसा लोकं सोऽपि देवनियोगतः ॥३५॥
योऽग्निः संवर्त्तको नित्यं बडवारूपसंस्थितः । पिबत्यखिलमम्भोधिमीश्वरस्य नियोगतः ॥३६॥
ये चतुर्दश लोकेऽस्मिन् मनवः प्रथितौजसः । पालयन्ति प्रजाः सर्वास्तेऽपि तस्य नियोगतः ॥३७॥
आदित्या वसवो रुद्रा मरुतश्च तथाश्विनौ । अन्याश्च देवताः सर्वा शास्त्रेणैव विनिर्मिताः ॥३८॥
गन्धर्वा गरुडाद्याश्च सिद्धाः साध्याश्च चारणाः । यक्ष-रक्षः-पिशाचाश्च स्थिताःसृष्टाः स्वयम्भुवा॥३९॥
कला काष्ठा निमेषाश्च मुहूर्त्ता दिवसाः क्षपाः । ऋतवः पक्ष-मासाश्च स्थिताः शास्त्रे प्रजापतेः॥४०॥
युग-मन्वन्तराण्येव मम तिष्ठन्ति शासने । पराश्चैव परार्द्धाश्च कालभेदास्तथापरे ॥४१॥
चतुर्विधानि भूतानि स्थावराणि चराणि च । नियोगादेव वर्त्तन्ते देवस्य परमात्मनः ॥४२॥
पातालानि च सर्वाणि भुवनानि च शासनात् । ब्रह्माण्डानि च वर्त्तन्ते सर्वाण्येव स्वयम्भुवः॥४३॥
अतीतान्यप्यसंख्यानि ब्रह्माण्डानि ममाज्ञया । प्रवृत्तानि पदार्थौघैः सहितानि समन्ततः ॥४४॥

ब्रह्माण्डानि भविष्यन्ति सह वस्तुभिरात्मगैः । करिष्यन्ति सदैवाज्ञां परस्य परमात्मनः ॥४५॥
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । भूतादिरादिप्रकृतिर्नियोगे मम वर्त्तते ॥४६॥
याऽशेषजगतां योनिर्मोहिनी सर्वदेहिनाम् । माया विवर्त्तते नित्यं सापीश्वरनियोगतः ॥४७॥
यो वै देहभृतां देवः पुरुषः पठ्यते परः । आत्माऽसौ वर्त्तते नित्यमीश्वरस्य नियोगतः ॥४८॥
विधूय मोहकलिलं यया पश्यति तत्पदम् । सापि विद्या महेशस्य नियोगवशवर्त्तिनी ॥४९॥
बहुनात्र किमुक्तेन मम शक्त्यात्मकं जगत् । मयैव सृज्यते कृत्स्नं मयेव प्रलयं व्रजेत् ॥५०॥
अहं हि भगवानीशः स्वयंज्योतिः सनातनः । परमात्मा परंब्रह्म मत्तो ह्यन्यो न विद्यते ॥५१॥
इत्येतत् परमं ज्ञानं युष्माकं कथितं मया । ज्ञात्वा विमुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥५२॥

इति श्रीकौर्मे महापुराणे उत्तर-भागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे परमेश्वरनृत्यदर्शन-
ज्ञानयोगो नाम षष्ठोऽध्यायः ॥६॥

---

# सप्तमोऽध्यायः

## ईश्वर उवाच

शृणुध्वमृषयः सर्वे प्रभावं परमेष्ठिनः । यं ज्ञात्वा पुरुषो मुक्तो न संसारे पतेत् पुनः ॥ १ ॥
परात्परतरं ब्रह्म शाश्वतं ध्रुवमव्ययम् । नित्यानन्दं निर्विकल्पं तद्धाम परमं मम ॥ २ ॥
अहं ब्रह्मविदां ब्रह्मा स्वयम्भूर्विश्वतोमुखः । मायाविनामहं देवः पुराणो हरिरव्ययः ॥ ३ ॥
योगिनामप्यहं शम्भुः स्त्रीणां देवी गिरीन्द्रजा । आदित्यानामहं विष्णुर्वसूनामस्मि पावकः ॥ ४ ॥
रुद्राणां शङ्करश्चाहं गरुडः पततामहम् । ऐरावतो गजेन्द्राणां रामः शस्त्रभृतामहम् ॥ ५ ॥
ऋषीणाञ्च वसिष्ठोऽहं देवानाञ्च शतक्रतुः । शिल्पिनां विश्वकर्माहं प्रह्लादः सुरविद्विषाम् ॥ ६ ॥
मुनीनामप्यहं व्यासो गणानाञ्च विनायकः । वीराणां वीरभद्रोऽहं सिद्धानां कपिलो मुनिः ॥ ७ ॥
पर्वतानामहं मेरुर्नक्षत्राणाञ्च चन्द्रमाः । वज्रं प्रहरणानाञ्च व्रतानां सत्यमस्म्यहम् ॥ ८ ॥
अनन्तो भोगिनां देवः सेनानीनाञ्च पावकिः । आश्रमाणाञ्च गार्हस्थ्यमीश्वराणां महेश्वरः ॥ ९ ॥
महाकल्पश्च कल्पानां युगानां कृतमस्म्यहम् । कुबेरः सर्वयक्षाणां तृणानाञ्चैव वीरुधः ॥१०॥
प्रजापतीनां दक्षोऽहं निरृतिः सर्वरक्षसाम् । वायुर्बलवतामस्मि द्वीपानां पुष्करोऽस्म्यहम् ॥११॥
मृगेन्द्राणाञ्च सिंहोऽहं यन्त्राणां धनुरेव च । वेदानां सामवेदोऽहं यजुषां शतरुद्रियम् ॥१२॥
सावित्री सर्वजप्यानां गुह्यानां प्रणवोऽस्म्यहम् । सूक्तानां पौरुषं सूक्तं ज्येष्ठसाम च सामसु ॥१३॥
सर्ववेदार्थविदुषां मनुः स्वायम्भुवोऽस्म्यहम् । ब्रह्मावर्त्तस्तु देशानां क्षेत्राणामविमुक्तकम् ॥१४॥
विद्यानामात्मविद्याहं ज्ञानानामैश्वरं परम् । भूतानामस्म्यहं व्योम तत्त्वानां मृत्युरेव च ॥१५॥
पाशानामस्म्यहं माया कालः कलयतामहम् । गतीनां मुक्तिरेवाहं परेषां परमेश्वरः ॥१६॥
यच्चान्यदपि लोकेऽस्मिन् सत्त्वं तेजोबलाधिकम् । तत् सर्वं प्रतिजानीध्वं मम तेजोविजृम्भितम् ॥१७॥
आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्त्तिनः । तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥१८॥

मायापाशेन बध्नामि पशूनेतान् स्वलीलया । मामेव मोचकं प्राहुः पशूनां वेदवादिनः ॥१९॥
मायापाशेन बद्धानां मोचकोऽन्यो न विद्यते । मामृते परमात्मानं भूताधिपतिमव्ययम् ॥२०॥
चतुर्विंशतितत्त्वानि मायाकर्मगुणा इति । एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः ॥२१॥
मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः । एताः प्रकृतयस्त्वष्टौ विकाराश्च तथापरे ॥२२॥
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणञ्चैव तु पञ्चमम् । पायूपस्थं करौ पादौ वाक् चैव दशमी मता ॥२३॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च । त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि च ॥२४॥
चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् । अनादिमध्यनिधनं कारणं जगतः परम् ॥२५॥
सत्त्वं रजस्तमश्चेति गुणत्रयमुदाहृतम् । साम्यावस्थितिमेतेषामव्यक्तां प्रकृतिं विदुः ॥२६॥
सत्त्वं ज्ञानं तमोऽज्ञानं राजसं समुदाहृतम् । गुणानां बुद्धिवैषम्याद्वैषम्यं कवयो विदुः ॥२७॥
धर्माधर्माविति प्रोक्तौ पाशौ द्वौ कर्मसंज्ञितौ । मय्यर्पितानि कर्माणि न बन्धाय विमुक्तये ॥२८॥
अविद्यामस्मितां रागं द्वेषञ्चाभिनिवेशकम् । क्लेशाख्यांस्तान् स्वयं प्राहुः पाशानात्मनिबन्धनात्॥२९॥
एतेषामेव पाशानां माया कारणमुच्यते । मूलप्रकृतिरव्यक्ता सा शक्तिर्मयि तिष्ठति ॥३०॥
स एव मूलप्रकृतिः प्रधानं पुरुषोऽपि च । विकारा महदादीनि देवदेवः सनातनः ॥३१॥

स एव बन्धः स च बन्धकर्त्ता स एव पाशः पशवः स एव ।
स वेद सर्वं न च तस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम् ॥३२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे परमेष्ठिप्रभावो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

### ईश्वर उवाच

अन्यद् गुह्यतमं ज्ञानं वक्ष्ये ब्राह्मणपुङ्गवाः । येनासौ तरते जन्तुर्घोरं संसारसागरम् ॥ १ ॥
अयं ब्रह्ममयः शान्तः शाश्वतो निर्मलोऽव्ययः । एकाकी भगवानुक्तः केवलः परमेश्वरः ॥ २ ॥
मम योनिर्महद्ब्रह्म तत्र गर्भं दधाम्यहम् । मूलमायाभिधानं तं ततो जातमिदं जगत् ॥ ३ ॥
प्रधानं पुरुषो ह्यात्मा महद्भूतादिरेव च । तन्मात्राणि महाभूतानीन्द्रियाणि च जज्ञिरे ॥ ४ ॥
ततोऽण्डमभवद्धैममर्ककोटिसमप्रभम् । तस्मिन् जज्ञे महान् ब्रह्मा मच्छक्त्या चोपबृंहितः ॥ ५ ॥
ये चान्ये बहवो जीवास्तन्मयाः सर्व एव ते । न मां पश्यन्ति पितरं मायया मम मोहिताः ॥ ६ ॥
याश्च योनिषु सर्वासु सम्भवन्तीह मूर्त्तयः । तासां मायां परां योनिं मामेव पितरं विदुः ॥ ७ ॥
यो मामेवं विजानाति बीजिनं पितरं प्रभुम् । स वीरः सर्वलोकेषु न मोहमधिगच्छति ॥ ८ ॥
ईशानः सर्वविद्यानां भूतानां परमेश्वरः । ओङ्कारमूर्त्तिर्भगवानहं ब्रह्मा प्रजापतिः ॥ ९ ॥
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥१०॥
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् । न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥११॥
विदित्वा सप्त सूक्ष्माणि षडङ्गञ्च महेश्वरम् । प्रधानविनियोगज्ञः परं ब्रह्माधिगच्छति ॥१२॥

सर्वज्ञता तृप्तिरनादिबोधः स्वच्छन्दता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विदित्वा षडाहुरङ्गानि महेश्वरस्य ॥१३॥
तन्मात्राणि मन आत्मा च तानि सूक्ष्माण्याहुः सप्त तत्त्वात्मकानि ।
या सा हेतुः प्रकृतिः सा प्रधानं बन्धः प्रोक्तो विनियोगोऽपि तेन ॥१४॥
या सा शक्तिः प्रकृतौ लीनरूपा वेदेषूक्ता कारणं ब्रह्मयोनिः ।
तस्या एकः परमेष्ठी पुरस्तान्माहेश्वरः पुरुषः सत्यरूपः ॥१५॥
ब्रह्मा योगी परमात्मा महीयान् व्योमव्यापी वेदवेद्यः पुराणः ।
एको रुद्रो मृत्युरव्यक्तमेकं बीजं विश्वं देव एकः स एव ॥१६॥
तमेवैकं प्राहुरन्येऽप्यनेकं त्वामेवात्मा केचिदन्यं तमाहुः ।
अणोरणीयान् महतो महीयान् महादेवः प्रोच्यते विश्वरूपः ॥१७॥
एवं हि यो वेद गुहाशयं परं प्रभुं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥१८॥

इति श्रीकौर्मे महापुराणे उत्तरभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे संसारतारणज्ञानयोगो
नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः

### ऋषय ऊचुः

निष्कलो निर्मलो नित्यो निष्क्रियः परमेश्वरः । ततो वद महादेव विश्वरूपः कथं भवान् ॥ १ ॥

### ईश्वर उवाच

नाहं विश्वो न विश्वञ्च मामृते विद्यते द्विजाः । माया निमित्तमात्रास्ति सा चात्मनि मया श्रिता ॥२॥
अनादिनिधना शक्तिर्माया व्यक्तिसमाश्रया । तन्निमित्तः प्रपञ्चोऽयमव्यक्ताज्जायते खलु ।
अव्यक्तं कारणं प्राहुरानन्दं ज्योतिरक्षरम् ॥ ३ ॥
अहमेव परं ब्रह्म मत्तो ह्यन्यन्न विद्यते । तस्मान्मे विश्वरूपत्वं निश्चितं ब्रह्मवादिभिः ॥ ४ ॥
एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् । अहं तत् परमं ब्रह्म परमात्मा सनातनः ॥ ५ ॥
अकारणं द्विजाः प्रोक्ता न दोषो ह्यात्मनस्तथा । अनन्ताः शक्तयोऽव्यक्ता मायया संस्थिता ध्रुवाः ।
तस्मिन् दिवि स्थितं नित्यमव्यक्तं भाति केवलम् ॥६॥
याभिस्तल्लक्ष्यते भिन्नमभिन्नन्तु स्वभावतः । एकया मायया युक्तमनादिनिधनं ध्रुवम् ॥ ७ ॥
पुंसोऽन्याभूद्यथा भूतिरन्यया न तिरोहितम् । अनादिमध्यनिष्ठं तच्चेष्टते विद्यया किल ॥ ८ ॥
तदेतत् परमव्यक्तं प्रभामण्डलमण्डितम् । तदक्षरं परं ज्योतिस्तद् विष्णोः परमं पदम् ॥९॥
तत्र सर्वमिदं प्रोतमोतञ्चैवाखिलं जगत् । तदेवेदं जगत् कृत्स्नं तद्विज्ञाय विमुच्यते ॥१०॥
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् बिभेति न कुतश्चन ॥११॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तं विज्ञाय परिमुच्येत विद्वान् नित्यानन्दी भवति ब्रह्मभूतः ॥१२॥
यस्मात् परं नापरमस्ति किञ्चिद्यज्ज्योतिषां ज्योतिरेकं दिविष्ठम् ।
तदेवात्मानं मन्यमानोऽथ विद्वानात्मानन्दी भवति ब्रह्मभूतः ॥१३॥
तदव्ययं कलिलं गूढदेहं ब्रह्मानन्दममृतं विश्वधाम ।
वदन्त्येवं ब्राह्मणा ब्रह्मनिष्ठा यत्र गत्वा न निवर्त्तेत भूयः ॥१४॥
हिरण्मये परमाकाशतत्त्वे यद्वै दिवि विप्रतिभातीव तेजः ।
तद्विज्ञाने परिपश्यन्ति धीरा विभ्राजमानं विमलं व्योमधाम ॥१५॥
ततः परं परिपश्यन्ति धीरा आत्मन्यात्मानमनुभूय साक्षात् ।
स्वयं प्रभुः परमेष्ठी महीयान् ब्रह्मानन्दो भगवानीश एषः ॥१६॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
तमेवैकं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१७॥
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी स भगवांस्तस्मादन्यन्न विद्यते ॥१८॥
इत्येतदैश्वरं ज्ञानमुक्तं वो मुनिपुङ्गवाः । गोपनीयं विशेषेण योगिनामपि दुर्लभम् ॥१९॥

इति श्रीकौर्मे महापुराणे उत्तरभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे निर्गुणब्रह्मणो विश्वरूपकारणज्ञानयोगो
नाम नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः

## ईश्वर उवाच

अलिङ्गमेकमव्यक्तलिङ्गं ब्रह्मेति निश्चितम् । स्वयं ज्योतिः परं तत्त्वं परे व्योम्नि व्यवस्थितम् ॥ १ ॥
अव्यक्तं कारणं यत्तदक्षरं परमं पदम् । निर्गुणं शुद्धविज्ञानं तद्वै पश्यन्ति सूरयः ॥ २ ॥
तन्निष्ठाः स्वान्तसङ्कल्पा नित्यं तद्भावभाविताः । पश्यन्ति तत् परं ब्रह्म यत्तल्लिङ्गमिति श्रुतिः॥ ३ ॥
अन्यथा न हि मां द्रष्टुं शक्यं वै मुनिपुङ्गवाः । न हि तद्विद्यते ज्ञानं येन तज् ज्ञायते परम् ॥ ४ ॥
एतत् तत् परमं ज्ञानं केवलं कवयो विदुः । अज्ञानतिमिरं ज्ञानं यस्मान्मायामयं जगत् ॥ ५ ॥
तज् ज्ञानं निर्मलं शुद्धं निर्विकल्पं निरञ्जनम् । ममात्मासौ तदेवेदमिति प्राहुर्विपश्चितः ॥ ६ ॥
येऽप्यनेकं प्रपश्यन्ति तत्परं परमं पदम् । आश्रिताः परमां निष्ठां बुद्ध्वैक्यं तत्त्वमव्ययम्॥ ७ ॥
ये पुनः परमं तत्त्वमेकं वानेकमीश्वरम् । भक्त्या मां सम्प्रपश्यन्ति विज्ञेयास्ते तदात्मकाः॥ ८ ॥
साक्षाद्देवं प्रपश्यन्ति स्वात्मानं परमेश्वरम् । नित्यानन्दं निर्विकल्पं सत्यरूपमिति स्थितिः॥ ९ ॥
भजन्ते परमानन्दं सर्वगं जगदात्मकम् । स्वात्मन्यवस्थिताः शान्ताः परे व्यक्तापरस्य तु॥१०॥
एषा विमुक्तिः परमा मम सायुज्यमुत्तमम् । निर्वाणं ब्रह्मणा चैक्यं कैवल्यं कवयो विदुः ॥११॥
तस्मादनादिमध्यान्त वस्त्वेकं परमः शिवः । स ईश्वरो महादेवस्तं विज्ञाय प्रमुच्यते ॥१२॥

न तत्र सूर्यः प्रतिभाति चन्द्रो न नक्षत्राणां न गणो नोत विद्युत् ।
तद्भासेदमखिलं भाति विश्वं तन्नित्यभासममलं सद्विभाति ॥१३॥
नित्योदितं निष्कलं निर्विकल्पं शुद्धं बृहत् परमं यद्विभाति ।
अत्रान्तरे ब्रह्मविदोऽथ नित्यं पश्यन्ति तत्त्वमचलं यत् स ईशः ॥१४॥
नित्यानन्दममृतं सत्यरूपं शुद्धं वदन्ति पुरुषं सर्ववेदाः ।
प्राणानिति प्रणवेनेशितारं ध्यायन्ति वेदैरिति निश्चितार्थाः ॥१५॥
न भूमिरापो न मनो न वह्निः प्राणोऽनिलो गगनं नोत बुद्धिः ।
न चेतनोऽन्यत् परमाकाशमध्ये विभाति देवः शिव एव केवलः ॥१६॥
इत्येतदुक्तं परमं रहस्यं ज्ञानामृतं सर्ववेदेषु गूढम् ।
जानाति योगी विजनेऽथ देशे युञ्जीत योगं प्रयतो ह्यजस्रम् ॥१७॥

इति श्रीकौर्मे महापुराणे उत्तरभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे लिङ्गब्रह्मज्ञानयोगो
नाम दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः

## ईश्वर उवाच

अतः परं प्रवक्ष्यामि योगं परमदुर्लभम् । येनात्मानं प्रपश्यन्ति भानुमन्तमिवेश्वरम् ॥ १ ॥
योगाग्निर्दहते क्षिप्रमशेषं पापपञ्जरम् । प्रसन्नं जायते ज्ञानं साक्षान्निर्वाणसिद्धिदम् ॥ २ ॥
योगात् सञ्जायते ज्ञानं ज्ञानाद् योगः प्रवर्त्तते । योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः ॥ ३ ॥
एककालं द्विकालं वा त्रिकालं नित्यमेव च । ये युञ्जन्ति महायोगं ते विज्ञेया महेश्वराः ॥ ४ ॥
योगस्तु द्विविधो ज्ञेयो ह्यभावः प्रथमो मतः । अपरस्तु महायोगः सर्वयोगोत्तमोत्तमः ॥ ५ ॥
शून्यं सर्वनिराभासं स्वरूपं यत्र चिन्त्यते । अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति ॥ ६ ॥
यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम् । मयैक्यं स महायोगो भाषितः परमः स्वयम् ॥ ७ ॥
ये चान्ये योगिनां योगाः श्रूयन्ते ग्रन्थविस्तरे । सर्वे ते ब्रह्मयोगस्य कलां नार्हन्ति षोडशीम् ॥ ८ ॥
यत्र साक्षात् प्रपश्यन्ति विमुक्ता विश्वमीश्वरम् । सर्वेषामेव योगानां स योगः परमो मतः ॥ ९ ॥
सहस्रशोऽथ बहुशो ये चेश्वरबहिष्कृताः । न ते पश्यन्ति मामेकं योगिनो यतमानसाः ॥१०॥
प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा । समाधिश्च मुनिश्रेष्ठा यमश्च नियमासने ॥११॥
मय्येकचित्तता योगो वृत्त्यन्तरनिरोधतः । तत्साधनान्यष्टधा तु युष्माकं कथितानि तु ॥१२॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ । यमाः संक्षेपतः प्रोक्ताश्चित्तशुद्धिप्रदा नृणाम् ॥१३॥
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा । अक्लेशजननं प्रोक्ता त्वहिंसा परमर्षिभिः ॥१४॥
अहिंसायाः परो धर्मो नास्त्यहिंसापरं सुखम् । विधिना या भवेद्धिंसा त्वहिंसैव प्रकीर्त्तिता ॥१५॥
सत्येन सर्वमाप्नोति सत्ये सर्वं प्रतिष्ठितम् । यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः ॥१६॥

परद्रव्यापहरणं चौर्यादथ बलेन वा । स्तेयं तस्यानाचरणादस्तेयं धर्मसाधनम् ॥१७॥
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥१८॥
द्रव्याणामप्यनादानमापद्यपि तथेच्छया । अपरिग्रहमित्याहुस्तं प्रयत्नेन पालयेत् ॥१९॥
तपः-स्वाध्याय-सन्तोषाः शौचमीश्वरपूजनम् । समासान्नियमाः प्रोक्ता योगसिद्धिप्रदायिनः ॥२०॥
उपवासपराकादि - कृच्छ्रचान्द्रायणादिभिः । शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ॥२१॥
वेदान्तशतरुद्रीय - प्रणवादिजपं बुधाः । सत्त्वसिद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥२२॥
स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः । उत्तरोत्तरवैशिष्ट्यं प्राहुर्वेदार्थवेदिनः ॥२३॥
यः शब्दबोधजननः परेषां शृण्वतां स्फुटम् । स्वाध्यायो वाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥२४॥
ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकम् । उपांशुरेष निर्दिष्टः साहस्रो वाचिकाज्जपः ॥२५॥
यत् पदाक्षरसङ्गत्या परिस्पन्दनवर्जितम् । चिन्तनं सर्वशब्दानां मानसं तं जपं विदुः ॥२६॥
यदृच्छालाभतो नित्यमलं पुंसो भवेदिति । प्राशस्त्यमृषयः प्राहुः सन्तोषं सुखलक्षणम् ॥२७॥
बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः । मृज्जलाभ्यां स्मृतं बाह्यं मनः शुद्धिरथान्तरम्॥२८॥
स्तुति-स्मरण-पूजाभिर्वाङ्मनः- काय - कर्मभिः । सुनिश्चला शिवे भक्तिरेतदीशस्य पूजनम् ॥२९॥
यमाश्च नियमाः प्रोक्ताः प्राणायामं निबोधत । प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ॥३०॥
उत्तमाधममध्यत्वात् त्रिधाऽयं प्रतिपादितः । स एव द्विविधः प्रोक्तः सगर्भोऽगर्भ एव च ॥३१॥
मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः । मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्रिकोऽन्तकः ॥३२॥
प्रस्वेदकम्पनोत्थानजनकत्वं यथाक्रमम् । मन्द-मध्यम - मुख्यानामानन्दाच्चोत्तमोत्तमः ॥३३॥
सगर्भमाहुः सजपमगर्भं विजपं बुधाः । एतद्वै योगिनां प्राहुः प्राणायामस्य लक्षणम् ॥३४॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥३५॥
रेचकः पूरकश्चैव प्राणायामोऽथ कुम्भकः । प्रोच्यते सर्वशास्त्रेषु योगिभिर्यतमानसैः ॥३६॥
रेचको बाह्यनिश्वासात् पूरकस्तन्निरोधतः । साम्येन संस्थितिर्या सा कुम्भकः परिगीयते ॥३७॥
इन्द्रियाणां विचरतां विषयेषु स्वभावतः । निग्रहः प्रोच्यते सद्भिः प्रत्याहारस्तु सत्तमाः॥३८॥
हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वसु मस्तके । एवमादिषु देशेषु धारणा चित्तबन्धनम् ॥३९॥
देशावस्थितिमालम्ब्य बुद्धेर्या वृत्तिसन्ततिः । वृत्त्यन्तरैरसंसृष्टा तद् ध्यानं सूरयो विदुः ॥४०॥
एकाकारः समाधिः स्याद्देशालम्बनवर्जितः । प्रत्ययो ह्यर्थमात्रेण योगशासनमुत्तमम् ॥४१॥
धारणा द्वादशायामा ध्यानं द्वादश धारणाः । ध्यानं द्वादशकं यावत् समाधिरभिधीयते ॥४२॥
आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनं तथा । साधनानाञ्च सर्वेषामेतत् साधनमुत्तमम् ॥४३॥
ऊर्वोरुपरि विप्रेन्द्राः कृत्वा पादतले उभे । समासीतात्मनः पद्ममेतदासनमुत्तमम् ॥४४॥
उभे कृत्वा पादतले जानूर्वोरन्तरेण हि । समासीतात्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥४५॥
एकं पादमथैकस्मिन् विन्यस्योरुणि सत्तमाः । आसीतार्द्धासनमिदं योगसाधनमुत्तमम् ॥४६॥
अदेशकाले योगस्य दर्शनं हि न विद्यते । अग्न्यभ्यासे जले वापि शुष्कपर्णचये तथा ॥४७॥
जन्तुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे । सशब्दे सभये वापि चैत्यवल्मीकसञ्चये ॥४८॥
अशुभे दुर्जनाक्रान्ते मशकादिसमन्विते । नाचरेद्देहबाधे वा दौर्मनस्यादिसम्भवे ॥४९॥
सुगुप्ते सुशुभे देशे गुहायां पर्वतस्य च । नद्यास्तीरे पुण्यदेशे देवतायतने तथा ॥५०॥
गृहे वा सुशुभे देशे निर्जने जन्तुवर्जिते । युञ्जीत योगी सततमात्मानं मत्परायणः ॥५१॥
नमस्कृत्य तु योगीन्द्रान् सशिष्यांश्च विनायकम् । गुरुञ्चैव च मां योगी युञ्जीत सुसमाहितः ॥५२॥

आसनं स्वस्तिकं बद्ध्वा पद्ममर्द्धमथापि वा । नासिकाग्रे समां दृष्टिमीषदुन्मीलितेक्षणः ॥५३॥
कृत्वाथ निर्भयः शान्तस्त्यक्त्वा मायामयं जगत् । स्वात्मन्यवस्थितं देवं चिन्तयेत् परमेश्वरम् ॥५४॥
शिखाग्रे द्वादशाङ्गुल्ये कल्पयित्वाथ पङ्कजम् । धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम् ॥५५॥
ऐश्वर्याष्टदलोपेतं परंवैराग्यकर्णिकम् । चिन्तयेत् परमं कोशं कर्णिकायां हिरण्मयम् ॥५६॥
सर्वशक्तिमयं साक्षाद्यं प्राहुर्दिव्यमव्ययम् । ओङ्कारवाच्यमव्यक्तं रश्मिजालसमाकुलम् ।
चिन्तयेत् तत्र विमलं परं ज्योतिर्यदक्षरम् ॥५७॥
तस्मिन् ज्योतिषि विन्यस्य स्वात्मानं तदभेदतः । ध्यायीत कोशमध्यस्थमीशं परमकारणम् ॥५८॥
तदात्मा सर्वगो भूत्वा न किञ्चिदपि चिन्तयेत् । एतद् गुह्यतमं ज्ञानं ध्यानान्तरमथोच्यते ॥५९॥
चिन्तयित्वा तु पूर्वोक्तं हृदये पद्ममुत्तमम् । आत्मानमथ कान्तारं तत्रानलसमत्विषम् ॥६०॥
मध्ये वह्निशिखाकारं पुरुषं पञ्चविंशकम् । चिन्तयेत् परमात्मानं तन्मध्ये गगनं परम् ॥६१॥
ओङ्कारबोधितं तत्त्वं शाश्वतं शिवमच्युतम् । अव्यक्तं प्रकृतौ लीनं परं ज्योतिरनुत्तमम् ॥६२॥
तदन्तः परमं तत्त्वमात्माधारं निरञ्जनम् । ध्यायीत तन्मयो नित्यमेकरूपं महेश्वरम् ॥६३॥
विशोध्य सर्वतत्त्वानि प्रणवेनाथवा पुनः । संस्थाप्य मयि चात्मानं निर्मले परमे पदे ॥६४॥
प्लावयित्वात्मनो देहं तेनैव ज्ञानवारिणा । मदात्मा मन्मना भस्म गृहीत्वा ह्यग्निहोत्रजम् ॥६५॥
तेनोद्धूलितसर्वाङ्गमग्निरादित्यमन्त्रतः । चिन्तयेत् स्वात्मनीशानं परंज्योतिः स्वरूपिणम् ॥६६॥
एष पाशुपतो योगः पशुपाशविमुक्तये । सर्ववेदान्तसारोऽय मत्याश्रम इति श्रुतिः ॥६७॥
एतत् परतरं गुह्यं मत्सायुज्यप्रदायकम् । द्विजातीनान्तु कथितं भक्तानां ब्रह्मचारिणाम् ॥६८॥
ब्रह्मचर्यमहिंसा च क्षमा शौचं तपो दमः । सन्तोषः सत्यमास्तिक्यं व्रताङ्गानि विशेषतः ॥६९॥
एकेनाप्यथ हीनेन व्रतमस्य तु लुप्यते । तस्मादात्मगुणोपेतो मद्व्रतं वोढमर्हति ॥७०॥
वीतराग - भय - क्रोधा मन्मया मामुपाश्रिताः । बहवोऽनेन योगेन पूता मद्भावयोगतः ॥७१॥
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । ज्ञानयोगेन मां तस्माद् यजेत परमेश्वरम् ॥७२॥
अथवा भक्तियोगेन वैराग्येण परेण तु । चेतसा बोधयुक्तेन पूजयेन्मां सदा शुचिः ॥७३॥
सर्वकर्माणि संन्यस्य भिक्षाशी निष्परिग्रहः । प्राप्नोति मम सायुज्यं गुह्यमेतन्मयोदितम् ॥७४॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च । निर्ममो निरहङ्कारो यो मद्भक्तः स मे प्रियः ॥७५॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥७६॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तो यः स हि मे प्रियः ॥७७॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः । सर्वारम्भपरित्यागी भक्तिमान् यः स मे प्रियः ॥७८॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् । अनिकेतः स्थिरमतिर्मद्भक्तो मामुपैष्यति ॥७९॥
सर्वकर्माण्यपि सदा कुर्वाणो मत्परायणः । मत्प्रसादादवाप्नोति शाश्वतं परमं पदम् ॥८०॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः । निराशी निर्ममो भूत्वा मामेकं शरणं व्रजेत् ॥८१॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यपि प्रवृत्तोऽपि नैव तेन निबध्यते ॥८२॥
निराशी यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति तत्पदम् ॥८३॥
यदृच्छालाभतृप्तस्य द्वन्द्वातीतस्य चैव हि । कुर्वतो मत्प्रसादार्थं कर्म संसारनाशनम् ॥८४॥
मन्मना मन्नमस्कारी मद्याजी मत्परायणः । मामुपैष्यति योगीशो ज्ञात्वा मां परमेश्वरम् ॥८५॥
मामेवाहुः परं ज्योतिर्बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं मम सायुज्यमाप्नुयुः ॥८६॥
एवं नित्याभियुक्तानां मदीयं कर्म सत्त्वगम् । नाशयामि तमः कृत्स्नं ज्ञानदीपेन भास्वता ॥८७॥

मद्बुद्धयो मां सततं पूजयन्तीह ये जनाः । तेषां नित्याभियुक्तानां योग-क्षेमं वहाम्यहम् ॥८८॥
ये चान्ये कामभोगार्थं यजन्ते ह्यन्यदेवताः । तेषां तदन्तं विज्ञेयं देवतानुगतं फलम् ॥८९॥
ये चान्यदेवताभक्ताः पूजयन्तीह देवताः । मद्भावनासमायुक्ता मुच्यन्ते तेऽपि मानवाः ॥९०॥
तस्माद्विनश्वरानन्यांस्त्यक्त्वा देवानशेषतः । मामेव संश्रयेदीशं स याति परमं पदम् ॥९१॥
त्यक्त्वा पुत्रादिषु स्नेहं निःशोको निष्परिग्रहः । यजेच्चा मरणाल्लिङ्गं विरक्तः परमेश्वरम् ॥९२॥
येऽर्चयन्ति सदा लिङ्गं त्यक्त्वा भोगानशेषतः । एकेन जन्मना तेषां ददामि परमं पदम् ॥९३॥
परात्मनः सदा लिङ्गं केवलं रजतप्रभम् । ज्ञानात्मकं सर्वगतं योगिनां हृदि संस्थितम् ॥९४॥
ये चान्ये नियता भक्ता भावयित्वा विधानतः । यत्र क्वचन तल्लिङ्गमर्चयन्ति महेश्वरम् ॥९५॥
जले वा वह्निमध्ये वा व्योम्नि सूर्येऽथवान्यतः । रत्नादौ भावयित्वेशमर्चयेल्लिङ्गमैश्वरम् ॥९६॥
सर्वलिङ्गमयं ह्येतत् सर्वं लिङ्गे प्रतिष्ठितम् । तस्माल्लिङ्गेऽर्चयेदीशं यत्र क्वचन शाश्वतम् ॥९७॥
अग्नौ क्रियावतामप्सु व्योम्नि सूर्ये मनीषिणाम् । काष्ठादिष्वेव मूर्खाणां हृदि लिङ्गन्तु योगिनाम् ॥९८॥
यद्यनुत्पन्नविज्ञानो विरक्तः प्रीतिसंयुतः । यावज्जीवं जपेद् युक्तः प्रणवं ब्रह्मणो वपुः ॥९९॥
अथवा शतरुद्रीयं जपेदामरणाद् द्विजः । एकाकी जितचित्तात्मा स याति परमं पदम् ॥१००॥
वसेच्चामरणाद् विप्रा वाराणस्यां समाहितः । सोऽपीश्वरप्रसादेन याति तत् परमं पदम् ॥१०१॥
तत्रोत्क्रमणकाले हि सर्वेषामेव देहिनाम् । ददाति परमं ज्ञानं येन मुच्येत बन्धनात् ॥१०२॥
वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः । तेनैव जन्मना ज्ञानं लब्ध्वा याति शिवं पदम् ॥१०३॥
येऽपि तत्र वसन्तीह नीचा वै पापयोनयः । सर्वे तरन्ति संसारमीश्वरानुग्रहाद् द्विजाः ॥१०४॥
किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् । धर्मान् समाश्रयेत् तस्मान्मुक्तये सततं द्विजाः ॥१०५॥
एतद्रहस्यं वेदानां न देयं यस्य कस्यचित् । धार्मिकायैव दातव्यं भक्ताय ब्रह्मचारिणे ॥१०६॥

## व्यास उवाच

इत्येतदुक्त्वा भगवानात्मयोगमनुत्तमम् । व्याजहार समासीनं नारायणमनामयम् ॥१०७॥
मयैतद् भाषितं ज्ञानं हितार्थं ब्रह्मवादिनाम् । दातव्यं शान्तचित्तेभ्यः शिष्येभ्यो भवता शिवम् ॥१०८॥
उक्त्वैवमथ योगीन्द्रानब्रवीद् भगवानजः । हिताय सर्वभक्तानां द्विजातीनां द्विजोत्तमाः ॥१०९॥
भवन्तोऽपि हि मज्ज्ञानं शिष्याणां विधिपूर्वकम् । उपदेक्ष्यन्ति भक्तानां सर्वेषां वचनान्मम ॥११०॥
अयं नारायणो योऽसावीश्वरो नात्र संशयः । नान्तरं ये प्रपश्यन्ति तेषां देयमिदं परम् ॥१११॥
ममैषा परमा मूर्तिर्नारायणसमाह्वया । सर्वभूतात्मभूता सा शान्ता चाक्षरसंस्थिता ॥११२॥
येऽन्यथा मां प्रपश्यन्ति लोके भेददृशो जनाः । न ते मुक्तिं प्रपश्यन्ति जायन्ते च पुनः पुनः ॥११३॥
ये त्वेनं विष्णुमव्यक्तं माञ्च देवं महेश्वरम् । एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥११४॥
तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् । मामेव सम्प्रपश्यध्वं पूजयध्वं तथैव च ॥११५॥
येऽन्यथा सम्प्रपश्यन्ति मद्भिन्नं देवतान्तरम् । ते यान्ति नरकान् घोरान् नाहं तेषु व्यवस्थितः ॥११६॥
मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् । मोचयामि श्वपाकं वा नारायणविचिन्तकम् ॥११७॥
तस्मादेष महायोगी मद्भक्तैः पुरुषोत्तमः । अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय वै ॥११८॥
एवमुक्त्वा वासुदेवमालिङ्ग्य स पिनाकधृक् । अन्तर्हितोऽभवत् तेषां सर्वेषामेव पश्यताम् ॥११९॥
नारायणोऽपि भगवांस्तापसं वेषमुत्तमम् । जग्राह योगिनः सर्वांस्त्यक्त्वा वै परमं वपुः ॥१२०॥
ज्ञातं भवद्भिरमलं प्रसादात् परमेष्ठिनः । साक्षाद्देवमहेशस्य ज्ञानं संसारनाशनम् ॥१२१॥

गच्छध्वं विज्वराः सर्वे विज्ञानं परमेष्ठिनः । प्रवर्त्तयध्वं शिष्येभ्यो धार्मिकेभ्यो मुनीश्वराः ॥१२२॥
इदं भक्ताय शान्ताय धार्मिकायाहिताग्नये । विज्ञानमैश्वरं देयं ब्राह्मणाय विशेषतः ॥१२३॥
एवमुक्त्वा स विश्वात्मा योगिनां योगवित्तमः । नारायणो महायोगी जगामादर्शनं स्वयम् ॥१२४॥
ऋषयस्तेऽपि देवेशं नमस्कृत्य महेश्वरम् । नारायणञ्च भूतादिं स्वानि स्थानानि भेजिरे ॥१२५॥
सनत्कुमारो भगवान् संवर्त्ताय महामुनिः । दत्तवानैश्वरं ज्ञानं सोऽपि सत्यव्रताय च ॥१२६॥
सनन्दनोऽपि योगीन्द्रः पुलहाय महर्षये । प्रददौ गौतमायाथ पुलहोऽपि प्रजापतिः ॥१२७॥
अङ्गिरा वेदविदुषे भारद्वाजाय दत्तवान् । जैगीषव्याय कपिलस्तथा पञ्चशिखाय च ॥१२८॥
पराशरोऽपि सनकात् पिता मे सर्वतत्त्वदृक् । लेभे तत् परमं ज्ञानं तस्माद्वाल्मीकिराप्तवान् ॥१२९॥
ममोवाच पुरा देवः सतीदेहभवाङ्गजः । वामदेवो महायोगी रुद्रः किल पिनाकधृक् ॥१३०॥
नारायणोऽपि भगवान् देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥१३१॥
यदाहं लब्धवान् रुद्राद्वामदेवादनुत्तमम् । विशेषाद् गिरिशे भक्तिस्तस्मादारभ्य मेऽभवत्॥१३२॥
शरण्यं शरणं रुद्रं प्रपन्नोऽहं विशेषतः । भूतेशं गिरिशं स्थाणुं देवदेवं त्रिशूलिनम् ॥१३३॥
भवन्तोऽपि हि तं देवं शम्भुं गोवृषवाहनम् । प्रपद्यन्तां सपत्नीकाः सपुत्राः शरणं शिवम् ॥१३४॥
वर्त्तध्वं तत्प्रसादेन कर्मयोगेण शङ्करम् । पूजयध्वं महादेवं गोपतिं व्यालभूषणम् ॥१३५॥
एवमुक्ते पुनस्ते तु शौनकाद्या महेश्वरम् । प्रणेमुः शाश्वतं स्थाणुं व्यासं सत्यवतीसुतम् ॥१३६॥
अब्रुवन् हृष्टमनसः कृष्णद्वैपायनं प्रभुम् । साक्षाद्देवं हृषीकेशं शिवं लोकमहेश्वरम् ॥१३७॥
भवत्प्रसादादचला शरण्ये गोवृषध्वजे । इदानीं जायते भक्तिर्या देवैरपि दुर्लभा ॥१३८॥
कथयस्व मुनिश्रेष्ठ कर्मयोगमनुत्तमम् । येनासौ भगवानीशः समाराध्यो मुमुक्षुभिः ॥१३९॥
त्वत्सन्निधावेष सूतः शृणोतु भगवद्वचः । तद्वदाखिललोकानां रक्षणं धर्मसंग्रहम् ॥१४०॥
यदुक्तं देवदेवेन विष्णुना कूर्मरूपिणा । पृष्टेन मुनिभिः सर्वं शक्रेणामृतमन्थने ॥१४१॥
श्रुत्वा सत्यवतीसूनुः कर्मयोगं सनातनम् । मुनीनां भाषितं कृत्स्नं प्रोवाच सुसमाहितः ॥१४२॥
य इमं पठते नित्यं संवादं कृत्तिवाससः । सनत्कुमारप्रमुखैः सर्वपापैः प्रमुच्यते ॥१४३॥
श्रावयेद्वा द्विजान् शुद्धान् ब्रह्मचर्यपरायणान् । यो वा विचारयेदर्थं स याति परमां गतिम् ॥१४४॥
यश्चैतच्छृणुयान्नित्यं भक्तियुक्तो दृढव्रतः । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥१४५॥
तस्मात् सर्वप्रयत्नेन पठितव्यो मनीषिभिः । श्रोतव्यश्चाथ मन्तव्यो विशेषाद् ब्राह्मणैः सदा॥१४६॥

इति श्रीकौर्मे महापुराणे उत्तरभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे योगादिज्ञानयोगो नामैकादशोऽध्यायः ॥ ११ ॥

[ समाप्तेयमीश्वरगीता । ]

# द्वादशोऽध्यायः

[ व्यासगीता १२-३३ अ० ]

## व्यास उवाच

श्रृणुध्वमृषयः सर्वे वक्ष्यमाणं सनातनम् । कर्मयोगं ब्राह्मणानामात्यन्तिकफलप्रदम् ॥ १ ॥
आम्नायसिद्धमखिलं ब्रह्मणानुप्रदर्शितम् । ऋषीणां श्रृण्वतां पूर्वं मनुराह प्रजापतिः ॥ २ ॥
सर्वपापहरं पुण्यमृषिसङ्घैर्निषेवितम् । समाहितधियो यूयं श्रृणुध्वं गदतो मम ॥ ३ ॥
कृतोपनयनो वेदानधीयीत द्विजोत्तमाः । गर्भाष्टमेऽष्टमे वाब्दे स्वगृह्योक्तविधानतः ॥ ४ ॥
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः । भिक्षाचारी ब्रह्मचारी स्वाश्रमे निवसन् सुखम् ॥ ५ ॥
कार्पासमुपवीतार्थं निर्मितं ब्रह्मणा पुरा । ब्राह्मणानां त्रिवृत् सूत्रं कौशं वा वस्त्रमेव वा ॥ ६ ॥
सदोपवीती चैव स्यात् सदा बद्धशिखो द्विजः । अन्यथा यत् कृतं कर्म तद्भवत्ययथाकृतम् ॥ ७ ॥
वसेदविकृतं वासः कार्पासं वा कषायकम् । तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम् ॥ ८ ॥
उत्तरन्तु समाख्यातं वासः कृष्णाजिनं शुभम् । अभावे दिव्यमजिनं रौरवं वा विधीयते ॥ ९ ॥
उद्धृत्य दक्षिणं बाहुं सव्ये बाहौ समर्पितम् । उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जते ॥१० ॥
सव्यं बाहुं समुद्धृत्य दक्षिणे तु धृतं द्विजाः । प्राचीनावीतमित्युक्तं पैत्रे कर्मणि योजयेत् ॥११॥
अग्न्यागारे गवां गोष्ठे होमे जप्ये तथैव च । स्वाध्याये भोजने नित्यं ब्राह्मणानाञ्च सन्निधौ॥१२॥
उपासने गुरूणाञ्च सन्ध्ययोः साधुसङ्गमे । उपवीती भवेन्नित्यं विधिरेष सनातनः ॥१३॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला । मुञ्जाभावे कुशेनाथ ग्रन्थिनैकेन वा त्रिभिः ॥१४॥
धारयेद्बैल्व-पालाशौ दण्डौ केशान्तिकौ द्विजः । यज्ञार्हवृक्षजं वाथ सौम्यमव्रणमेव च ॥१५॥
सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः । कामाल्लोभाद्भयान्मोहात् त्यक्त्वैनां पतितो भवेत्॥१६॥
अग्निकार्यं ततः कुर्यात् सायं प्रातर्यथाविधि । स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥१७॥
देवताभ्यर्चनं कुर्यात् पुष्पैः पत्रैरथाम्बुना । अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्मतः ॥१८॥
असावहं भो नामेति सम्यक् प्रणतिपूर्वकम् । आयुरारोग्यमन्विच्छन् द्रव्यादिपरिवर्जितम् ॥१९॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यःपूर्वाक्षरःप्लुतः॥२०॥
न कुर्याद् योऽभिवादस्य द्विजः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥२१॥
विन्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥२२॥
लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव वा । आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥२३॥
नोदकं धारयेद् भैक्ष्यं पुष्पाणि समिधस्तथा । एवंविधानि चान्यानि न दैवाद्येषु कर्मसु ॥२४॥
ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागत्य शूद्रमारोग्यमेव च ॥२५॥
उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरश्चैव मातामह-पितामहौ ।
वर्णज्येष्ठः पितृव्यश्च सर्वे ते गुरवः स्मृताः ॥२६॥
माता मातामही गुर्वी पितुर्मातुश्च सोदरा । श्वश्रूः पितामही ज्येष्ठा भ्रातृजाया गुरुस्त्रियः ॥२७॥
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतस्तथा । अनुवर्त्तनमेतेषां मनोवाक्कायकर्मभिः ॥२८॥
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः । नैतैरुपविशेत् सार्द्धं विवदेन्नात्र कारणात् ॥२९॥
जीवितार्थमपि द्वेषाद गुरुभिर्नैव भाषणम् । उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥३०॥

गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः । तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥३१॥
यो भावयति या सूते येन विद्योपदिश्यते । ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः॥३२॥
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः । पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥३३॥
यावत् पिता च माता च द्वावेतौ निर्विकारिणौ । तावत् सर्वं परित्यज्य पुत्रः स्यात् तत्परायणः ॥३४॥
पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि । स पुत्रः सकलं धर्ममाप्नुयात् तेन कर्मणा ॥३५॥
नास्ति मातृसमं दैवं नास्ति तातसमो गुरुः । तयोः प्रत्युपकारो हि न कथञ्चन विद्यते ॥३६॥
तयोर्नित्यं प्रियं कुर्यात् कर्मणा मनसा गिरा । न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ॥३७॥
वर्जयित्वा मुक्तिफलं नित्यं नैमित्तिकं तथा । धर्मः सारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥३८॥
सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया । शिष्यो विद्याफलं भुङ्क्ते प्रेत्य वा पूज्यते दिवि॥३९॥
यो भ्रातरं पितृसमं ज्येष्ठं मूर्खोऽवमन्यते । तेन दोषेण स प्रेत्य निरयं घोरमृच्छति ॥४०॥
पुंसां वर्त्मनि तिष्ठेत पूज्यो भर्त्ता च सर्वदा । अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥४१॥
ये नरा भर्तृपिण्डार्थं स्वान् प्राणान् सन्त्यजन्ति हि । तेषामथाक्षयाँल्लोकान् प्रोवाच भगवान् मनुः॥४२॥
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् । असावहमिति ब्रूयुः प्रत्युत्थाय यवीयसः ॥४३॥
अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभवत्पूर्वकन्त्वेनमभिभाषेत धर्मवित् ॥४४॥
अभिवाद्यश्च पूज्यश्च शिरसा वन्द्य एव च । ब्राह्मणः क्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥४५॥
नाभिवाद्यास्तु विप्रेन्द्रैः क्षत्रियाद्याः कथञ्चन । ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥४६॥
ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः । सवर्णेन सवर्णानां कार्यमेवाभिवादनम् ॥४७॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेव गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥४८॥
विद्या कर्म वयो बन्धुर्वित्तं भवति पञ्चमम् । मान्यस्थानानि पञ्चाहुः पूर्वं पूर्वं गुरूत्तरात् ॥४९॥
पञ्चानां त्रिषु वर्णेषु भूयांसि बलवन्ति च । यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः॥५०॥
पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे ह्यचक्षुषे । वृद्धाय भारभुग्नाय रोगिणे दुर्बलाय च ॥५१॥
भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् । निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥५२॥
भवत्पूर्वं चरेद् भैक्ष्यमुपनीतो द्विजोत्तमः । भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥५३॥
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् । भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ॥५४॥
स्वजातीयगृहेष्वेव सार्ववर्णिकमेव वा । भक्षस्य चरणं युक्तं पतितादिषु वर्जितम् ॥५५॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु । ब्रह्मचार्याहरेद् भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम् ॥५६॥
गुरोः कुले न भिक्षेत न ज्ञातिकुल-बन्धुषु । अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥५७॥
सर्वं वा विचरे नामं पूर्वोक्तानामसम्भवे । नियम्य प्रयतो वाचं दिशस्त्वनवलोकयन् ॥५८॥
समाहृत्य तु तद्भैक्ष्यं पचेदन्नममायया । भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ॥५९॥
भक्ष्येण वर्त्तयेन्नित्यमेकान्नादी भवेद् व्रती । भक्ष्येण वृत्तिनो वृत्तिरुपवाससमा स्मृता ॥६०॥
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् । दृष्ट्वा हृष्येत् प्रसीदेच्च ततो भुञ्जीत वाग्यतः ॥६१॥
अनारोग्यमनायुष्यमस्वर्ग्यंश्चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्जयेत् ॥६२॥
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा । नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ॥६३॥
प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत् । शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥६४॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां ब्राह्मणकर्मकथनं नाम द्वादशोऽध्यायः॥१२॥

# त्रयोदशोऽध्यायः

## व्यास उवाच

भुक्त्वा पीत्वा च सुप्त्वा च स्नात्वा रथ्यापसर्पणे। ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥१॥
रेतो - मूत्र - पुरीषाणामुत्सर्गेऽयुक्तभाषणे । ष्ठीवित्वाऽध्ययनारम्भे कास-श्वासागमे तथा ॥ २ ॥
चत्वरं वा श्मशानं वा समाक्रम्य द्विजोत्तमः । सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत् पुनः ॥ ३ ॥
चण्डाल-म्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे । उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यञ्चापि तथाविधम् ॥ ४ ॥
आचामेदश्रुपाते वा लोहितस्य तथैव च । भोजने सन्ध्ययोः स्नात्वा त्यागे मूत्र-पुरीषयोः॥ ५ ॥
आचान्तोऽप्याचमेत् सुप्त्वा सकृत् सकृदथान्यतः । अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव च ॥ ६ ॥
स्त्रीणामथात्मनः स्पर्शे नीलीं वा परिधाय च । उपस्पृशेज्जलञ्चार्द्रतृणं वा भुवमेव वा ॥ ७ ॥
केशानाञ्चात्मनः स्पर्शे वाससोऽक्षालितस्य च । अनुष्णाभिरफेनाभिर्विशुद्धाद्भिश्च वाग्यतः ।
शौचेऽपः सर्वदाचामेदासीनः प्रागुदङ्मुखः ॥ ८ ॥

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छ-शिखोऽपि वा । अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥ ९ ॥
सोपानत्को जलस्थो वा नोष्णीषी चाचमेद् बुधः । न चैव वर्षधाराभिर्हस्तोच्छिष्टे तथा बुधः ॥१०॥
नैकहस्तार्पितजलैर्विना सूत्रेण वा पुनः । न पादुकासनस्थो वा बहिर्जानुकरोऽपि वा ॥११॥
न जल्पन् न हसन् प्रेक्षन् शयानः प्रह्व एव च । नावीक्षितश्च फेनाद्यैरुपेताभिरथापि वा ॥१२॥
शूद्राशुचिकरोन्मुक्तैर्न चोच्छिष्टैस्तथैव च । न चैवाङ्गुलिभिः शब्दं न कुर्यान्नान्यमानसः ॥१३॥
न वर्णरसदुष्टाभिर्न चैवाप्रचुरोदकैः । न पाणिक्षुभिताभिर्वा न बहिष्कक्ष एव वा ॥१४॥
हृद्गाभिः पूयते विप्रः कण्ठ्याभिः क्षत्रियःशुचिः। प्राशिताभिस्तथा वैश्यः स्त्री-शूद्रौ स्पर्शतोऽम्भसः॥१५॥
अङ्गुष्ठमूलरेखायां तीर्थं ब्राह्ममिहोच्यते । अन्तराङ्गुष्ठादेशिन्योः पितृतीर्थमनुत्तमम् ॥१६॥
कनिष्ठामूलतः पश्चात् प्राजापत्यं प्रचक्षते । अङ्गुल्यग्रे स्मृतं दैवं तदेवार्षं प्रकीर्त्तितम् ॥१७॥
मूले वा दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम् । तदेव सौमिकं तीर्थमेवं ज्ञात्वा न मुह्यति ॥१८॥
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् । कायेन वाथ दैवेन न तु पैत्रेण वै द्विजाः ॥१९॥
त्रिराचामेदपः पूर्वं ब्राह्मणः प्रयतस्ततः । संवृत्ताङ्गुष्ठमूलेन सुखं वै समुपस्पृशेत् ॥२०॥
अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्रद्वयं ततः । तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥२१॥
कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् । सर्वाङ्गुलीभिर्बाहू च हृदयन्तु तलेन वा ।
नाभिः शिरश्च सर्वाभिरङ्गुष्ठेनाथ वा द्वयम् ॥२२॥

त्रिः प्राश्नीयाद्यदम्भस्तु सुप्रीतास्तेन देवताः । ब्रह्मा विष्णुर्महेशश्च भवन्तीत्यनुशुश्रुम ॥२३॥
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् । संस्पृष्टयोर्लोचनयोः प्रीयेते शशि - भास्करौ ॥२४॥
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये । श्रोत्रयोः स्पृष्टयोस्तद्वत् प्रीयेते चानिलानलौ ॥२५॥
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः । मूर्ध्नि संस्पर्शनादेव प्रीतः स पुरुषो भवेत् ॥२६॥
नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं नयन्ति याः । दन्तवद्दन्तलग्नेषु जिह्वास्पर्शे शुचिर्भवेत् ॥२७॥
स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् । भूमिगैस्तैः समा ज्ञेया न तैरप्रयतो भवेत् ॥२८॥
मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे । फले मूले चेक्षुदण्डे न दोषं प्राह वै मनुः ॥२९॥
प्रचुरान्नोदपानेषु यद्युच्छिष्टो भवेद् द्विजः । भूमौ निक्षिप्य तद् द्रव्यमाचम्याभ्युक्षयेत् ततः॥३०॥

तैजसं वा समादाय यद्युच्छिष्टो भवेद् द्विजः । भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत् तु तत् ॥३१॥
यद्यद् द्रव्यं समादाय भवेदुच्छेषणान्वितः । अनिधायैव तद्द्रव्यमाचान्तःशुचितामियात् ।
वस्त्रादिषु विकल्पः स्यान्न स्पृष्ट्वा चैवमेव हि ॥३२॥
अरण्येऽनुदके रात्रौ चौर व्याघ्राकुले पथि । कृत्वा मूत्र पुरीषं वा द्रव्यहस्तो न दुष्यति ॥३३॥
निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः । अह्नि कुर्याच्छकृन्मूत्रं रात्रौ चेद्दक्षिणामुखः ॥३४॥
अन्तर्द्धाय महीं काष्ठैः पत्रैर्लोष्टैस्तृणेन वा । प्रावृत्य च शिरः कुर्याद्विण्मूत्रस्य विसर्जनम् ॥३५॥
छाया-कूप नदी-गोष्ठ - चैत्यान्तः-पथि - भस्मसु । अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत् ॥३६॥
न गोपथे न कृष्टे वा महावृक्षे न शाद्वले । न तिष्ठन् वा न निर्वासा न च पर्वतमस्तके ॥३७॥
न जीर्णदेवायतने न वल्मीके कदाचन । न ससत्त्वेषु गर्त्तेषु न गच्छन् वा समाचरेत् ॥३८॥
तुषाङ्गारकपालेषु राजमार्गे तथैव च । न क्षेत्रे न विले वापि न तीर्थे न चतुष्पथे ॥३९॥
नदीनदसमीपे वा नोषरे न पराशुचौ । न सोपानत्पादुको न च्छत्री नान्तरीक्षके ॥४०॥
न चैवाभिमुखं स्त्रीणां गुरु - ब्राह्मणयोर्गवाम् । न देवदेवालययोरपामपि कदाचन ॥४१॥
न ज्योतींषि न वीक्षन् वा न वाय्वभिमुखोऽथवा । प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च ॥४२॥
आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षणम् । कुर्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥४३॥
नाहरेन्मृत्तिकां विप्रः पांशुलान्न च कर्दमात् । न मार्गान्नोषराद्देशाच्छौचोच्छिष्टां तथैव च ॥४४॥
न देवायतनात् कूपाद् ग्रामादन्तर्जलात् तथा । उपस्पृशेत् ततो नित्यं पूर्वोक्तेन विधानतः ॥४५॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायामाचमनादिकर्मयोगो नाम

त्रयोदशोऽध्यायः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः

## व्यास उवाच

एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः । आहूतोऽध्ययनं कुर्याद्वीक्षमाणो गुरुर्मुखम् ॥ १ ॥
नित्यमुद्यतपाणिः स्यात् सन्ध्याचारसमन्वितः । आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ २ ॥
प्रतिश्रवण-सम्भाषे शयानो न समाचरेत् । नासीनो न च भुञ्जानो न तिष्ठन् न पराङ्मुखः ॥ ३ ॥
नीचं शय्यासनञ्चास्य सर्वदा गुरुसन्निधौ । गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् ॥ ४ ॥
नोदाहरेदस्य नाम परोक्षमपि केवलम् । न चैवास्यानुकुर्वीत गति-भाषित-चेष्टितम् ॥ ५ ॥
गुरोर्यत्र प्रतीवादो निन्दा चापि प्रवर्त्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ ६ ॥
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः । न चैवास्योत्तरं ब्रूयात् स्थिते नासीत सन्निधौ ॥ ७ ॥
उदकुम्भं कुशान् पुष्पं समिधोऽस्याहरेत् सदा । मार्जनं लेपनं नित्यमङ्गानां वा समाचरेत् ॥ ८ ॥
नास्य निर्माल्य-शयनं पादुकोपानहावपि । आक्रमेदासनं छायामासन्दीं वा कदाचन ॥ ९ ॥
साधयेद्दन्तकाष्ठादीन् कृत्यञ्चास्मै निवेदयेत् । अनापृच्छ्य न गन्तव्यं भवेत् प्रियहिते रतः ॥१०॥

न पादौ सारयेदस्य सन्निधाने कदाचन । जृम्भितं हसितञ्चैव कण्ठप्रावरणं तथा ।
वर्जयेत् सन्निधौ नित्यमथास्फोटतमं वचः ॥११॥
यथाकालमधीयीत यावन्न विमना गुरुः । आसीताथ गुरोरुक्ते फलके वा समाहितः ॥१२॥
आसने शयने याने नैव तिष्ठेत् कदाचन । धावन्तमनुधावेत् तं गच्छन्तञ्चानुगच्छति ॥१३॥
गोऽश्वोष्ट्र-यान-प्रासाद-प्रस्तरेषु कटेषु च । आसीत गुरुणा सार्द्धं शिलाफलक-नौषु च ॥१४॥
जितेन्द्रियः स्यात् सततं वश्यश्चाक्रोधनः शुचिः । प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥१५॥
गन्धं माल्यं रसं भव्यं शुक्लं प्राणिविहिंसनम् । अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥१६॥
कामं लोभं भयं निद्रां गीत-वादित्र-नर्त्तनम् । द्यूतं जनपरीवादं स्त्रीप्रेक्षालम्भनं तथा ।
परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ॥१७॥
उदकुम्भं समनसो गोशकृन्मृत्तिकां कुशान् । आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत् ॥१८॥
कृतञ्च लवणं सर्वं वर्ज्यं पर्युषितञ्च यत् । अनृत्यदर्शी सततं भवेद् गीतादिनिस्पृहः ॥१९॥
नादित्यं वै समीक्षेत न चरेद्दन्तधावनम् । एकान्तमशुचि-स्त्रीभिः शूद्रान्त्यैरभिभाषणम् ॥२०॥
गुरुप्रियार्थं सर्वं हि प्रयुञ्जीत न कामतः । मलापकर्षणं स्नानं नाचरेद्वै कथञ्चन ॥२१॥
न कुर्यान्मानसं विप्रो गुरोस्त्यागे कदाचन । मोहाद्वा यदि वा लोभात् त्यक्त्वैनं पतितो भवेत् ॥२२॥
लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव च । आददीत यतो ज्ञानं न तं द्रुह्येत् कदाचन ॥२३॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य मनुस्त्यागं समब्रवीत् ॥२४॥
गुरोर्गुरौ सन्निहिते गुरुवद्भक्तिमाचरेत् । न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥२५॥
विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु । प्रतिषेधत्सु चाधर्मं हितञ्चोपदिशत्स्वपि ॥२६॥
श्रेयस्तु गुरुवद्वृत्तिं नित्यमेव समाचरेत् । गुरुपुत्रेषु दारेषु गुरोश्चैव स्वबन्धुषु ॥२७॥
बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि । अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥२८॥
उत्सादनं वै गात्राणां स्नापनोच्छिष्टभोजने । न कुर्याद् गुरुपुत्रस्य पादयोः शौचमेव च ॥२९॥
गुरुवत् परिपूज्याथ सवर्णा गुरुयोषितः । असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥३०॥
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च । गुरुपत्न्या न कार्याणि केशानाञ्च प्रसाधनम् ॥३१॥
गुरुपत्नी तु युवती नाभिवाद्येह पादयोः । कुर्वीत वन्दनं भूमावसावहमिति ब्रुवन् ॥३२॥
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् । गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥३३॥
भ्रातृष्वसा मातुलानी श्वश्रूश्चाथ पितृष्वसा । सम्पूज्या गुरुपत्नी च समास्ता गुरुभार्यया ॥३४॥
मातुर्भार्योपसंग्राह्या सवर्णाह्न्यहन्यपि । विप्रस्य तूपसंग्राह्या ज्ञाति-सम्बन्धियोषितः ॥३५॥
पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्यपि । मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥३६॥
एवमाचारसम्पन्नमात्मवन्तमदाम्भिकम् । वेदमध्यापयेद्धर्मं पुराणाङ्गानि नित्यशः ॥३७॥
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् । हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥३८॥
आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । सूक्तार्थदोऽरसः साधुः स्वाध्यायाय्यादेशधर्मतः ॥३९॥
कृतज्ञश्च तथाद्रोही मेधावी तूपकृन्नरः । आप्तःप्रियोऽथ विधिवत् षडध्याप्या द्विजातयः॥४०॥
एतेषु ब्रह्मणो दानमन्यत्र च यथोदितान् । आचम्य संयतो नित्यमधीयीत ह्युदङ्मुखः ॥४१॥
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारभेत्॥४२॥
अनुकूलं समासीनः पवित्रैश्चैव पावितः । प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥४३॥
ब्राह्मणः प्रणवं कुर्यादन्ते च विधिवद्द्विजाः । कुर्यादध्ययनं नित्यं ब्रह्माञ्जलिकरस्थितः ॥४४॥

सर्वेषामेव भूतानां वेदश्चक्षुः सनातनम् । अधीयीताप्ययं नित्यं ब्राह्मण्याद्धीयतेऽन्यथा ॥४५॥
योऽधीयीत ऋचो नित्यं क्षीराहुत्या स देवताः । प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः सदैव हि ॥४६॥
यजूंष्यधीते नियतं दध्ना प्रीणाति देवताः । सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ॥४७॥
अथर्वाङ्गिरसो नित्यं मध्वा प्रीणाति देवताः । वेदाङ्गानि पुराणानि मांसैश्च तर्पयेत् सुरान् ॥४८॥
अपां समीपे नियतो नित्यकं विधिमाश्रितः । गायत्रीमप्यधीयीत गत्वारण्यं समाहितः ॥४९॥
सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्त्तितः ।५०॥
गायत्रीश्चैव वेदांस्तु तुलयाऽतोलयत् प्रभुः । एकतश्चतुरो वेदान् गायत्रीञ्च तथैकतः ॥५१॥
ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम् । ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयान्वितः ॥५२॥
पुराकल्पे समुत्पन्ना भूर्भुवःस्वः सनातनाः । महाव्याहृतयस्तिस्रः सर्वाशुभनिबर्हणाः ।५३॥
प्रधानं पुरुषः कालो विष्णुर्ब्रह्मा महेश्वरः । सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः॥५४॥
ओङ्कारस्तत् परं ब्रह्म सावित्री स्यात् तदक्षरम् । एष मन्त्रो महायोगः सारात्सार उदाहृतः ॥५५॥
योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥५६॥
गायत्री वेदजननी गायत्री लोकपावनी । उद्धारं वक्ष्यते तस्याः शृणुध्वं मुनिपुङ्गवाः ॥५७॥
दक्षिणाग्राः पञ्च रेखाः पश्चिमाग्राङ्कसंख्यकाः । लिखेद्रेखाः प्रयत्नेन द्वात्रिंशत् कोष्ठकं भवेत् ॥५८॥
गायत्रीं विलिखेत् तेषु द्वात्रिंशद्वर्णरूपिणीम् । पूरयेत् प्रतिलोमेन वामावर्त्तेन चोच्चरेत् ॥५९॥
र्वे स्य प्र से ज नः व तु रे धी चो सा र यो दे वि । णि म द व रो यो र्गो त्स यं हि या दोम् पधि भ त॥६०॥
एवं क्रमेण चोद्धृत्य प्रजपेत् पङ्कमोचिनीम् । द्विजानां ब्रह्मनिष्ठानां ब्रह्मण्यपदरूपिणीम् ।
न गायत्र्याः परं जप्यमेतद्विज्ञाय मुच्यते ॥६१॥
श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः । आषाढ्यां प्रोष्ठपद्यां वा वेदोपकरणं स्मृतम् ॥६२॥
उत्सृज्य ग्रामनगरं मासान् विप्रोऽर्धपञ्चमान् । अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ॥६३॥
पुष्ये तु च्छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजाः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥६४॥
छन्दांस्यूर्द्ध्वमतोऽभ्यस्येच्छुक्लपक्षेषु वै द्विजाः । वेदाङ्गानि पुराणानि कृष्णपक्षेषु मानवः ॥६५॥
इमान् नित्यमनध्यायानधीयानो विवर्जयेत् । अध्यापनं प्रकुर्वाणो ह्यनध्यायान् विवर्जयेत् ॥६६॥
कर्णश्रवेऽनिले रात्रौ दिवापांशुसमुद्गमे । विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेष्वाह प्रजापतिः ॥६७॥
निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्जने । एतानाकालिकान् विद्यादनध्यायानृतावपि ॥६८॥
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने । सज्योतिः स्यादनध्यायमनृतौ चाभ्रदर्शने ॥६९॥
नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च । धर्मनैपुण्यकामानां पूतिगन्धे च नित्यशः ॥७०॥
अन्तःशवगते ग्रामे वृषलस्य च सन्निधौ । अनध्यायो रुद्यमाने समवाये जनस्य च ॥७१॥
उदके मध्यरात्रे च विण्मूत्रे च विवर्जयेत् । उच्छिष्टः श्राद्धभुक् चैव मनसापि न चिन्तयेत्॥७२॥
प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् । त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ॥७३॥
यावदेकान्नदिष्टस्य स्नेहो गन्धश्च तिष्ठति । विप्रस्य विपुले देहे तावद्ब्रह्म न कीर्त्तयेत् ॥७४॥
शयानः प्रौढपादश्च कृत्वा वै चावसिक्थकाम् । नाधीयीतामिषं जग्ध्वा सूतकाद्यन्नमेव च ॥७५॥
नीहारे वाणपाति च सन्ध्ययोरुभयोरपि । अमावास्यां चतुर्दश्यां पौर्णमास्यष्टमीषु च ॥७६॥
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥७७॥

मार्गशीर्षे तथा पौषे माघमासे तथैव च । तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे तु सूरिभिः ॥७८॥
श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च । कदाचिदपि नाध्येयं कोविदार-कपित्थयोः ॥७९॥
समानविद्ये च मृते तथा सब्रह्मचारिणि । आचार्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम् ॥८०॥
छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः । हिंसन्ति राक्षसास्तेषु तस्मादेतानि वर्जयेत् ॥८१॥
नैत्यिके नास्त्यनध्यायः सन्ध्योपासन एव च । उपाकर्मणि कर्मान्ते होममन्त्रेषु चैव हि ॥८२॥
एकामृचमथैकं वा यजुः सामाथवा पुनः । अष्टकाद्यास्वधीयीत मारुते चातिवायति ॥८३॥
अनध्यायस्तु नाङ्गेषु नेतिहास - पुराणयोः । न धर्मशास्त्रेष्वन्येषु पर्वाण्येतानि वर्जयेत् ॥८४॥
एष धर्मः समासेन कीर्त्तितो ब्रह्मचारिणाम् । ब्रह्मणाभिहितः पूर्वमृषीणां भावितात्मनाम् ॥८५॥
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजाः । स संमूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः ॥८६॥
न वेदपाठमात्रेण सन्तुष्येदेष वै द्विजः । एवमाचारहीनस्तु पङ्के गौरिव सीदति ॥८७॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् । स सान्वयः शूद्रकल्पः पात्रतां न प्रपद्यते ॥८८॥
यदि चात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरौ । युक्तः परिचरेदेनमा शरीराभिघातनात् ॥८९॥
गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम् । अभ्यसेत् स तदा नित्यं ब्रह्मनिष्ठः समाहितः ॥९०॥
सावित्रीं शतरुद्रीयं वेदाङ्गानि विशेषतः । अभ्यसेत् सततं युक्तो भस्मस्नानपरायणः ॥९१॥

एतद्विधानं परमं पुराणं वेदाङ्गतः सम्यगिहेरितं वः ।
पुरा महर्षिप्रवरानुपृष्टः स्वायम्भुवो यन्मनुराह देवः ॥९२॥
एवमीश्वरसमर्पितान्तरो योऽनुतिष्ठति विधिं विधानवित् ।
मोहजालमपहाय सोऽमृतं याति तत् पदमनामयं शिवम् ॥९३॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां वेदाध्ययनादिक्रमनियमो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः

### व्यास उवाच

वेदं वेदौ तथा वेदान् विन्द्याद्वा चतुरो द्विजाः । अधीत्य चाभिगम्यार्थं ततःस्नायाद् द्विजोत्तमाः ॥ १ ॥
गुरवे तु धनं दत्वा स्नायीत तदनुज्ञया । चीर्णव्रतोऽथ युक्तात्मा स शक्तः स्नातुमर्हति ॥ २ ॥
वैणवीं धारयेद्यष्टिमन्तर्वासस्तथोत्तरम् । यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् ॥ ३ ॥
छत्रञ्चोष्णीषममलं पादुके चाप्युपानहौ । रौक्मे च कुण्डले धार्ये व्युप्तकेश-नखः शुचिः ॥ ४ ॥

स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत् । अन्यत्र काञ्चनाद् द्विप्रो न रक्तां बिभृयात् स्रजम् ॥५॥
शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः । न जीर्णमलवद्वासा भवेद्वै विभवे सति ॥ ६ ॥
न रक्तमुल्वणञ्चान्यधृतं वासो न कुण्डिकाम् । नोपानहो स्रजं वाथ पादुके न प्रयोजयेत् ॥ ७ ॥
उपवीतमलङ्कारं दर्भान् कृष्णाजिनानि च । नापसव्यं परीदध्याद्वासो न विकृतञ्च यत् ॥ ८ ॥
आहरेद्विधिवद्दारान् सदृशानात्मनः शुभान् । रूप-लक्षणसंयुक्तान् योनिदोषविवर्जितान् ॥ ९ ॥
अमातृगोत्रप्रभवामसमानर्षिगोत्रजाम् । आहरेद्ब्राह्मणो भार्यां शील-शौचसमन्विताम् ॥१०॥
ऋतुकालाभिगामी स्याद् यावत् पुत्रोऽभिजायते । वर्जयेत् प्रतिषिद्धानि प्रयत्नेन दिनानि तु ॥११॥
षष्ठ्यष्टमीं पञ्चदशीं द्वादशीञ्च चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥१२॥
आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम् । व्रतानि स्नातको नित्यं पावनानि च पालयेत् ॥१३॥
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । अकुर्वाणः पतत्याशु नरकान् याति भीषणान् ॥१४॥
अभ्यसेत् प्रयतो वेदं महायज्ञांश्च भावयेत् । कुर्याद् गृह्याणि कर्माणि सन्ध्योपासनमेव च॥१५॥
सख्यं समाधिकैः कुर्यादर्चयेदीश्वरं सदा । दैवतान्यधिगच्छेत कुर्याद्भार्याभिपोषणम् ॥१६॥
न धर्मं ख्यापयेद्विद्वान् न पापं गूहयेदपि । कुर्वीतात्महितं नित्यं सर्वभूतानुकम्पनम् ॥१७॥
वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेदवाग्बुद्धिसारूप्यमाचरेद्विहरेत् सदा ॥१८॥
श्रुति-स्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः । तमाचारं निषेवेत नेहेतान्यत्र कुत्रचित् ॥१९॥
येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां तेन मार्गं गच्छंस्तरिष्यति ॥२०॥
नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् । सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते ॥२१॥
सन्ध्या-स्नानपरो नित्यं ब्रह्मयज्ञपरायणः । अनसूयी मृदुर्दान्तो गृहस्थः प्रेत्य वर्द्धते ॥२२॥
वीतराग - भय - क्रोधो लोभ - मोहविवर्जितः । सावित्रीजापनिरतः श्राद्धकृन्मुच्यते गृही ॥२३॥
मातापित्रोर्हिते युक्तो गो-ब्राह्मणहिते रतः । दाता यज्वा देवभक्तो ब्रह्मलोके महीयते ॥२४॥
त्रिवर्गसेवी सततं देवतानाञ्च पूजनम् । कुर्यादहरहर्नित्यं नमस्येत् प्रयतः सुरान् ॥२५॥
विभागशीलः सततं क्षमायुक्तो दयालुकः । गृहस्थस्तु समाख्यातो न गृहेण गृही भवेत् ॥२६॥
क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः । अध्यात्मनिरतज्ञानमेतद्ब्राह्मणलक्षणम् ॥२७॥
एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः । यथाशक्ति चरेत् कर्म निन्दितानि विवर्जयेत् ॥२८॥
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् । गृहस्थो मुच्यते बन्धान्नात्र कार्या विचारणा ॥२९॥
विगर्हातिक्रमाक्षेप - हिंसा - बन्ध - वधात्मनाम् । अन्यमन्युसमुत्थानां दोषाणां मर्षणं क्षमा ॥३०॥
स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् । दयेति मुनयः प्राहुः साक्षाद्धर्मस्य साधनम् ॥३१॥
चतुर्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमिति तद्विद्याद्येन धर्मो विवर्द्धते ॥३२॥
अधीत्य विधिवद्वेदानर्थञ्चैवोपलभ्य तु । धर्मकार्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते ॥३३॥
सत्येन लोकान् जयति सत्यं तत् परमं पदम् । यथाभूतप्रवादन्तु सत्यमाहुर्मनीषिणः ॥३४॥

दमः शरीरोपरमः शमः प्रज्ञाप्रसादजः । अध्यात्ममक्षरं विद्याद्यत्र गत्वा न शोचति ॥३५॥
यया स देवो भगवान् विद्यया वेद्यते परः । साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्त्तितम् ॥३६॥
तन्निष्ठस्तत्परो विद्वान् नित्यमक्रोधनः शुचिः । महायज्ञपरो विद्वान् लभते तत्त्वमुत्तमम् ॥३७॥
धर्मस्यायतनं यत्नाच्छरीरं परिपालयेत् । न च देहं विना रुद्रः पुरुषो विद्यते परः ॥३८॥
नित्यं धर्मार्थकामेषु युज्येत नियतो द्विजः । न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ॥३९॥
सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् । धर्मो हि भगवान् देवो गतिः सर्वेषु जन्तुषु ॥४०॥
भूतानां प्रियकारी स्यान्न परद्रोहकर्मधीः । न वेद-देवतां निन्दां कुर्यात् तैश्च न संवदेत् ॥४१॥
यस्त्विमं नियतं विप्रो धर्माध्यायं पठेच्छुचिः । अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते ॥४२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां धर्माध्यायो
नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

# षोडशोऽध्यायः

## व्यास उवाच

न हिंस्यात् सर्वभूतानि नानृतं वा वदेत् क्वचित् । नाहितं नाप्रियं ब्रूयान्न स्तेनः स्यात् कथञ्चन ॥१॥
तृणं वा यदि वा शाकं मृदं वा जलमेव वा । परस्यापहरन् जन्तुर्नरकं प्रतिपद्यते ॥ २ ॥
न राज्ञः प्रतिगृह्णीयान्न शूद्रात् पतितादपि । न चान्यस्मादशक्तश्चेन्निन्दिताद्वर्जयेद्बुधः ॥ ३ ॥
नित्यं याचनको न स्यात् पुनस्तं नैव याचयेत् । प्राणानपहरत्येष याचकस्तस्य दुर्मतिः ॥ ४ ॥
न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमाः । ब्रह्मस्वं वा नापहरेदापद्यपि कदाचन ॥५॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । देवस्वञ्चापि यत्नेन सदा परिहरेत् ततः ॥६॥
पुष्पे शाकोदके काष्ठे तथा मूले तृणे फले । अदत्तादानमस्तेयं मनुः प्राह प्रजापतिः ॥७॥
ग्रहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजैः । नैकस्मादेव नियतमननुज्ञाय केवलम् ॥८॥
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः । धर्मार्थं केवलं विप्रा ह्यन्यथा पतितो भवेत् ॥९॥
तिल-मुद्ग-यवादीनां मुष्टिर्ग्राह्या पथि स्थितैः । क्षुधार्त्तैर्नान्यथा विप्रा धर्मविद्भिरिति स्थितिः॥१०॥
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् । व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रलम्भनम् ॥११॥
प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः । छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥१२॥
अलिङ्गी लिङ्गिवेशेन यो वृत्तिमुपजीवति । स लिङ्गिनां हरेदेनस्तिर्यग्योनौ च जायते ॥१३॥
वैडालव्रतिनः पापा लोके धर्मविनाशकाः । सद्यः पतन्ति पापेषु कर्मणस्तस्य तत् फलम् ॥१४॥
पाषण्डिनो विकर्मस्थान् वामाचारांस्तथैव च । पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत्॥१५॥
वेदनिन्दारतान् मर्त्यान् देवनिन्दारतांस्तथा । द्विजनिन्दारतांश्चैव मनसापि न चिन्तयेत् ॥१६॥
याजनं योनिसम्बन्धं सहवासञ्च भाषणम् । कुर्वाणः पतते जन्तुस्तस्माद्यत्नेन वर्जयेत् ॥१७॥
देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः । ज्ञानापवादो नास्तिक्यं तस्मात् कोटिगुणाधिकः ॥१८॥

गोभिश्च दैवतैर्विप्रैः कृष्या राजोपसेवया । कुलान्यकुलतां यान्ति याति हीनानि वृत्ततः ॥१९॥
कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥२०॥
अनृतात् पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् । अश्रौतधर्मचरणात् क्षिप्रं नश्यति वै कुलम् ॥२१॥
अश्रोत्रियेषु वै दानाद्वृषलेषु तथैव च । विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥२२॥
नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम् । न शूद्रराज्ये निवसेन्न पाषण्डजनैर्वृते ॥२३॥
हिमवद्विन्ध्ययोर्मध्ये पूर्व-पश्चिमयोः शुभम् । मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विजः ॥२४॥
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः । पुण्याश्च विश्रुता नद्यस्तत्र वा निवसेद्द्विजः॥२५॥
अर्द्धक्रोशान्नदीकूलं वर्जयित्वा द्विजोत्तमः । नान्यत्र निवसेत् पुण्यं नान्त्यजग्रामसन्निधौ ॥२६॥
न संवसेच्च पतितैर्न चण्डालैर्न पुक्कशैः । न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥२७॥
एकशय्यासनं पंक्तिर्भाण्डपक्वान्नमिश्रणम् । याजनाध्यापने योनिस्तथैव सहभोजनम् ॥२८॥
सहाध्यायस्तु दशमः सहयाजनमेव च । एकादशैते निर्दिष्टा दोषाः सङ्करसंज्ञिताः ॥२९॥
समीपे वाप्यवस्थानात् पापं संक्रमते नृणाम् । तस्मात् सर्वप्रयत्नेन सङ्करं वर्जयेद्बुधः ॥३०॥
एकपंक्त्यपविष्टा ये न स्पृशन्ति परस्परम् । भस्मना कृतमर्यादा न तेषां सङ्करो भवेत् ॥३१॥
अग्निना भस्मना चैव सलिलेन विशेषतः । द्वारेण स्तम्भमार्गेण षड्भिः पंक्तिर्विभिद्यते ॥३२॥
न कुर्याच्छुष्कवैराणि विवादश्चैव पैशुनम् । परक्षेत्रे गां चरन्तीं न चाचक्षीत कस्यचित् ॥३३॥
न संवसेत् सूतकिना न कश्चिन्मर्मणि स्पृशेत् । न सूर्यपरिवेशं वा नेन्द्रचापं शवाग्निकम् ॥३४॥
परस्मै कथयेद्विद्वाञ्छशिनं वा कदाचन । न कुर्याद्बहुभिः सार्द्धं विवादं बन्धुभिस्तथा ॥३५॥
आत्मनः प्रतिकूलानि परेषां न समाचरेत् । तिथिं पक्षस्य न ब्रूयान्न नक्षत्राणि निर्दिशेत्॥३६॥
नोदक्यामभिभाषेत नाशुचिं वा द्विजोत्तमः । न देव - गुरु - विप्राणां दीयमानन्तु वारयेत् ॥३७॥
न चात्मानं प्रशंसेद्वा परनिन्दाश्च वर्जयेत् । वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्जयेत् ॥३८॥
यस्तु देवानृषीन् विप्रान् वेदान् वा निन्दति द्विजः । न तस्य निष्कृतिर्दृष्टा शास्त्रेष्विह मुनिश्वराः ॥३९॥
निन्दयेद्वै गुरून् देवान् वेदं वा सोपवृंहणम् । कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ॥४०॥
तूष्णीमासीत निन्दायां न ब्रूयात् किञ्चिदुत्तरम् । कर्णौ पिधाय गन्तव्यं न चैतानवलोकयेत् ॥४१॥
वर्जयेद्वै रहस्यञ्च परेषां गूहयेद्बुधः । विवादं स्वजनैः सार्द्धं न कुर्याद्वै कदाचन ॥४२॥
न पापं पापिनं ब्रूयादपापं वा द्विजोत्तमम् । सत्येन तुल्यदोषः स्यान्मिथ्याद्दिदोषवान् भवेत्॥४३॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम्॥४४॥
ब्रह्महत्या - सुरापाणे स्तेय - गुर्वङ्गनागमे । दृष्टं विशोधनं सद्भिर्नास्ति मिथ्याभिशंसने ॥४५॥
नेक्षेतोद्यन्तमादित्यं शशिनञ्चानिमित्ततः । नास्तं यान्तं न वारिस्थं नोपसृष्टं न मध्यगम्॥४६॥
तिरोहितं वाससा वा नादर्शान्तरगामिणम् । न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ॥४७॥
न च मूत्रं पुरीषं वा न च संस्पृष्टमैथुनम् । नाशुचिः सूर्यसोमादीन् ग्रहानालोकयेद्बुधः ॥४८॥
पतित-व्यंग-चण्डालानुच्छिष्टान् नावलोकयेत् । नाभिभाषेत च परमुच्छिष्टो वावगुण्ठितः ॥४९॥
न स्पृशेत् प्रेतसंस्पर्शं न क्रुद्धस्य गुरोर्मुखम् । न तैलोदकयोश्छायां न पत्नीं भोजने सति ।
नायुक्तबन्धनां गां वा नोन्मत्तं मत्तमेव वा ॥५०॥
नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत मेहतीम् । क्षुवन्तीं जृम्भमाणां वा नासनस्थां यथासुखम्॥५१॥
नोदके चात्मनो रूपं शुभं वाशुभमेव वा । न लङ्घयेच्च मूत्रं वा नाधितिष्ठेत् कदाचन ॥५२॥
न शूद्राय मतिं दद्यात् कृशरं पायसं दधि । नोच्छिष्टं वा घृतमधु न च कृष्णाजिनं हविः ॥५३॥

न चैवास्मै व्रतं दद्यान्न च धर्मं वदेद्बुधः । न च क्रोधवशं गच्छेद्द्वेषं रागञ्च वर्जयेत् ॥५४॥
लोभं दम्भं तथा यत्नादसूयां ज्ञानकुत्सनम् । मानं मोहं तथा क्रोधं द्वेषञ्च परिवर्जयेत् ॥५५॥
न कुर्यात् कस्यचित् पीडां सुतं शिष्यञ्च ताडयेत् । न हीनानुपसेवेत न च तीक्ष्णमतीन् क्वचित् ॥५६॥
नात्मानञ्चावमन्येत दैन्यं यत्नेन वर्जयेत् । न विशिष्टानसत्कुर्यान्नात्मानं वा शपेद्बुधः ॥५७॥
न नखैर्विलिखेद्भूमिं गाञ्च संवेशयेन्न हि । न नदीषु नदीं ब्रूयात् पर्वते न च पर्वतान् ॥५८॥
आवासे भोजने वापि न त्यजेत् सहयायिनम् । नावगाहेदपो नग्नो वह्निञ्चापि व्रजेत् पदा ॥५९॥
शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् । न शस्त्रसर्पैः क्रीडेत न स्वानि खानि च स्पृशेत्॥६०॥
रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् । न पाणि-पाद-वाङ्नेत्र चापल्यं समुपाश्रयेत्॥६१॥
न शिश्नोदरचापल्यं न च श्रवणयोः क्वचित् । न चाङ्गनखवाद्यं वै कुर्यान्नाञ्जलिना पिबेत् ॥६२॥
नाभिहन्याज्जलं पद्भ्यां पाणिना वा कदाचन । न शातयेदिष्टकाभिः फलानि न फलेन च ॥६३॥
न म्लेच्छभाषां शिक्षेत नाकर्षेच्च पदासनम् । नखभेदनमास्फोटं छेदनं वा विलेखनम् ॥६४॥
कुर्याद्विमर्दनं धीमान् नाकस्मादेव निष्फलम् । नोत्सङ्गे भक्षयेद्भक्ष्यान् वृथाचेष्टाञ्च नाचरेत्॥६५॥
न नृत्येदथवा गायेन्न वादित्राणि वादयेत् । न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः॥६६॥
न लौकिकैस्तवैर्देवांस्तोषयेद भेषजैरपि । नाक्षैः क्रीडेन्न धावेत नाप्सु विण्मूत्रमाचरेत्॥६७॥
नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् । न गच्छेन्न पठेद्वापि न चैव स्वशिरः स्पृशेत् ॥६८॥
न दन्तैर्नख-रोमाणि च्छिन्द्यात् सुप्तं न बोधयेत् । न बालातपमासेवेत् प्रेतधूमं विवर्जयेत् ॥६९॥
नैकः सुप्याच्छून्यगेहे स्वयं नोपानहौ हरेत् । नाकारणाद्वा निष्ठीवेन्न बाहुभ्यां नदीं तरेत् ॥७०॥
न पादक्षालनं कुर्यात् पादेनैव कदाचन । नाग्नौ प्रतापयेत् पादौ न कांस्ये धावयेद्बुधः॥७१॥
नाभिप्रतारयेद्देवं ब्राह्मणान् गामथापि वा । वाय्वग्नि-गुरु-विप्रान् वा सूर्यं वा शशिनं प्रति॥७२॥
अशुद्धः शयनं यानं स्वाध्यायं स्नान-भोजनम् । बहिर्निष्क्रमणञ्चैव न कुर्वीत कथञ्चन ॥७३॥
स्वप्नमध्ययनं यानमुच्चारं भोजनं गतिम् । उभयोः सन्ध्ययोर्नित्यं मध्याह्ने तु विवर्जयेत् ॥७४॥
न स्पृशेत् पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान् । न चैवान्नं पदा वापि न देवप्रतिमां स्पृशेत् ॥७५॥
नाशुद्धोऽग्निं परिचरेन्न देवान् कीर्त्तयेदृषीन् । नावगाहेदगाधाम्बु धारयेन्नाग्निमेकतः ॥७६॥
न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वा जलम् । नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ॥७७॥
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा । व्यतिक्रमेन्न स्रवन्तीं नाप्सु मैथुनमाचरेत् ॥७८॥
चैत्यं वृक्षं न वै च्छिन्द्यान्नाप्सु ष्ठीवनमुत्सृजेत् । नास्थि-भस्म-कपालानि न केशान् न च कण्टकान् ।
तुषाङ्गारकरीषं वा नाधितिष्ठेत् कदाचन ॥७९॥
न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । न चैनं पादतः कुर्यान्मुखेन न धमेद्बुधः ॥८०॥
न कूपमवरोहेत नाचक्षीताशुचिः क्वचित् । अग्नौ न प्रक्षिपेदग्निं नाद्भिः प्रशमयेत् तथा ॥८१॥
सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत् परान् । अपण्यं कूटपण्यं वा विक्रये न प्रयोजयेत् ॥८२॥
न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः । पुण्यस्नानोदकस्थाने सीमान्तं वा कृषेन्न तु ॥८३॥
न भिन्द्यात् पूर्वसमयं सत्योपेतं कदाचन । परस्परं पशून् व्यालान् पक्षिणो नैव योधयेत् ॥८४॥
परबाधां न कुर्वीत जलवातातपादिभिः । कारयित्वा सुकर्माणि कारून् पश्चान्न वर्जयेत् ॥८५॥
सायं प्रातर्गृहद्वारान् भिक्षार्थं नावघाटयेत् । बहिर्माल्यं बहिर्गन्धं भार्यया सह भोजनम् ॥८६॥
विसृज्य वाटं कुद्वारप्रवेशञ्च विवर्जयेत् । न खादन् ब्राह्मणस्तिष्ठेन्न जल्पेद्वा हसन् बुधः ॥८७॥
स्वमग्निं नैव हस्तेन स्पृशेन्नाप्सु चिरं वसेत् । न पक्षकेणोपधमेन्न शूर्पेण न पाणिना ॥८८॥

मुखेनैव धमेदग्निं मुखादग्निरजायत। परस्त्रियं न भाषेत नायाज्यं याजयेद्बुधः ॥८९॥
नैकश्चरेत् सभां विप्रः समवायञ्च वर्जयेत्। न देवायतनं गच्छेत् कदाचिच्चाप्रदक्षिणम् ॥९०॥
न वीजयेद्वा वस्त्रेण न देवायतने स्वपेत्। नैकोऽध्वानं प्रपद्येत नाधार्मिकजनैः सह ॥९१॥
न व्याधिदूषितैर्वापि न शूद्रैः पतितैर्न वा। नोपानद्वर्जितोऽध्वानं जलादिरहितस्तथा ॥९२॥
न रात्रौ नारिणा सार्द्धं न विना च कमण्डलुम्। नाग्नि-गो-ब्राह्मणादीनामन्तरेण व्रजेत् क्वचित्॥९३॥
न वत्स्यन्तीं न विनतामतिक्रामेद्द्विजोत्तमाः। न निन्देद्योगिनः सिद्धान् व्रतिनो वा यतींस्तथा॥९४॥
देवतायतने प्राज्ञो न देवानाञ्च सन्निधौ। नाक्रामेत् कामतश्छायां ब्राह्मणानां गवामपि ॥९५॥
स्वान्तु नाक्रमयेच्छायां पतिताद्यैर्न रोगिभिः। नाङ्गार-भस्म-केशादिष्वधितिष्ठेत् कदाचन ॥९६॥
वर्जयेन्मार्जनीरेणुं स्नानवस्त्र-घटोदकम्। न भक्षयेदभक्ष्याणि नापेयञ्च पिबेद्द्विजाः ॥९७॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायामाश्रमाचारनियमधर्मो नाम षोडशोऽध्यायः ॥ १६ ॥

---

# सप्तदशोऽध्यायः

## व्यास उवाच

नाद्याच्छूद्रस्य विप्रोऽन्नं मोहाद्वा यदि कामतः। न शूद्रयोनिं व्रजति यस्तु भुङ्क्ते ह्यनापदि ॥ १ ॥
षण्मासान् यो द्विजो भुंक्ते शूद्रस्यान्नं विगर्हितम्। जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ २ ॥
ब्राह्मण - क्षत्रिय - विशां शूद्रस्य च मुनीश्वराः। यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात् ॥ ३ ॥
राजान्नं नर्त्तकान्नञ्च तक्ष्णोऽन्नं चर्मकारिणः। गणान्नं गणिकान्नञ्च षडन्नानि च वर्जयेत् ॥ ४ ॥
च क्रोपजीवि - रजक - तस्कर - ध्वजिनां तथा। गन्धर्व - लोहकारान्नं सूतकान्नञ्च वर्जयेत् ॥ ५ ॥
कुलाल-चित्रकर्मान्नं वार्द्धुषेः पतितस्य च। पौनर्भव - च्छत्रिकयोरभिशस्तस्य चैव हि ॥ ६ ॥
सुवर्णकार - शैलूष - व्याध - बद्धातुरस्य च। चिकित्सकस्य चैवान्नं पुंश्चल्या दाम्भिकस्य च॥ ७ ॥
स्तेन-नास्तिकयोरन्नं देवतानिन्दकस्य च। सोमविक्रयिणाश्चान्नं श्वपाकस्य विशेषतः ॥ ८ ॥
भार्याजितस्य चैवान्नं यस्य चोपपतिगृहे। उच्छिष्टस्य कदर्यस्य तथैवोच्छिष्टभोजिनः ॥ ९ ॥
अपङ्क्त्यन्नञ्च सङ्घान्नं शस्त्रजीवस्य चैव हि। क्लीव-सन्यासिनोश्चान्नं मत्तोन्मत्तस्य चैव हि ॥१०॥
भीतस्य रुदितस्यान्नमवक्रुष्टं परिक्षुतम्। ब्रह्मद्विषः पापरुचेः श्राद्धान्नं सूतकस्य च ॥११॥
वृथापाकस्य चैवान्नं शठान्नं श्वशुरस्य च। अप्रजानान्तु नारीणां भृतकस्य तथैव च ॥१२॥
कारुकान्नं विशेषेण शस्त्रविक्रयिणस्तथा। शौण्डान्नं घाण्टिकान्नञ्च भिषजामन्नमेव च ॥१३॥
विद्धप्रजननस्यान्नं परिवेत्रन्नमेव च। पुनर्भुवो विशेषेण तथैव दिधिषूपतेः ॥१४॥
अवज्ञातञ्चावधूतं सरोषं विस्मयान्वितम्। गुरोरपि न भोक्तव्यमन्नं सत्कारवर्जितम् ॥१५॥
दुष्कृतं हि मनुष्यस्य सर्वमन्ने व्यवस्थितम्। यो यस्यान्नं समश्नाति स तस्याश्नाति किल्विषम्॥१६॥
आर्द्धिकः कुलमित्रश्च गोपालो दाश-नापितौ। एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥१७॥
कुशीलवः कुम्भकारः क्षेत्रकर्मक एव च। एते शूद्रेषु भोज्यान्ना दत्वा स्वल्पं पणं बुधैः ॥१८॥

पायसं स्नेहपक्वं यदगोरसश्चैव सक्तवः । पिण्याकश्चैव तैलञ्च शूद्राद्ग्राह्यं द्विजातिभिः ॥१९॥
वृन्ताकं नालिकाशाकं कुसुम्भाश्मन्तकं तथा । पलाण्डं लशुनं शुक्तं निर्यासञ्चैव वर्जयेत् ॥२०॥
छत्राकं विड्वराहञ्च शेलुं पीयूषमेव च । विलयं सुमुखञ्चैव करकाणि च वर्जयेत् ॥२१॥
गृञ्जनं किंशुकञ्चैव कुक्कुटञ्च तथैव च । उदुम्बरमलाबुञ्च जग्ध्वा पतति वै द्विजः ॥२२॥
वृथाकृशर-संयावौ पायसापूपमेव च । अनुपाकृतमांसञ्च देवान्नानि हवींषि च ॥२३॥
यवागूं मातुलुङ्गञ्च मत्स्यानप्यनुपाकृतान् । नीपं कपित्थं प्लक्षञ्च प्रयत्नेन विवर्ज्जयेत् ॥२४॥
पिण्याकञ्चोद्धृतस्नेहं दिवाधानास्तथैव च । रात्रौ च तिलसम्बद्धं प्रयत्नेन दधि त्यजेत् ॥२५॥
नाश्नीयात् पयसा तक्रं न बीजान्युपजीवयेत् । क्रियादुष्टं भावदुष्टमसत्सङ्गं विवर्जयेत् ॥२६॥
केशकीटावपन्नञ्च स्वभूर्लेखञ्च नित्यशः । श्वाघ्रातञ्च पुनः सिद्धं चण्डालावेक्षितं तथा ॥२७॥
उदक्यया च पतितैर्गवा चाघ्रातमेव च । अनर्चितं पर्युषितं पर्याभ्रान्तञ्च नित्यशः ॥२८॥
काक-कुक्कुटसंस्पृष्टं कृमिभिश्चैव संयुतम् । मनुष्यैरप्यवघ्रातं कुष्ठिना स्पृष्टमेव च ॥२९॥
न रजस्वलया दत्तं न पुंश्चल्या सरोषकम् । मलवद्वाससा चापि परया नोपयोजयेत् ॥३०॥
विवत्सायाश्च गोः क्षीरमौष्ट्रं वा निर्दशस्य च । आविकं सन्धिनीक्षीरमपेयं मनुरब्रवीत् ॥३१॥
बलाकं हंस - दात्यूहं कलविङ्कं शुकं तथा । तथा कुरर - वल्लूरं जालपादञ्च कोकिलम् ॥३२॥
चाषञ्च खञ्जरीटञ्च श्येनं गृध्रं तथैव च । उलूकं चक्रवाकञ्च भासं पारावतं तथा ॥३३॥
कपोतं टिट्टिभञ्चैव ग्रामकुक्कुटमेव च । सिंहं व्याघ्रञ्च मार्जारं श्वानं शूकरमेव च ॥३४॥
शृगालं मर्कटञ्चैव गर्दभञ्च न भक्षयेत् । न भक्षयेत् सर्वमृगान् नान्यान् वनचरान् द्विजान् ।
जलेचरान् स्थलचरान् प्राणिनश्चेति धारणा ॥३५॥
गोधा कूर्मः शशः खड्गी शल्लकी चेति सत्तमाः । भक्ष्याः पञ्चनखा नित्यं मनुराह प्रजापतिः ॥३६॥
मत्स्यान् सशल्कान् भुञ्जीयान्मांसं रौरवमेव च । निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यश्च नान्यथा ॥३७॥
मयूरं तित्तिरिञ्चैव कपिञ्जलकमेव च । वार्द्धीणसं वर्त्तकञ्च भक्ष्यानाह प्रजापतिः ॥३८॥
राजीवान् सिंहतुण्डांश्च तथा पाठीन - रोहितौ । मत्स्येष्वेते समुद्दिष्टा भक्षणीया मुनीश्वराः ॥३९॥
प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया । यथाविधि नियुक्तञ्च प्राणानामपि चात्यये ॥४०॥
भक्षयेन्नैव मांसानि शेषभोजी न लिप्यते । औषधार्थमशक्तौ वा नियोगाद्यज्ञकारणात् ॥४१॥
आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत् । यावन्ति पशुरोमाणि तावतो नरकान् व्रजेत् ॥४२॥
अदेयं वाप्यपेयञ्च तथैवास्पृश्यमेव च । द्विजातीनामनालोक्यं नित्यं मद्यमिति स्थितिः ॥४३॥
तस्मात् सर्वप्रयत्नेन मद्यं नित्यं विवर्जयेत् । पीत्वा पतति कर्मभ्यो न सम्भाष्यो भवेद्द्विजैः ॥४४॥
भक्षयित्वा ह्यभक्ष्याणि पीत्वाऽपेयान्यपि द्विजः । नाधिकारी भवेत् तावद्यावत् तन्न व्रजत्यधः ॥४५॥
तस्मात् परिहरेन्नित्यमभक्ष्याणि प्रयत्नतः । अपेयानि च विप्रा वै तथा चेद्याति रौरवम् ॥४६॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां भक्ष्याभक्ष्यनिर्णयो नाम
सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः

## ऋषय ऊचुः

अहन्यहनि कर्तव्यं ब्राह्मणानां महामुने । तदाचक्ष्वाखिलं कर्म येन मुच्येत बन्धनात् ॥ १ ॥

## व्यास उवाच

वक्ष्ये समाहिता यूयं शृणुध्वं गदतो मम । अहन्यहनि कर्त्तव्यं ब्राह्मणानां क्रमाद्विधिम् ॥ २ ॥
ब्राह्मे मुहूर्त्ते तूत्थाय धर्ममर्थञ्च चिन्तयेत् । कायक्लेशं तदुद्भूतं ध्यायेत मनसेश्वरम् ॥ ३ ॥
उषःकालेऽथ सम्प्राप्ते कृत्वा चावश्यकं बुधः । स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ॥ ४ ॥
प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः । तस्मात् सर्वप्रयत्नेन प्रातःस्नानं समाचरेत् ॥ ५ ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् । ऋषीणामृषिता नित्यं प्रातःस्नानान्न संशयः ॥ ६ ॥
मुखे सुप्तस्य सततं लालाद्याः संस्रवन्ति हि । ततो नैवाचरेत् कर्माण्यकृत्वा स्नानमादितः ॥ ७ ॥
अलक्ष्मीः कालकर्णी दुःस्वप्नं दुर्विचिन्तितम् । प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः ॥ ८ ॥
न च स्नानं विना पुंसां पावनं कर्मसु स्मृतम् । होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत् ॥ ९ ॥
अशक्तावशिरस्कं वा स्नानमस्य विधीयते । आर्द्रेण वाससा वाथ मार्जनं पावनं स्मृतम् ॥१०॥
असामर्थ्ये समुत्पन्ने स्नानमेव समाचरेत् । ब्रह्मादीनि यथाशक्तौ स्नानान्याहुर्मनीषिणः ॥११॥
ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च । वारुणं यौगिकं यच्च षोढा स्नानं प्रकीर्त्तितम् ॥१२॥
ब्राह्मन्तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः । आग्नेयं भस्मनापादमस्तकादेहधूलनम् ॥१३॥
गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमम् । यत् तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ॥१४॥
वारुणश्चावगाहस्तु मानसं स्वात्मवेदनम् । योगिकं स्नानामाख्यातं योगे विश्वादिचिन्तनम्॥१५॥
आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः । मनःशुद्धिकरं पुंसां नित्यं तत् स्नानमाचरेत् ॥१६॥
शक्तश्चेद्वारुणं विद्वान् प्राजापत्यं तथैव च ॥१७॥
प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा विधानतः । आचम्य प्रयतो नित्यं स्नानं प्रातः समाचरेत्॥१८॥
मध्याङ्गुलिसमस्थौल्यं द्वादशाङ्गुलसम्मितम् । सत्वचं दन्तकाष्ठं स्यात् तदग्रेण तु धावयेत् ॥१९॥
क्षीरिवृक्षसमुद्भूतं मालतीसम्भवं शुभम् । अपामार्गञ्च विल्वञ्च करवीरं विशेषतः ॥२०॥
वर्जयित्वा निन्दितानि गृहीत्वैकं यथोदितम् । परिहृत्य दिनं पापं भक्षयेद्वै विधानवित् ॥२१॥
नोत्पाटयेद्दन्तकाष्ठं नाङ्गुल्यग्रेण धारयेत् । प्रक्षाल्य भङ्क्त्वा तज्जह्याच्छुचौ देशे समाहितः॥२२॥
स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा । आचम्य मन्त्रविन्नित्यं पुनराचम्य वाग्यतः ॥२३॥
सम्मार्ज्य मन्त्रैरात्मानं कुशैः सोदकबिन्दुभिः । आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणैः शुभैः॥२४॥
ओङ्कारव्याहृतियुतां गायत्रीं वेदमातरम् । जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः॥२५॥
प्राक्कलेषु समासीनो दर्भेषु सुसमाहितः । प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति स्मृतिः॥२६॥
या सन्ध्या सा जगत्सूतिर्मायातीता हि निष्कला । ऐश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥२७॥
ध्यात्वार्कमण्डलगतां सावित्रीं वै जपेद्बुधः । प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ॥२८॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत् कुरुते किञ्चिन्न तस्य फलमाप्नुयात् ॥२९॥
अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः । उपास्य विधिवत् सन्ध्यां प्राप्ताः पूर्वे परां गतिम्॥३०॥

योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः । विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥३१॥
तस्मात् सर्वप्रयत्नेन सन्ध्योपासनमाचरेत् । उपासितो भवेत् तेन देवो योगतनुः परः ॥३२॥
सहस्रपरमां नित्यं शतमध्यां दशावराम् । सावित्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतःस्थितः॥३३॥
अथोपतिष्ठेदादित्यमुदयन्तं समाहितः । मन्त्रस्तु विविधैः सौरैर्ऋग्यजुः सामसम्भवैः ॥३४॥
उपस्थाय महायोगं देवदेवं दिवाकरम् । कुर्वीत प्रणतिं भूमौ मूर्द्ध्ना तेनैव मन्त्रतः ॥३५॥
ओं खखोल्काय शान्ताय कारणत्रयहेतवे । निवेदयामि चात्मानं नमस्ते विश्वरूपिणे ॥३६॥
नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे । त्वमेव ब्रह्म परममापो ज्योती रसोऽमृतम् ।
भूर्भुवः स्वस्त्वमोङ्कारः शर्वो रुद्रः सनातनः ॥३७॥
पुरुषः सन्महोऽन्तरथं प्रणमामि कपर्दिनम् ॥३८॥
त्वमेव विश्वं बहुधा सदसत् सूयते च यत् । नमो रुद्राय सूर्याय त्वामहं शरणं गतः ॥३९॥
प्रचेतसे नमस्तुभ्यं नमो मीढुष्टमाय च । नमो नमस्ते रुद्राय त्वामहं शरणं गतः ॥४०॥
हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः । अम्बिकापतये तुभ्यमुमायाः पतये नमः ॥४१॥
नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने । विलोहिताय भर्गाय सहस्राक्षाय ते नमः ॥४२॥
तमोऽपहाय ते नित्यमादित्याय नमोऽस्तु ते । नमस्ते वज्रहस्ताय त्र्यम्बकाय नमो नमः ॥४३॥
प्रपद्ये त्वां विरूपाक्षं महान्तं परमेश्वरम् । हिरण्मये गृहे गुप्तमात्मानं सर्वदेहिनाम् ॥४४॥
नमस्यामि परं ज्योतिर्ब्रह्माणं त्वां परामृतम् । विश्वं पशुपतिं भीमं नर-नारीशरीरिणम् ॥४५॥
नमः सूर्याय रुद्राय भास्वते परमेष्ठिने । उग्राय सर्वभक्षाय त्वां प्रपद्ये सदैव हि ॥४६॥
एतद्वै सूर्यहृदयं जप्त्वा स्तवमनुत्तमम् । प्रातःकालेऽथ मध्याह्ने नमस्कुर्याद्दिवाकरम् ॥४७॥
इदं पुत्राय शिष्याय धार्मिकाय द्विजातये । प्रदेयं सूर्यहृदयं ब्रह्मणा तु प्रदर्शितम् ॥४८॥
सर्वपापप्रशमनं वेदसारसमुद्भवम् । ब्राह्मणानां हितं पुण्यमृषिसंघैर्निषेवितम् ॥४९॥
अथागम्य गृहं विप्रः समाचम्य यथाविधि । प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥५०॥
ऋत्विक् पुत्रोऽथ पत्नी वा शिष्यो वापि सहोदरः । प्राप्यानुज्ञां विशेषेण जुहुयुर्वा यथाविधि ॥५१॥
पवित्रपाणिः पूतात्मा शुक्लाम्बरधरः शुचिः । अनन्यमनसा नित्यं जुहुयात् संयतेन्द्रियः ॥५२॥
विना दर्भेण यत् कर्म विना सूत्रेण वा पुनः । राक्षसं तद्भवेत् सर्वं नामुत्रेह फलप्रदम् ॥५३॥
दैवतानि नमस्कुर्यादुपहारान् निवेदयेत् । दद्यात् पुष्पादिकं तेषां वृद्धांश्चैवाभिवादयेत् ॥५४॥
गुरुञ्चैवाप्युपासीत हितञ्चास्य समाचरेत् । वेदाभ्यासं ततः कुर्यात् प्रयत्नाच्छक्तितो द्विजः॥५५॥
जपेदध्यापयेच्छिष्यान् धारयेद्वै विचारयेत् । अवेक्षेताथ शास्त्रेण धर्मादीनि द्विजोत्तमाः ॥५६॥
वैदिकांश्चैव निगमान् वेदाङ्गानि च सर्वशः । उपेयादीश्वरं वाथ योगक्षेमप्रसिद्धये ।
साधयेद्विविधानर्थान् कुटुम्बार्थे द्विजोत्तमः ॥५७॥
ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् । पुष्पाक्षतान् कुश-तिलान् गोशकृच्छुद्धमेव वा॥५८॥
नदीषु देवखातेषु तडागेषु सरःसु च । स्नानं समाचरेन्नित्यं गर्त्त-प्रस्रवणेषु च ॥५९॥
परकीयनिपानेषु न स्नायाद्वै कदाचन । पञ्च पिण्डान् समुद्धृत्य स्नायाद्वाऽसम्भवे पुनः॥६०॥
मृदकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि । अधस्तु तिसृभिः कायः पादौ षड्भिस्तथैव च॥६१॥
मृत्तिका च समुद्दिष्टा सार्द्रामलकमात्रिका । गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत् पुनः ॥६२॥
लेपयित्वा तीरसंस्थं तल्लिङ्गैरेव मन्त्रतः । प्रक्षाल्याचम्य विधिवत् ततः स्नायात् समाहितः॥६३॥
अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः । भावपूतस्तदव्यक्तं ध्यायेद्वै विष्णुमव्ययम् ॥६४॥

आपो नारायणाद्भूतास्ता एवास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ॥६५॥
प्रेक्ष्या सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये । आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ॥६६॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥६७॥
द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिं प्रणवान्विताम् । सावित्रीं वा जपेद्विद्वांस्तथा चैवाघमर्षणम् ॥६८॥
ततः सम्मार्जनं कार्यमापो हिष्ठा मयो भुवः । इदमापः प्रवहत व्याहृतिभिस्तथैव च ॥६९॥
तथाभिमन्त्र्य तत् तोयमापोहिष्ठादिभिस्त्रिकैः । अन्तर्जलगतो मग्नो जपेत् त्रिरघमर्षणम् ॥७०॥
द्रुपदां वाथ सावित्रीं तद्विष्णोः परमं पदम् । आवर्त्तयेच्च प्रणवं देवं वा संस्मरेद्धरिम् ॥७१॥
द्रुपदादिव यो मन्त्रो यजुर्वेदे प्रतिष्ठितः । अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते ॥७२॥
अपः पाणौ समादाय जप्त्वा वै मार्जने कृते । विन्यस्य मूर्ध्नि तत् तोयं मुच्यते सर्वपातकैः ॥७३॥
यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ॥७४॥
अथोपतिष्ठेदादित्यमूदर्ध्वं पुष्पाक्षतान्वितम् । प्रक्षिप्यालोकयेद्देवमूदर्ध्वं यस्तमसः परः ॥७५॥
उदुत्यं चित्रमित्येतत् तच्चक्षुरिति मन्त्रतः । हंसः शुचिषदेतेन सावित्र्या च विशेषतः ॥७६॥
अन्यैश्च वैदिकैर्मन्त्रैः सौरैः पापप्रणाशनैः । सावित्रीं वै जपेत् पश्चात् परमाञ्च चतुष्पदाम् ।
परंब्रह्मस्वरूपां तां जपयज्ञः स वै स्मृतः ॥७७॥
विविधानि पवित्राणि गुह्यविद्यास्तथैव च । शतरुद्रियमाथर्वशिरः सौरांश्च शक्तितः ॥७८॥
प्राक्कूलेषु समासीनः कुशेषु प्राङ्मुखः शुचिः । तिष्ठंश्च वीक्षमाणोऽर्कं जप्यं कुर्यात् समाहितः ॥७९॥
स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः । कर्त्तव्या त्वक्षमाला स्यादुत्तरादुत्तमा स्मृता ॥८०॥
जपकाले न भाषेत नान्यानि प्रेक्षयेद्बुधः । न कम्पयेच्छिरो ग्रीवं दन्तान् नैव प्रकाशयेत् ॥८१॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः । एकान्तेषु शुचौ देशे तस्माज्जप्यं समाचरेत् ॥८२॥
चाण्डालाशौचिपतितान् दृष्ट्वाचम्य पुनर्जपेत् । तैरेव भाषणं कृत्वा स्नात्वा चैव पुनर्जपेत् ॥८३॥
आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत् । आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान् मन्त्राञ्छक्तितो वै पावमानीस्तु कामतः ॥८४॥
यदि स्यात् क्लिन्नवासा वै वारिमध्यगतो जपेत् । अन्यथा तु शुचौ देशे दर्भेषु सुसमाहितः ॥८५॥
प्रदक्षिणं समावृत्य नमस्कृत्य ततः क्षितौ । आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत् ॥८६॥
ततः सन्तर्पयेदेवानृषीन् पितृगणांस्तथा । आदावोङ्कारमुच्चार्य नामान्ते तर्पयामि वः ॥८७॥
देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः । तिलोदकैः पितॄन् भक्त्या स्वगृह्योक्तविधानतः ।
देवर्षीं स्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥८८॥
यज्ञोपवीती देवानां निवीती ऋषितर्पणे । प्राचीनावीति पित्र्ये तु स्वेन तीर्थेन भावितः ॥८९॥
निष्पीड्य स्नानवस्त्रन्तु समाचम्य च वाग्यतः । स्वैर्मन्त्रैरर्च्चयेद्देवान् पुष्पैः पत्रैरथाम्बुभिः ॥९०॥
ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् । अन्यांश्चाभिमतान् देवान् भक्त्या चाक्रोधनो नरः ॥९१॥
प्रदद्याद्वाथ पुष्पाणि सूक्तेन पौरुषेण तु । आपो वा देवताः सर्वास्तेन सम्यक् समर्चिताः ॥९२॥
ध्यात्वा प्रणवपूर्वं वै दैवतानि समाहितः । नमस्कारेण पुष्पाणि विन्यसेद्वै पृथक् पृथक् ॥९३॥
न विष्णवाराधनात् पुण्यं विद्यते कर्म वैदिकम् । तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥९४॥
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु । न ताभ्यां सदृशो मन्त्रो वेदेषुक्तश्चतुर्ष्वपि ॥९५॥
निवेदयेच्च स्वात्मानं विष्णावमलतेजसि । तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥९६॥
अथवा देवमीशानं भगवन्तं सनातनम् । आराधयेन्महादेवं भावपूतो महेश्वरम् ॥९७॥

मन्त्रेण रुद्रगायत्र्या प्रणवेनाथवा पुनः । ईशानेनाथवा रुद्रैस्त्र्यम्बकेण समाहितः ॥९८॥
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् । उक्त्वा नमः शिवायेति मन्त्रेणानेन वा जपेत् ॥९९॥
नमस्कुर्यान्महादेवं तं मृत्युञ्जयमीश्वरम् । निवेदयीत स्वात्मानं यो ब्रह्मणमितीश्वरे ॥१००॥
प्रदक्षिणं द्विजः कुर्यात् पञ्च ब्रह्माणि वै जपन् । ध्यायीत देवमीशानं व्योममध्यगतं शिवम् ॥१०१॥
अथावलोकयेदर्कं हंसः शुचिषदित्यृचा । कुर्वन् पञ्च महायज्ञान् गृहं गत्वा समाहितः ॥१०२॥
देवयज्ञं पितृयज्ञं भूतयज्ञं तथैव च । मानुषं ब्रह्मयज्ञञ्च पञ्च यज्ञान् प्रचक्षते ॥१०३॥
यदि स्यात् तर्पणादर्वाग् ब्रह्मयज्ञः कृतो न हि । कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ॥१०४॥
अग्नेः पश्चिमतो देशे भूतयज्ञान्त एव च । कुशपुञ्जे समासीनः कुशपाणिः समाहितः ॥१०५॥
शालाग्नौ लौकिके वाथ जले भूम्यामथापि वा । वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स वै स्मृतः ॥१०६॥
यदि स्याल्लौकिके पक्वं ततोऽन्नं तत्र हूयते । शालाग्नौ तत्र देवान्नं विधिरेष सनातनः ॥१०७॥
देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् । भूतयज्ञः स विज्ञेयो भूतिदः सर्वदेहिनाम् ॥१०८॥
श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च । दद्याद्भूमौ बहिश्चान्नं पक्षिभ्यो द्विजसत्तमाः ॥१०९॥
सायञ्चान्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । भूतयज्ञस्त्वयं नित्यं सायं प्रातर्यथाविधि ॥११०॥
एकन्तु भोजयेद्विप्रं पितॄनुद्दिश्य सत्तमम् । नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ॥१११॥
उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः । वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥११२॥
पूजयेदतिथिं नित्यं नमस्येदर्च्चयेद्द्विजः । मनोवाक्कर्मभिः शान्तमागतं स्वगृहं ततः ॥११३॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु । हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ॥११४॥
भिक्षामाहुर्ग्रासमात्रामग्रं तत् स्याचतुर्गुणम् । पुष्कलं हन्तकारन्तु तच्चतुर्गुणमिष्यते ॥११५॥
गोदोहकालमात्रं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् । अभ्यागतान् यथाशक्ति पूजयेदतिथीन् सदा ॥११६॥
भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे । दद्यादन्नं यथाशक्ति ह्यर्थिभ्यो लोभवर्जितः ॥११७॥
सर्वेषामप्यलाभे हि त्वन्नं गोभ्यो निवेदयेत् । भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ॥११८॥
अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तमाः । भुञ्जीत चेत् स मूढात्मा तिर्यग्योनिं स गच्छति ॥११९॥
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमाः । नाशयन्त्याशु पापानि देवताभ्यर्चनं तथा ॥१२०॥
यो मोहादथवाऽज्ञानादकृत्वा देवतार्चनम् । भुङ्क्ते स याति नरकं शूकरेष्वभिजायते ॥१२१॥
तस्मात् सर्वप्रयत्नेन कृत्वा कर्माणि वै द्विजः । भुञ्जीत स्वजनैः सार्द्धं स याति परमां गतिम् ॥१२२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां ब्राह्मणानां नित्यक्रिया-
विधिर्नामाष्टादशोऽध्यायः ॥ १८ ॥

# एकोनविंशोऽध्यायः

## व्यास उवाच

प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा । आसीनः स्वासने शुद्धे भूम्यां पादौ निधाय च ॥ १ ॥
आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते ह्युदङ्मुखः ॥ २ ॥
पञ्चार्द्रो भोजनं कुर्याद्भूमौ पात्रं निधाय च । उपवासेन तत् तुल्यं मनुराह प्रजापतिः ॥ ३ ॥
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ । आचम्यार्द्राननोऽक्रोधः पञ्चार्द्रो भोजनं चरेत् ॥ ४ ॥
महाव्याहृतिभिस्त्वन्नं परिधायोदकेन तु । अमृतोपस्तरणमसीत्यापोऽशानक्रियां चरेत् ॥ ५ ॥
स्वाहाप्रणवसंयुक्तां प्राणायाद्याहुतिं ततः । अपानाय ततो हुत्वा व्यानाय तदनन्तरम ॥ ६ ॥
उदानाय ततः कुर्यात् समानायेति पञ्चमीम् । विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥ ७ ॥
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम् । ध्यात्वा तन्मनसा देवानात्मानं वै प्रजापतिम् ॥ ८ ॥
अमृतापिधानमसीत्युपरिष्टादपः पिबेत् । आचान्तः पुनराचामेदयं गौरिति मन्त्रतः ॥ ९ ॥
द्रुपदां वा त्रिरावृत्य सर्वपापप्रणाशनीम् । प्राणानां ग्रन्थिरसीत्यालभेदुदरं ततः ॥१०॥
आचम्याङ्गुष्ठमात्रेण पादाङ्गुष्ठेऽथ दक्षिणे । निस्रावयेद्धस्तजलमूर्द्ध्वहस्तः समाहितः ॥११॥
कृतानुमन्त्रणं कुर्यात् सन्ध्यायामिति मन्त्रतः । अथ मन्त्रेण स्वात्मानं योजयेद्ब्राह्मणेति हि ॥१२॥
सर्वेषामेव योगानामात्मयोगः स्मृतः परः । योऽनेन विधिना कुर्यात् स याति ब्रह्मणः क्षयम् ॥१३॥
यज्ञोपवीती भुञ्जीत स्रग्गन्धालङ्कृतः शुचिः । सायम्प्रातर्नान्तरा वै सन्ध्यायान्तु विशेषतः ॥१४॥
नाद्यात् सूर्यग्रहात् पूर्वं प्रतिसायं शशिग्रहात् । ग्रहकाले न चाश्नीयात् स्नात्वाऽश्नीयाद्विमुक्तयोः ॥१५॥
मुक्ते शशिनि चाश्नीयाद्यदि न स्यान्महानिशा । अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि ॥१६॥
नाश्नीयात् प्रेक्षमाणानामप्रदाय च दुर्मतिः । यज्ञावशिष्टमद्याद्वा न क्रुद्धो नान्यमानसः ॥१७॥
आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् । वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥१८॥
यद्भुङ्क्ते वेष्टितशिरा यच्च भुङ्क्ते विदिङ्मुखः । सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात् तदासुरम् ॥१९॥
नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् । न च भिन्नासनगतो न यानसंस्थितोऽपि वा ॥२०॥
न भिन्नभाजने चैव न भूम्यां न च पाणिषु । नोच्छिष्टो घृतमादद्यान्न मूर्द्धानं स्पृशेदपि ॥२१॥
न ब्रह्म कीर्त्तयेच्चापि न निःशेषं न भार्यया । नान्धकारे न सन्ध्यायां न च देवालयादिषु ॥२२॥
नैकवस्त्रस्तु भुञ्जीत न यान-शयनस्थितः । न पादुकाविष्ठितो वा न हसन् विलपन्नपि ॥२३॥
भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत् । इतिहास-पुराणाभ्यां वेदार्थानुपबृंहयेत् ॥२४॥
ततः सन्ध्यामुपासीत पूर्वोक्तविधिना शुचिः । आसीनश्च जपेद्देवीं गायत्रीं पश्चिमां प्रति ॥२५॥
न तिष्ठति तु यः पूर्वां नापि सन्ध्यान्तु पश्चिमाम् । स शूद्रेण समो लोके सर्वकर्मविवर्जितः ॥२६॥

हुत्वाग्नि विधिवन्मन्त्रैर्भुक्त्वा यज्ञावशिष्टकम् । सभृत्य-बान्धवजनः स्वपेच्छुष्कपदो निशि ॥२७॥
नोत्तराभिमुखः स्वप्यात् पश्चिमाभिमुखो न च । न चाकाशे न नग्नो वा नाशुचिर्नासने क्वचित् ॥२८॥
न शीर्णायान्तु खट्वायां शून्यागारे न चैव हि । नानुवंशे न पालाशे शयने वा कदाचन ॥२९॥
इत्येतदखिलेनोक्तमहन्यहनि वै मया । ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥३०॥
नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः । स याति नरकान् घोरान् काकयोनौ च जायते ॥३१॥
नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं स्वकम् । तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥३२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां भोजनादिनियमविधिर्नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः

### व्यास उवाच

अथ श्राद्धममावास्यां प्राप्य कार्यं द्विजोत्तमैः । पिण्डान्वाहार्यकं भक्त्या भुक्ति-मुक्तिफलप्रदम् ॥ १ ॥
पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते । अपराह्णे द्विजातीनां प्रशस्तेनामिषेण च ॥ २ ॥
प्रतिपत्प्रभृति ह्यन्यास्तिथयः कृष्णपक्षके । चतुर्दशीं वर्जयित्वा प्रशस्ता ह्युत्तरोत्तराः ॥ ३ ॥
अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु । तिस्रस्तास्त्वष्टकाः पुण्या माघी पञ्चदशी तथा॥ ४ ॥
त्रयोदशी मघायुक्ता वर्षासु च विशेषतः । शस्यपाकः श्राद्धकाला नित्याः प्रोक्ता दिने दिने॥ ५ ॥
नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्र-सूर्ययोः । बान्धवानाञ्च मरणे नारकी स्यादतोऽन्यथा ॥ ६ ॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु । अयने विषुवे चैव व्यतीपाते त्वनन्तकम् ॥ ७ ॥
संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि । नक्षत्रेषु च सर्वेषु कार्यं काम्यं विशेषतः ॥ ८ ॥
स्वर्गञ्च लभते कृत्वा कृत्तिकासु द्विजोत्तमः । अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्चसम् ॥ ९ ॥
रौद्राणां कर्मणां सिद्धिमार्द्रायां शौर्यमेव च । पुनर्वसौ तथा भूमिं श्रियं पुष्ये तथैव च ॥१०॥
सर्वान् कामांस्तथा सार्पे पित्र्ये सौभाग्यमेव च । आर्यम्णे तु धनं विन्द्यात् फल्गुन्यां पापनाशनम् ॥११॥
ज्ञातिश्रैष्ठ्यं तथा हस्ते चित्रायाञ्च बहून् सुतान् । वाणिज्यसिद्धिं स्वातौ तु विशाखासु सुवर्णकम् ॥१२॥
मैत्रे बहूनि मित्राणि राज्यं शाक्रे तथैव च । मूले कृषिं लभेद् यानं सिद्धिमाप्नोति श्राद्धतः ॥१३॥
सर्वान् कामान् वैश्वदेवे श्रैष्ठ्यन्तु श्रवणे पुनः । धनिष्ठायां तथा कामानम्बुपे च परं बलम् ॥१४॥
अजैकपादे कुप्यं स्यादहिर्बुध्ने गृहं शुभम् । रेवत्यां बहवो गावो ह्यश्विन्यां तुरगांस्तथा ।
याम्ये तु जीवितन्तु स्याद्यदि श्राद्धं प्रयच्छति ॥१५॥
आदित्यवारेऽन्वारोग्यं चन्द्रे सौभाग्यमेव च । कुजे सर्वत्र विजयं सर्वान् कामान् बुधस्य तु ॥१६॥
विद्यामभीष्टान्तु गुरौ धनं वै भार्गवे पुनः । शनैश्चरे लभेदायुः प्रतिपत्सु सुतान् शुभान् ॥१७॥
कन्यकां वै द्वितीयायां तृतीयायान्तु वेदिनः । पशून् क्षुद्रांश्चतुर्थ्यां वै पञ्चम्यां शोभनान् सुतान्॥१८॥
षष्ठ्यां घृतं कृषिश्चापि सप्तम्याञ्च धनं नरः । अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ॥१९॥
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु । एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ॥२०॥

द्वादश्यां जातरूपञ्च रजतं कुप्यमेव च । ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु कुप्रजाः ।
पञ्चदश्यां सर्वकामान् प्राप्नोति श्राद्धदः सदा ॥२१॥
तस्माच्छ्राद्धं न कर्त्तव्यं चतुर्दश्यां द्विजातिभिः । शस्त्रेण तु हतानान्तु श्राद्धं तत्र प्रकल्पयेत् ॥२२॥
द्रव्यब्राह्मणसम्पत्तौ न कालनियमः कृतः । तस्माद्भोगापवर्गार्थं श्राद्धं कुर्युर्द्विजातयः ॥२३॥
कर्मारम्भेषु सर्वेषु कुर्यादभ्युदये पुनः । पुत्रजन्मादिषु श्राद्धं पार्वणं पर्वसु स्मृतम् ॥२४॥
अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं पुनः । एकोद्दिष्टादि विज्ञेयं वृद्धिश्राद्धन्तु पार्वणम् ॥२५॥
एतत् पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम् । यात्रायां षष्ठमाख्यातं तत् प्रयत्नेन पालयेत् ॥२६॥
शुद्धये सप्तमं श्राद्धं ब्रह्मणा परिभाषितम् । दैविकञ्चाष्टमं श्राद्धं यत् कृत्वा मुच्यते भयात् ॥२७॥
सन्ध्या-रात्रौ न कर्त्तव्यं राहोरन्यत्र दर्शनात् । देशानान्तु विशेषेण भवेत् पुण्यमनन्तकम् ॥२८॥
गङ्गायामक्षयं श्राद्धं प्रयागेऽमरकण्टके । गायन्ति पितरो गाथां कीर्त्तयन्ति मनीषिणः ॥२९॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेद् ॥३०॥
गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत् । तारिताः पितरस्तेन स याति परमां गतिम् ॥३१॥
वाराहपर्वते चैव गयायाञ्च विशेषतः । वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ॥३२॥
गङ्गाद्वारे प्रभासे तु विल्वके नीलपर्वते । कुरुक्षेत्रे च कुब्जाम्रे भृगुतुङ्गे महालये ॥३३॥
केदारे फल्गुतीर्थे च नैमिषारण्य एव च । सरस्वत्यां विशेषेण पुष्करे च विशेषतः ॥३४॥
नर्मदायां कुशावर्त्ते श्रीशैले भद्रकर्णके । वेत्रवत्यां विपाशायां गोदावर्यां विशेषतः ॥३५॥
एवमादिषु चान्येषु तीर्थेषु पुलिनेषु च । नदीनाञ्चैव तीरेषु तुष्यन्ति पितरः सदा ॥३६॥
व्रीहिभिश्च यवैर्माषैरद्भिर्मूलफलेन वा । श्यामाकैश्च शुभैः शानैर्नीवारैश्च प्रियङ्गुभिः ।
गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥३७॥
आम्रान् पाने रतानिक्षून् मृद्वीकांश्च सदाड़िमान् ॥३८॥
विदारीश्च भरुण्डांश्च श्राद्धकाले प्रदापयेत् । लाजान् मधुयुतान् दद्याच्छक्तुन् शर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटक - कशेरुकान् ॥३९॥
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु । औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥४०॥
षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै । अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥४१॥
दश मासांस्तु तृप्यन्ति वराह-महिषामिषैः । शश-कूर्मयोस्तु मांसेन मासानेकादशैव तु ॥४२॥
संवत्सरन्तु गव्येन पयसा पायसेन तु । वाद्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥४३॥
कालशाकं महाशल्कं खड्गलोहामिषं मधु । आनन्त्यायव कल्पयन्ते मुन्यन्नानि च सर्वशः ॥४४॥
क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वै द्विजः । दद्याच्छ्राद्धे प्रयत्नेन तदस्याक्षयमुच्यते ॥४५॥
पिप्पलीं क्रमुकञ्चैव तथा चैव मसूरकम् । कुष्माण्डालाबु-वार्त्ताक-भूस्तृणं स्वरसं तथा ॥४६॥
कुसुम्भं पिण्डमूलं वै तण्डुलीयमेव च । राजमाषांस्तथा क्षीरं माहिषाजं विवर्जयेत् ॥४७॥
कोद्रवान् कोविदारांश्च पालङ्क्यां मरिचांस्तथा । वर्जयेत् सर्वयत्नेन श्राद्धकाले द्विजोत्तमः ॥४८॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां श्राद्धकल्पे विंशोऽध्यायः ॥ २० ॥

# एकविंशोऽध्यायः

## व्यास उवाच

स्नात्वा यथोक्तं सन्तर्प्य पितृंश्चन्द्रक्षये द्विजः। पिण्डान्वाहार्यकं श्राद्धं कुर्यात् सौम्यमनाः शुचिः॥ १ ॥
पूर्वमेव परीक्षेत ब्राह्मणं वेदपारगम्। तीर्थं तद्धव्य-कव्यानां प्रदानानाञ्च स स्मृतः॥ २ ॥
ये सोमपा विरजसो धर्मज्ञाः शान्तचेतसः। व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः॥ ३ ॥
पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव च। बह्वृचश्च त्रिसौपर्णस्त्रिमधुर्वाथ यो भवेत्॥ ४ ॥
त्रिणाचिकेतश्छन्दोगो ज्येष्ठसामग एव च। अथर्वशिरसोऽध्येता रुद्राध्यायी विशेषतः॥ ५ ॥
अग्निहोत्रपरो विद्वान् न्यायविच्च षडङ्गवित्। मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः॥ ६ ॥
ऋषिव्रती ऋषीकश्च तथा द्वादशवार्षिकः। ब्रह्मदेयानुसन्तानो गर्भशुद्धः सहस्रदः॥ ७ ॥
चान्द्रायणव्रतचरः सत्यवादी पुराणवित्। गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः॥ ८ ॥
विमुक्तः सर्वतो धीरो ब्रह्मभूतो द्विजोत्तमः। महादेवार्च्चनरतो वैष्णवः पंक्तिपावनः॥ ९ ॥
अहिंसानिरतो नित्यमप्रतिग्रहणस्तथा। सत्री च दाननिरतो विज्ञेयः पंक्तिपावनः॥१०॥
माता-पित्रोर्हिते युक्तः प्रातःस्नायी तथा द्विजः। अध्यात्मविन्मुनिर्दान्तो विज्ञेयः पंक्तिपावनः॥११॥
ज्ञाननिष्ठो महायोगी वेदान्तार्थविचिन्तकः। श्रद्धालुः श्राद्धनिरतो ब्राह्मणः पंक्तिपावनः॥१२॥
वेदविद्याव्रतस्नातो ब्रह्मचर्यपरः सदा। आथर्वणो मुमुक्षुश्च ब्राह्मणः पंक्तिपावनः॥१३॥
असमानप्रवरको ह्यसगोत्रस्तथैव च। असम्बन्धी च विज्ञेयो ब्राह्मणः पंक्तिपावनः॥१४॥
भोजयेद्योगिनं शान्तं तत्त्वज्ञानरतं यतिम्। अलाभे नैष्ठिकं दान्तमुपकुर्वाणकं तथा॥१५॥
तदलाभे गृहस्थन्तु मुमुक्षुं सङ्गवर्जितम्। सर्वालाभे साधकं वा गृहस्थमपि भोजयेत्॥१६॥
प्रकृतेर्गुणतत्त्वज्ञो यस्याश्नाति यतिर्हविः। फलं वेदविदां तस्य सहस्रादतिरिच्यते॥१७॥
तस्माद् यत्नेन योगीन्द्रमीश्वरज्ञानतत्परम्। भोजयेद्धव्य-कव्येषु अलाभादितरान् द्विजान्॥१८॥
एष वै प्रथमः कल्पः प्रदाने हव्य-कव्ययोः। अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः॥१९॥
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम्। दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्॥२०॥
न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः। पैशाची दक्षिणा सा हि नेहामुत्र फलप्रदा॥२१॥
कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम्। द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्॥२२॥
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति। तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते॥२३॥
यथोषरे वीजमुप्त्वा न वप्ता लभते फलम्। तथानृचे हविर्दत्त्वा न दाता लभते फलम्॥२४॥
यावतो ग्रसते पिण्डान् हव्य-कव्येष्वमन्त्रवित्। तावतो ग्रसते प्रेत्य दीप्तान् स्थूलांस्त्वयोगुडान्॥२५॥
अपि विद्या-कुलैर्युक्ता हीनवृत्ता नराधमाः। यत्रैते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः॥२६॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्। स वै दुर्ब्राह्मणो नार्हः श्राद्धादिषु कदाचन॥२७॥
शूद्रप्रेष्यो भृतो राज्ञो वृषल-ग्रामयाजकः। वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः॥२८॥
दत्तानुयोगो वृत्त्यर्थं पतितान् मनुरब्रवीत्। वेदविक्रयिणो ह्येते श्राद्धादिषु विगर्हिताः॥२९॥
सुतविक्रयिणो ये तु परपूर्वासमुद्भवाः। असमानान् याजयन्ति पतितास्ते प्रकीर्त्तिताः॥३०॥
असंस्कृताध्यापका ये भृत्यर्थेऽध्यापयन्ति ये। अधीयते तथा वेदान् पतितास्ते प्रकीर्त्तिताः॥३१॥

बौद्ध-श्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः । कापालिकाःपाशुपताः पाषण्डा ये च तद्विधा॥३२॥
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रदम् ॥३३॥
अनाश्रमी यो द्विजः स्यादाश्रमी वा निरर्थक । मिथ्याश्रमी च ते विप्रा विज्ञेयाः पंक्तिदूषकाः॥३४॥
दुश्चर्मा कुनखी कुष्ठी श्वित्री च श्यावदन्तकः । विद्धप्रजननश्चैव स्तेनः क्लीबोऽथ नास्तिकः॥३५॥
मद्यपो वृषलीसक्तो वीरहा दिधिषूपतिः । अगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः॥३६॥
परिवेत्ता च हिंस्रश्च परिवित्तिर्निराकृतिः । पौनर्भवः कुसीदी च तथा नक्षत्रसूचक ॥३७॥
गीत-वादित्रशीलश्च व्याधितः काण एव च । हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च॥३८॥
कन्यादूषी कुण्ड · गोलावभिशस्तोऽथ देवलः । मित्रध्रुक् पिशुनश्चैव नित्यं. भार्यानुवर्त्तकः ॥३९॥
मातापित्रोर्गुरोस्त्यागी दारत्यागी तथैव च । गोत्रस्पृग्भ्रष्टशौचश्च काण्डस्पृष्टस्तथैव च ॥४०॥
अनपत्यः कूटसाक्षी पाचको रङ्गजीवकः । समुद्रयायी कृतहा तथा समयभेदकः ॥४१॥
वेदनिन्दारतश्चैव देवनिन्दापरस्तथा । द्विजनिन्दारतश्चैव वर्ज्याः श्राद्धादिकर्मसु ॥४२॥
कृतघ्नः पिशुनः क्रूरो नास्तिको वेदनिन्दकः । मित्रध्रुक् कुहकश्चैव विशेषात् पंक्तिदूषकाः ॥४३॥
सर्वे पुनरभोज्यान्ना न दानार्हाः स्वकर्मसु । ब्रह्महा चाभिशस्ताश्च वर्जनीयाः प्रयत्नत ॥४४॥
शूद्रान्नरसपुष्टाङ्गः सन्ध्योपासनवर्जितः । महायज्ञविहीनश्च ब्राह्मणः पंक्तिदूषकः ॥४५॥
अधीतनाशनश्चैव स्नान - दानविवर्जितः । तामसो राजसश्चैव ब्राह्मणः पंक्तिदूषकः ॥४६॥
बहुनात्र किमुक्तेन विहितान् ये न कुर्वते । निन्दितानाचरन्त्येते वर्ज्याः श्राद्धे प्रयत्नतः ॥४७॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां श्राद्धकल्पे
एकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः

## व्यास उवाच

गोमयेनोदकैर्भूमिं शोधयित्वा समाहितः । सन्निमन्त्र्य द्विजान् सर्वान् साधुभिः सन्निमन्त्रयेत्॥ १ ॥
श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूज्य च । असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान् ॥ २ ॥
तस्य ते पितरः श्राद्धाः श्राद्धकालमुपस्थितम् । अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवाः॥ ३ ॥
तैर्ब्राह्मणैः सहाश्नन्ति पितरो ह्यन्तरीक्षगाः । वायुभूतास्तु तिष्ठन्ति भुक्त्वा यान्ति परां गतिम्॥ ४ ॥
आमन्त्रिताश्च ते विप्राः श्राद्धकाल उपस्थिते । वसेयुर्नियताः सर्वे ब्रह्मचर्यपरायणाः ॥ ५ ॥
अक्रोधनोऽत्वरोऽमत्तः सत्यवादी समाहितः । भारं मैथुनमध्वानं श्राद्धकृद्वर्जयेद्ध्रुवम् ॥ ६ ॥
आमन्त्रितो ब्राह्मणो वै योऽन्यस्मै कुरुते क्षणम् । स याति नरकं घोरं शूकरत्वं प्रयाति च ॥ ७ ॥
आमन्त्रयित्वा यो मोहादन्यश्चामन्त्रये द्विजः । स तस्मादधिकः पापी विष्ठाकीटोऽभिजायते ॥ ८ ॥
श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति । ब्रह्महत्यामवाप्नोति तिर्यग्योनौ च जायते ॥ ९ ॥
निमन्त्रितस्तु यो विप्रो ह्यध्वानं याति दुर्मतिः । भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः ॥१०॥

निमन्त्रितस्तु यः श्राद्धे कुर्याद्वै कलहं द्विजः । भवन्ति पितरस्तस्य तन्मासं मलभोजनाः ॥११॥
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद्द्विजः । अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः ॥१२॥
श्वोभूते दक्षिणां गत्वा दिशं दर्भान् समाहितः । समूलानाहरेद्वारि दक्षिणाग्रान् सुनिर्मलान् ॥१३॥
दक्षिणाप्रवणं स्निग्धं विभक्तं शुभलक्षणम् । शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥१४॥
नदीतीरेषु तीर्थेषु स्वभूमौ चैव सानुषु । विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥१५॥
पारक्ये भूमिभागे तु पितॄणां नैव निर्वपेत् । स्वामिभिस्तद्विहन्येत् मोहाद् यत् क्रियते नरैः॥१६॥
अटव्यः पर्वताः पुण्यास्तीर्थान्यायतनानि च । सर्वाण्यस्वामिकान्याहुर्न ह्येतेषु परिग्रहः ॥१७॥
तिलान् प्रविकिरेत् तत्र सर्वतो बन्धयेदजान् । असुरोपहतं सर्वं तिलैः शुध्यत्यजेन तु ॥१८॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमध्यगम् । चोष्य-पेयसमृद्धञ्च यथाशक्ति प्रकल्पयेत् ॥१९॥
ततो निवृत्ते मध्याह्ने लुप्तरोम नखान् द्विजान् । अवगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥२०॥
तैलेनाभ्यञ्जनं स्नानं स्नानीयञ्च पृथग्विधम् । पात्रैरौदुम्बरैर्दद्याद्वैश्वदैवत्यपूर्वकम् ॥२१॥
ततः स्नानान्निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः । पाद्यमाचमनीयञ्च सम्प्रयच्छेद् यथाक्रमम् ॥२२॥
ये चात्र विश्वदेवानां विप्राः पूर्वं निमन्त्रिताः । प्राङ्मुखान्यासनान्येषां त्रिदर्भोपहतानि च ॥२३॥
दक्षिणामुखमुक्तानि पितणामासनानि च । दक्षिणाग्रेषु दर्भेषु प्रोक्षितानि तिलोदकैः ॥२४॥
तेषूपवेशयेदेतानासनं संस्पृशन्नपि । आसध्वमिति संजल्पन्नासीरंस्ते पृथक् पृथक्॥२५॥
द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रयश्चोदङ्मुखास्तथा । एकैकं तत्र दैवन्तु पितृमातामहेष्वपि ॥२६॥
सत्क्रियां देश-कालौ च शौचं ब्राह्मणसम्पदम् । पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥२७॥
अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् । श्रुतशीलादिसम्पन्नमलक्षणविवर्जितम् ॥२८॥
उद्धृत्य पात्रे चान्नं तत् सर्वस्मात् प्रकृतात् ततः । देवतायतने वासौ निवेद्यान्यत् प्रवर्त्तयेत् ॥२९॥
प्राश्येदन्नं तदग्नौ तु दद्याद्वै ब्रह्मचारिणे । तस्मादेकमपि श्रेष्ठं विद्वांसं भोजयेद्द्विजम् ॥३०॥
भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः । उपविष्टस्तु यः श्राद्धे कामं तमपि भोजयेत्॥३१॥
अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रशस्यते । तस्मात् प्रयत्नाच्छ्राद्धेषु पूज्या ह्यतिथयो द्विजैः॥३२॥
आतिथ्यरहिते श्राद्धे भुञ्जते ये द्विजातयः । काकयोनिं व्रजन्त्येते दाता चैव न संशयः ॥३३॥
हीनाङ्गः पतितः कुष्ठी व्रणी पुक्कश-नास्तिकौ । कुक्कुटः शूकर-श्वानौ वर्ज्याः श्राद्धेषु दूरतः॥३४॥
बीभत्सुमशुचिं नग्नं मत्तं धूर्त्तं रजस्वलाम् । नीलकाषायवसन - पाषण्डांश्च विवर्जयेत् ॥३५॥
यत् तत्र क्रियते कर्म पैतृके ब्राह्मणान् प्रति । तत् सर्वमेव कर्त्तव्यं वैश्वदैवत्यपूर्वकम् ॥३६॥
यथोपविष्टान् सर्वांस्तानलङ्कुर्याद्विभूषणैः । स्रग्दामभिः शिरोवेष्टैर्धूपवासोऽनुलेपनैः ॥३७॥
ततस्त्वावाहयेद्देवान् ब्राह्मणानामनुज्ञया । उदङ्मुखो यथान्यायं विश्वेदेवास इत्यृचा ॥३८॥
द्वे पवित्रे गृहीत्वास्य भाजने क्षालिते पुनः । शन्नो देवी जलं क्षिप्त्वा यवोऽसीति यवांस्तथा॥३९॥
या दिव्या इति मन्त्रेण हस्ते त्वर्घं विनिक्षिपेत् । प्रदद्याद्गन्ध-माल्यानि धूपादीनि च शक्तितः॥४०॥
अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः । आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः ॥४१॥
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः । शन्नो देव्योदकं पात्रे तिलोऽसीति तिलांस्तथा॥४२॥
क्षिप्त्वा चार्घं यथापूर्वं दत्त्वा हस्तेषु वा पुनः । संस्रवांश्च ततः सर्वान् पात्रे कुर्यात् समाहितः॥४३॥
पितृभ्यः स्थानमसीति न्युब्जपात्रं निधापयेत् । अग्नौ करिष्येत्यादाय पृच्छेदन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो जुहुयादुपवीतवान् ॥४४॥
यज्ञोपवीतिना होमः कर्त्तव्यः कुशपाणिना । प्राचीनावीतिना पित्र्यं वैश्वदेवन्तु होमयेत् ॥४५॥

दक्षिणं पातय्येजानुं देवान् परिचरन् सदा । पितृणां परिचर्यासु पातयेदितरं तथा ॥४६॥
सोमाय वै पितृमते स्वधा नम इति ब्रुवन् । अग्नये कव्यवाहाय स्वधेति जुहुयात् ततः ॥४७॥
अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् । महादेवान्तिके वाथ गोष्ठे वा सुसमाहितः ॥४८॥
ततस्तैरभ्यनुज्ञातो गत्वा वै दक्षिणां दिशम् । गोमयेनोपलिप्याथ स्थानं कुर्यात् ससैकतम् ॥४९॥
मण्डलं चतुरस्रं वा दक्षिणाप्रवणं शुभम् । त्रिरुल्लिखेत् तस्य मध्य दर्भेणैकेन चैव हि ॥५०॥
ततः संस्तीर्य तत् स्थाने दर्भान् वै दक्षिणाग्रकान् । त्रीन् पिंडान् निर्वपेत् तत्र हविःशेषात् समाहितः॥५१॥
न्युप्य पिण्डांस्तु तं हस्तं निमृज्याल्लेपभोजिनाम् । तेषु दर्भेष्वथाचम्य त्रिराचम्य शनैरसून् ।
षड्ऋतूंश्च नमस्कुर्यात् पितृनेव च मन्त्रवित् ॥५२॥
उदकं निनयच्छेषं शनैः पिण्डान्तिके पुन. । अवजिघ्रेच्च तान् पिण्डान् यथा न्युप्तान् समाहितः॥५३॥
अथ पिण्डाच्च शिष्टान्नं विधिवद्भोजयेद्द्विजान् । मांसान्यपूपान् विविधान् दद्यात् कृशर-पायसम्॥५४॥
सूप - शाक - फलानीक्षून् पयो दधि घृतं मधु । अन्नञ्चैव यथाकामं विविधं भोज्यपेयकम् ॥५५॥
यद्यदिष्टं द्विजेन्द्राणां तत् सर्वं विनिवेदयेत् । धान्यांस्तिलांश्च विविधान् शर्करा विविधास्तथा॥५६॥
उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता । अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव च ॥५७॥
न भूमौ पातयेज्जानुं न कुप्येन्नानृतं वदेत् । न पादेन स्पृशेदन्नं न चैतदवधूनयेत् ॥५८॥
क्रोधेनैव च यद्दत्तं यद्दत्तं त्वरया पुनः । यातुधाना विलुम्पन्ति जल्पता चोपपादितम्॥५९॥
स्विन्नगात्रो न तिष्ठेत सन्निधौ च द्विजन्मनाम् । न चात्र श्येन-काकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्ति बुभुक्षवः ॥६०॥
न दद्यात् तत्र हस्तेन प्रत्यक्षं लवणं तथा । न चायसेन पात्रेण न चैवाश्रद्धया पुनः ॥६१॥
काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा । दत्तमक्षयतां याति खड्गेन च विशेषतः ॥६२॥
पात्रे तु मृन्मये यो वै श्राद्धे वै भोजयेद्द्विजान् । स याति नरकं घोरं भोक्ता चैव पुरोधसा ॥६३॥
न पंक्त्यां विषमं दद्यान्न याचेत न दापयेत् । याचिता दापिता दाता नरकान् यान्ति भीषणान्॥६४॥
भुञ्जीरन् वाग्यताः शिष्टा न ब्रूयुः प्राकृतान् गुणान् । तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः॥६५॥
नाग्रासनोपविष्टस्तु भुञ्जीत प्रथमं द्विजः । बहूनां पश्यतां सोऽज्ञः पंक्त्या हरति किल्विषम्॥६६॥
न किञ्चिद्वर्जयेच्छ्राद्धे नियुक्तस्तु द्विजोत्तमः । न मांसस्य निषेधेन न चान्यस्यान्नमीक्षयेत् ॥६७॥
यो नाश्नाति द्विजो मांसं नियुक्तः पितृकर्मणि । स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥६८॥
स्वाध्यायं श्रावयेदेषां धर्मशास्त्राणि चैव हि । इतिहास-पुराणानि श्राद्धकल्पांश्च शोभनान्॥६९॥
ततोऽन्नमुत्सृजेदभुक्तेष्वग्रतो विकिरन् भुवि । पृष्ट्वा तदन्नमित्येव तृप्तानाचामयेत् ततः ॥७०॥
आचान्ताननुजानीयादभितो रम्यतामिति । स्वधास्त्विति च ते ब्रूयुर्ब्राह्मणास्तमनन्तरम् ॥७१॥
ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् । यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः । ७२॥
पित्र्ये स्वदितमित्येव वाच्यं गोष्ठेषु सुश्रितम् । सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि ॥७३॥
विसृज्य ब्राह्मणांस्तान् वै पितृपूर्वन्तु वाग्यतः । दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन्॥७४॥
दातारो नोऽभिवर्द्धन्ता वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ॥७५॥
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन॥७६॥
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा । मध्यमन्तु ततः पिण्डमद्यात् पत्नी सुतार्थिनी ॥७७॥
प्रक्षाल्य हस्तावाचम्य ज्ञातिं शेषेण तोषयेत् । ज्ञातिष्वपि चतुर्थेषु स्वान् भृत्यान् भोजयेत् ततः। ७८॥
पश्चात् स्वयञ्च पत्नीभिः शेषमन्नं समाचरेत् । नोद्वासयेत् तदुच्छिष्टं यावन्नास्तं गतो रविः॥७९॥

ब्रह्मचारी भवेतान्तु दम्पती रजनीन्तु ताम् । दत्त्वा श्राद्धं तथा भुक्त्वा सेवते यस्तु मैथुनम् ।
महारौरवमासाद्य कीटयोनिं व्रजेत् पुनः ॥८०॥
शुचिरक्रोधनः शान्तः सत्यवादी समाहितः । स्वाध्यायञ्च तथाध्वानं कर्त्ता भोक्ता च वर्जयेत्॥८१॥
श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये द्विजातयः । महापातकिभिस्तुल्या यान्ति ते नरकान् बहून्॥८२॥
एष वोऽभिहितः सम्यक् श्राद्धकल्पः समासतः । अनेन वर्त्तयेन्नित्यमुदासीनोऽथ तत्त्ववित् ॥८३॥
अनग्निरध्वगो वापि ब्राह्मणो व्यसनान्वितः । आमश्राद्धं द्विजः कुर्याद्वृषलस्तु सदैव हि ॥८४॥
आमश्राद्धं यथा कुर्याद्विधिज्ञः श्रद्धयान्वितः । तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत्॥८५॥
योऽनेन विधिना श्राद्धं कुर्याद्वै शान्तमानसः । व्यपेतकल्मषो नित्यं यतिनां वर्त्तयेत् पदम् ॥८६॥
तस्मात् सर्वप्रयत्नेन श्राद्धं कुर्याद्द्विजोत्तमः । आराधितो भवेदीशस्तेन सम्यक् सनातनः ॥८७॥
अपि मूलैः फलैर्वापि प्रकुर्यान्निर्द्धनो द्विजः । तिलोदकैस्तर्पयित्वा पितॄन् स्नात्वा समाहितः॥८८॥
न जीवत्पितृको दद्याद्धोमान्तं वा विधीयते । येषां वापि पिता दद्यात् तेषाञ्चैके प्रचक्षते ॥८९॥
पिता पितामहश्चैव तथैव प्रपितामहः । यो यस्य म्रियते तस्मै देयं नान्यस्य तेन तु ॥९०॥
भोजयेद्वापि जीवन्तं यथाकामन्तु भक्तितः । न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥९१॥
द्व्यामुष्यायणिको दद्याद्वीजि-क्षेत्रिकयोः समम् । अधिकारी भवेत् सोऽथ नियोगोत्पादितो यदि॥९२॥
अनियुक्तात् सुतो यश्च शुक्रतो जायते त्विह । प्रदद्याद्वीजिने पिण्डं क्षेत्रिणे तु ततोऽन्यथा ॥९३॥
द्वौ पिण्डौ निर्वपेत् ताभ्यां क्षेत्रिणे वीजिने तथा । कीर्त्तयेदथ चैवास्मिन् वीजिनं क्षेत्रिणं ततः ॥९४॥
मृताहनि तु कर्त्तव्यमेकोद्दिष्टं विधानतः । अशौचे स्वे परिक्षीणे काम्यं वै कामतः पुनः॥९५॥
पूर्वाह्णे चैव कर्त्तव्यं श्राद्धमभ्युदयार्थिना । देववत् सर्वमेव स्याद् यवैः कार्या तिलक्रिया ॥९६॥
दर्भाश्च ऋजवः कार्या युग्मान् वै भोजयेद्द्विजान् । नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत्॥९७॥
मातृश्राद्धन्तु पूर्वं स्यात् पितॄणां तदनन्तरम् । ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥९८॥
दैवपूर्वं प्रदद्याद्वै न कुर्यादप्रदक्षिणम् । प्राङ्मुखो निर्वपेत् पिण्डानुपवीती समाहितः॥९९॥
पूर्वन्तु मातरः पूज्या भक्त्या वै सगणेश्वराः । स्थण्डिलेषु विचित्रेषु प्रतिमासु द्विजातिषु ॥१००॥
पुष्पैर्धूपैश्च नैवेद्यैर्गन्धाद्यैर्भूषणैरपि । पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं द्विजः ॥१०१॥
अकृत्वा मातृयागन्तु यः श्राद्धन्तु निवेशयेत् । तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः॥१०२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां श्राद्धकल्पे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

# त्रयोविंशोऽध्यायः

## व्यास उवाच

दशाहं प्राहुराशौचं सपिण्डेषु विपाश्चितः । मृतेषु वापि जातेषु ब्राह्मणानां द्विजोत्तमाः ॥ १ ॥
नित्यानि चैव कर्माणि काम्यानि च विशेषतः । न कुर्याद्विहितं किञ्चित् स्वाध्यायं मनसापि च॥ २ ॥
शुचीनक्रोधनाञ्छान्ताञ्छालाग्नौ भावयेद्द्विजान् । शुष्कान्नेन फलैर्वापि वैतानान्जुहुयात् तथा ॥ ३ ॥
न स्पृशेयुरिमानन्ये न च तेभ्यः समाहरेत् । चतुर्थे पञ्चमे चाह्नि संस्पर्शः कथितो बुधैः ॥ ४ ॥

सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति । सूतकं सूतिकाश्चैव वर्जयित्वा नृणां पुनः ॥ ५ ॥
अधीयानस्तथा यज्वा वेदविच्च पिता भवेत् । स्पृश्याः स्युः सर्व एवैते स्नानान्माता दशाहतः ॥ ६ ॥
दशाहं निर्गुणे प्रोक्तमाशौचं वातिनिर्गुणे । एक-द्वि-त्रिगुणैर्युक्तश्चतुस्त्र्येकदिनैः शुचिः ॥ ७ ॥
दशाहात् तु परं सम्यगधीयीत जुहोति च । चतुर्थे तस्य संस्पर्शं मनुः प्राह प्रजापतिः ॥ ८ ॥
क्रियाहीनस्य मूर्खस्य महारोगिण एव च । यथेष्टाचरणस्येह मरणान्तमशौचकम् ॥ ९ ॥
त्रिरात्रं दशरात्रं वा ब्राह्मणानामशौचकम् । प्राक् संस्कारात् त्रिरात्रं स्याद्दशरात्रं ततः परम्॥१०॥
ऊनद्विवार्षिके प्रेते मातापित्रोस्तदिष्यते । त्रिरात्रेण शुचिस्त्वन्यो यदि ह्यत्यन्तनिर्गुणः ॥११॥
अजातदन्तमरणे पित्रोरेकाहमिष्यते । जातदन्ते त्रिरात्रं स्याद् यदि स्यातान्तु निर्गुणौ ॥१२॥
आ दन्तजननात् सद्य आ चूड़ादेकरात्रकम् । त्रिरात्रमौपनयनात् सपिण्डानामशौचकम् ॥१३॥
जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः । मातुश्च सूतकं तत् स्यात् पिता चास्पृश्य एव च॥१४॥
सद्यःशौचं सपिण्डानां कर्त्तव्यं सोदरस्य तु । ऊद्ध्वं दशाहादेकाहं सोदरो यदि निर्गुणः ॥१५॥
ततोद्ध्वं दन्तजननात् सपिण्डानामशौचकम् । एकरात्रं निर्गुणानां चौड़ादूद्ध्वं त्रिरात्रकम् ॥१६॥
अदन्तजातमरणं सम्भवेद्यदि सत्तमाः । एकरात्रं सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः ॥१७॥
व्रतादेशात् सपिण्डानामर्वाक्स्नानं विधीयते । सर्वेषामेव गुणिनामूद्ध्वन्तु विषयः पुनः ॥१८॥
अर्वाक् षण्मासतः स्त्रीणां यदि स्याद्गर्भसंस्रवः । तदा माससमैस्तासामशौचं दिवसैः स्मृतम् ॥१९॥
तत ऊद्ध्वन्तु पतने स्त्रीणां स्याद्दशरात्रिकम् । सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः ॥२०॥
गर्भच्युतादहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे । यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः ॥२१॥
यदि स्यात् सूतके सूतिर्मरणे वा मृतिर्भवेत् । शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम् ॥२२॥
मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते । अघवृद्धिमदाशौचमूद्ध्वं चेत् तेन शुध्यति ॥२३॥
अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत् । अघवृद्धिमदाशौचं तदा पूर्वेण शुध्यति ॥२४॥
देशान्तरगतं श्रुत्वा सूतकं शावमेव च । तावदप्रयतो मर्त्यो यावच्छेषः समाप्यते ॥२५॥
अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम् । तथैव मरणे स्नानमूद्र्ध्वं संवत्सराद्यदि ॥२६॥
वेदार्थविच्चाधीयानो योऽग्निवान् वृत्तिकार्षतः । सद्यःशौचं भवेत् तस्य सर्वावस्थासु सर्वदा ॥२७॥
स्त्रीणामसंस्कृतानान्तु प्रदानात् परतः सदा । सपिण्डानां त्रिरात्रं स्यात् संस्कारे भर्त्तुरेव हि ॥२८॥
अहस्त्वदत्तकन्यानामशौचं मरणं स्मृतम् । ऊनद्विवर्षमरणे सद्यःशौचमुदाहृतम् ॥२९॥
आ दन्तात् सोदरे सद्य आ चूडादेकरात्रकम् । आ प्रदानात् त्रिरात्रं स्याद्दशरात्रमतः परम् ॥३०॥
मातामहानां मरणे त्रिरात्रं स्यादशौचकम् । एकोदकानां मरणे सूतके चैतदेव हि ॥३१॥
पक्षिणी योनिसम्बन्धे बान्धवेषु तथैव च । एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणि ॥३२॥
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः । गृहे मृतासु दत्तासु कन्यासु च त्र्यहं पितुः ॥३३॥
परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । त्रिरात्रं स्यात् तथाचार्ये स्वभार्यास्वन्यगासु च ॥३४॥
आचार्यपुत्रे पत्न्याञ्च अहोरात्रमुदाहृतम् । एकाहं स्यादुपाध्याये स्वग्रामे श्रोत्रियेऽपि च ॥३५॥
त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च । एकाहञ्च स्वसर्ये स्यादेकरात्रं तदिष्यते ॥३६॥
त्रिरात्रं श्वश्रूमरणाच्छ्वशुरे चैतदेव हि । सद्यःशौचं समुद्दिष्टं सगोत्रे संस्थिते सति ॥३७॥
शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥३८॥
क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः । तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥३९॥
राजन्य-वैश्यावप्येवं हीनवर्णासु योनिषु । स्वमेव शौचं कुर्यातां विशुद्धयर्थमसंशयम् ॥४०॥

सर्वे तूत्तरवर्णानामशौचं कुर्युराहताः । तद्वर्णविधिदृष्टेन स्वन्तु शौचं स्वयोनिषु ॥४१॥
षड्रात्रं व त्रिरात्रं स्यादेकरात्रं क्रमेण तु । वैश्य-क्षत्रिय-विप्राणां शूद्रेष्वाशौचमेव हि ॥४२॥
अर्द्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुङ्गवाः । शूद्र-क्षत्रिय-विप्राणां वैश्येष्वाशौचमिष्यते ॥४३॥
षड्रात्रं वै दशाहञ्च विप्राणां वैश्य - शूद्रयोः । अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गवाः ॥४४॥
शूद्रविट्क्षत्रियाणान्तु ब्राह्मणस्य तथैव च । दशरात्रेण शुद्धिः स्यादित्याह कमलापतिः ॥४५॥
असपिण्डं द्विजं प्रेतं विप्रो निहृत्य बन्धुवत् । अशित्वा च सहोषित्वा दशरात्रेण शुध्यति ॥४६॥
यद्यन्नमत्ति तेषान्तु त्रिरात्रेण ततः शुचिः । अनदंस्त्वन्नमह्ना तु न च तस्मिन् गृहे वसेत् ॥४७॥
सोदकेऽथ तदेव स्यान्मातुराप्तेषु बन्धुषु । दशाहेन शवस्पर्शी सपिण्डश्चैव शुध्यति ॥४८॥
यदि निर्हरति प्रेतं लोभादाक्रान्तमानसः । दशाहेन द्विजः शुध्येद् द्वादशाहेन भूमिपः ॥४९॥
अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति । षड्रात्रेणाथवा सर्वे त्रिरात्रेणाथवा पुनः ॥५०॥
अनाथञ्चैव निर्हृत्य ब्राह्मणं धनवर्जितम् । स्नात्वा सम्प्राश्य च घृतं शुध्यन्ति ब्राह्मणादयः ॥५१॥
अवरश्चेद्वरं वर्णमवरश्चावरो यदि । अशौचे संस्पृशेत् स्नेहात् तदाशौचेन शुध्यति ॥५२॥
प्रेतीभूतं द्विजं विप्रो ह्यनुगच्छेत कामतः । स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥५३॥
एकाहात् क्षत्रिये शुद्धिर्वैश्ये स्याच्च द्व्यहेनतु । शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः ॥५४॥
अनस्थिसञ्चिते शूद्रे रौति चेद्ब्राह्मणः स्वकैः । त्रिरात्रं स्यात् तथा शौचमेकाहन्त्वन्यथा स्मृतम् ॥५५॥
अस्थिसञ्चयनादर्वागेकाहः क्षत्र-वैश्ययोः । अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव तु ॥५६॥
अनस्थिसञ्चिते विप्रो ब्राह्मणो रौति चेत् तदा । स्नानेनैव भवेच्छुद्धिः सचेलेन न संशयः ॥५७॥
यस्तैः सहाशनं कुर्याच्छयनादीनि चैव हि । बान्धवो वापरो वापि स दशाहेन शुध्यति ॥५८॥
यस्तेषां सममश्नाति सकृदेवापि कामतः । तदाशौचे निवृत्तेऽसौ स्नानं कृत्वा विशुध्यति ॥५९॥
यावत् तदन्नमश्नाति दुर्भिक्षाभिहतो नरः । तावन्त्यहान्यशौचं स्यात् प्रायश्चित्तं ततश्चरेत् ॥६०॥
दाहाद्यशौचं कर्त्तव्यं द्विजानामग्निहोत्रिणाम् । सपिण्डानाञ्च मरणे मरणादितरेषु च ॥६१॥
सपिण्डता च पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु जन्म-नाम्नारवेदने ॥६२॥
पिता पितामहश्चैव तथैव प्रपितामहः । लेपभाजस्त्रयो ज्ञेयाः सापिण्ड्यं साप्तपौरुषम् ॥६३॥
अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् । तासान्तु भर्तृसापिण्ड्यं प्राह देवः पितामहः ॥६४॥
ये चैकजाता बहवो भिन्नयोनय एव च । भिन्नवर्णास्तु सापिण्ड्यं भवेत् तेषां त्रिपूरुषम् ॥६५॥
कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । दातारो नियमाच्चैव ब्रह्मविद्ब्रह्मचारिणौ ॥६६॥
सत्रिणो व्रतिनस्तावत् सद्यःशौचा उदाहृताः । राजा चैवाभिषिक्तश्च अन्नसत्रिण एव च ॥६७॥
यज्ञे विवाहकाले च देवयागे तथैव च । सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपप्लवे ॥६८॥
सदाहवहतानाञ्च विद्युता पार्थिवैर्द्विजैः । सद्यःशौचं समाख्यातं सर्पादिमरणे तथा ॥६९॥
अग्निमरुत्प्रपतने वीराध्वन्यप्यनाशके । गोब्राह्मणार्थे सन्न्यस्ते सद्यःशौचं विधीयते ॥७०॥
नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् । नाशौचं कीर्त्यते सद्भिः पतिते च तथा मृते ॥७१॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः । नाश्रुपातो न पिण्डो वा कार्यं श्राद्धादिकं क्वचित्॥७२॥
व्यापादयेत् तथात्मानं स्वयं योऽग्निविषादिभिः । विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम् ॥७३॥
अथ कश्चित् प्रमादेन म्रियतेऽग्निविषादिभिः । तस्याशौचं विधातव्यं कार्यञ्चैवोदकादिकम् ॥७४॥
जाते कुमारे तदहः कामं कुर्यात् प्रतिग्रहम् । हिरण्य-धान्य-गो-वासस्तिलान्न-गुड़-सर्पिषाम् ॥७५॥
फलानि पुष्पं शाकञ्च लवणं काष्ठमेव च । तोयं दधि घृतं तैलमौषधं क्षीरमेव च ॥७६॥

आशौचिनो गृहाद्‌ग्राह्यं शुष्कान्नञ्चैव नित्यशः ॥७६॥
आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निर्गृह्येण लौकिकेनेतरो जनः ॥७७॥
देहाभावात् पलाशैस्तु कृत्वा प्रतिकृतिं पुनः । दाहः कार्यो यथा न्यायं सपिण्डैः श्रद्धयान्वितः ॥७८॥
सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः । दशाहं बान्धवाः श्राद्धं सर्वे चैवार्द्रवाससः ॥७९॥
पिण्डं प्रतिदिनं दद्युः सायं प्रातर्यथाविधि । प्रेताय च गृहद्वारि चतुर्थे भोजयेद्‌द्विजान् ॥८०॥
द्वितीयेऽहनि कर्तव्य क्षुरकर्म सबान्धवैः । चतुर्थे बान्धवैः सर्वैरस्थां सञ्चयनं भवेत् ॥८१॥
पूर्वान् प्रयुञ्जयेद्विप्रान् युग्मान् सुश्रद्धया शुचीन् । पञ्चमे नवमे चैव तथैवैकादशेऽहनि ॥
अयुग्मान् भोजयेद्विप्रान् नवश्राद्धन्तु तद्‌द्विजाः ॥८२॥
एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः । द्वादशे वाह्नि कर्त्तव्यं नवमेऽप्यथ वाहनि ॥८३॥
एकं पवित्रमेकोऽर्घः पिण्डपात्रं तथैव च । एवं मृताह्नि कर्तव्यं प्रतिमासन्तु वत्सरम् ॥८४॥
सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः । कुर्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ॥८५॥
प्रेतान्नं पितृपात्रेषु पात्रमासेचयेत् ततः । ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ॥८६॥
सपिण्डीकरणश्राद्धं देवपूर्वं विधीयते । पितृनावाहयेत् तत्र पुनः प्रेतं विनिर्दिशेत् ॥८७॥
ये सपिण्डीकृताः प्रेता न तेषां स्युः पृथक् क्रियाः । यस्तु कुर्यात् पृथक्पिण्डं पितृहा सोऽभिजायते॥८८॥
मृते पितरि वै पुत्रं पिण्डमब्दं समाचरेत् । दद्याच्चान्नं सोदकुम्भं प्रत्यहं प्रेतधर्मतः ॥८९॥
पार्वणेन विधानेन सांवत्सरिकमिष्यते । प्रतिसंवत्सरं कुर्याद्विधिरेष सनातनः ॥९०॥
मातापित्रोः सुतैः कार्यं पिण्डदानादिकञ्च यत् । पत्नी कुर्यात् सुताभावे पत्न्यभावे तु सोदरः ॥९१॥
अनेनैव विधानेन जीवश्राद्धं समाचरेत् । कृत्वा दानादिकं सर्वं श्रद्धायुक्तः समाहितः ॥९२॥
एष वः कथितः सम्यग् गृहस्थानां क्रियाविधिः । स्त्रीणान्तु भर्तृशुश्रूषा धर्मो नान्य इहेष्यते ॥९३॥
स्वधर्मतत्परा नित्यमीश्वरार्पितमानसाः । प्राप्नुवन्ति परं स्थानं यदुक्तं वेदवादिभिः ॥९४॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायामशौचविधिर्नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्विंशोऽध्यायः

## व्यास उवाच

अग्निहोत्रन्तु जुहुयात् सायम्प्रातर्यथाविधि । दर्शेन चैव पक्षान्ते पौर्णमासेन चैव हि ॥ १ ॥
शस्यान्ते नवशस्येष्ट्या तथर्त्त्वन्ते द्विजोऽध्वरैः । पशुना त्वयनस्यान्ते समान्ते सौमिकैर्मखैः ॥ २ ॥
नानिष्ट्वा नवशस्येष्ट्या पशुना वाग्निमान् द्विजः । न चान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥ ३ ॥
नवेनान्नेन चानिष्ट्वा पशुहव्येन चाग्नयः । प्राणानेवात्तुमिच्छन्ति नवान्नामिषगृद्धिनः ॥ ४ ॥
सावित्रान् शान्तिहोमांश्च कुर्यात् पर्वसु नित्यशः । पितॄंश्चैवाष्टकाः सर्वे नित्यमन्वष्टकासु च ॥ ५ ॥
एष धर्मः परो नित्यमपधर्मोऽन्य उच्यते । त्रयाणामिह वर्णानां गृहस्थाश्रमवासिनाम् ॥ ६ ॥
नास्तिक्यादथवालस्याद् योऽग्नीन् नाधातुमिच्छति । यजेत वा न यज्ञेन स याति नरकान् बहून् ॥ ७ ॥
तामिस्रमन्धतामिस्रं महारौरव - रौरवौ । कुम्भीपाकं वैतरणीमसिपत्रवनं तथा ॥ ८ ॥

अन्यांश्च नरकान् घोरान् सम्प्राप्यान्ते स दुर्मतिः। अन्त्यजानां कुले विप्राः शूद्रयोनौ च जायते॥ ९॥
तस्मात् सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः। आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ॥१०॥
अग्निहोत्रात् परो धर्मो द्विजानां नेह विद्यते। तस्मादाराधयेन्नित्यमग्निहोत्रेण शाश्वतम् ॥११॥
यश्चाधायाग्निमालस्यान्न पश्चादेनमिच्छति। स संमूढो न सम्भाष्यः किं पुनर्नास्तिको जनः॥१२॥
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये। अधिकं वा भवेद्यस्य स सोमं पातुमर्हति ॥१३॥
एष वै सर्वयज्ञानां सोमः प्रथम इष्यते। सोमेनाराधयेद्देवं सोमलोकमहेश्वरम् ॥१४॥
न सोमयागादधिको महेशाराधने क्रतुः। समो वा विद्यते तस्मात् सोमेनाभ्यर्चयेत् परम्॥१५॥
पितामहेन विप्राणामादावभिहितः शुभः। धर्मो विमुक्तये साक्षाच्छ्रौतः स्मार्त्तो द्विधा पुनः॥१६॥
श्रौतस्त्रेताग्निसम्बन्धात् स्मार्त्तः पूर्वं मयोदितः। श्रेयस्करतमः श्रौतस्तस्माच्छ्रौतं समाचरेत् ॥१७॥
उभावपि हितौ धर्मौ वेदादेव विनिःसृतौ। शिष्टाचारस्तृतीयः स्याच्छ्रुतिस्मृत्योरलाभतः ॥१८॥
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेया नित्यमात्मगुणान्विताः॥१९॥
तेषामभिमतो यः स्याच्चेतसा नित्यमेव हि। स धर्मः कथितः सद्भिर्नान्येषामिति धारणा ॥२०॥
पुराणं धर्मशास्त्राणि वेदानामुपबृंहणम्। एकस्माद्ब्रह्मविज्ञानं धर्मज्ञानं तथैकतः ॥२१॥
धर्मं जिज्ञासमानानां तत् प्रमाणतरं स्मृतम्। धर्मशास्त्रं पुराणानि ब्रह्मज्ञानपरायणाः ॥२२॥
नान्यतो जायते धर्मो ब्रह्मविद्या च वैदिकी। तस्माद्धर्मं पुराणञ्च श्रद्धातव्यं मनीषिभिः ॥२३॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायामग्निहोत्रादिनियमो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः

### व्यास उवाच

एष वोऽभिहितः कृत्स्नो गृहस्थाश्रमवासिनः। द्विजातेः परमो धर्मो वर्त्तनानि निबोधत ॥ १ ॥
द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः। अध्यापनं याजनञ्च पूर्वस्याहुः प्रतिग्रहम्।
कुसीद-कृषि-वाणिज्यं प्रकुर्वीतास्वयङ्कृतम् ॥ २ ॥
कृषेरभावे वाणिज्यं तदभावे कुसीदकम्। आपत्कल्पस्त्वयं ज्ञेयः पूर्वोक्तो मुख्य इष्यते ॥ ३ ॥
स्वयं वा कर्षणं कुर्याद्वाणिज्यं वा कुसीदकम्। कष्टा पापीयसी वृत्तिः कुसीदं तद्विवर्जयेत् ॥ ४ ॥
क्षात्रवृत्तिं परां प्राहुर्न स्वयङ्कर्षणं द्विजैः। तस्मात् क्षात्रेण वर्तेत वर्तते नापदि द्विजः ॥ ५ ॥
तेन चैवाप्यजीवंस्तु वैश्यवृत्तिः कृषिं व्रजेत्। न कथञ्चन कुर्वीत ब्राह्मणः कर्म कर्षणम् ॥ ६ ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत्। ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥ ७ ॥
देवेभ्यश्च पितृभ्यश्च दद्याद्भागन्तु विंशकम्। त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन् न दुष्यति॥ ८ ॥
वाणिज्ये द्विगुणं दद्यात् कुसीदी त्रिगुणं पुनः। कृषिपालान्न दोषेण युज्यते नात्र संशयः ॥ ९ ॥
शिलोञ्छं वाप्याददीत गृहस्थः साधकः पुनः। विद्याशिल्पादयस्त्वन्ये बहवो वृत्तिहेतवः ॥१०॥
असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः। शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः ॥११॥
अमृतेनाथवा जीवेन्मृतेनाप्यथवापदि। अयाचितं स्यादमृतं मृतं भैक्षन्तु याचितम् ॥१२॥

कुशूलधान्यको वा स्यात् कुम्भीधानक एव च । अयहैहिको वापि भवेदश्वस्तनिक एव च ॥१३॥
चतुर्णामपि वै तेषां द्विजानां गृहमेधिनाम् । श्रेयान् परः परो ज्ञेयो धर्मतो लोकजित्तमः ॥१४॥
षट्कर्म्मको भवेत् तेषां त्रिभिरन्यः प्रवर्त्तते । द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥१५॥
वर्त्तयंस्तु शिलोञ्छाभ्यामग्निहोत्रपरायणः । इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा॥१६॥
न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथञ्चन । अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम् ॥१७॥
याचित्वा चाथ सद्भ्योऽन्नं पितॄन् देवांस्तु तोषयेत् । याचयेद्वा शुचिं दान्तं न तु तृप्येत् स्वयं ततः॥१८॥
यस्तु द्रव्यार्जनं कृत्वा गृहस्थास्तोषयेन्न तु । देवान् पितॄंस्तु विधिना शुनां योनिं व्रजत्यसौ॥१९॥
धर्मश्चार्थश्च कामश्च श्रेयो मोक्षश्चतुष्टयम् । धर्माविरुद्धः कामः स्याद्ब्राह्मणानान्तु नेतरः॥२०॥
योऽर्थो धर्माय नात्मार्थं सोऽर्थो नार्थस्तथेतरः । तस्मादर्थं समासाद्य दद्याद् वै जुहुयाद्द्विजः ॥२१॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां द्विविधगृहिवृत्तिकथनं
नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

# षड्‌विंशोऽध्यायः

## व्यास उवाच

अथातः सम्प्रवक्ष्यामि दानधर्ममनुत्तमम् । ब्रह्मणाभिहितं पूर्वमृषीणां ब्रह्मवादिनाम् ॥ १ ॥
अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् । दानमित्यभिनिर्दिष्टं भुक्ति-मुक्तिफलप्रदम् ॥ २ ॥
यद्ददाति विशिष्टेभ्यः शिष्टेभ्यः श्रद्धया युतः । तद् वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥ ३ ॥
नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते । चतुर्थं विमलं प्रोक्तं सर्वदानोत्तमोत्तमम् ॥ ४ ॥
अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे । अनुद्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यकम् ॥ ५ ॥
यत् तु पापोपशान्त्यर्थं दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥ ६ ॥
अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते । दानं तत् काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥ ७ ॥
यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते । चेतसा धर्मयुक्तेन दानं तद्विमलं शिवम् ॥ ८ ॥
दानधर्मं निषेवेत पात्रमासाद्य शक्तितः । उत्पत्स्यते हि तत् पात्रं यत् तारयति सर्वतः ॥ ९ ॥
कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते । अन्यथा दीयते यद्धि न तद्दानं फलप्रदम् ॥१०॥
श्रोत्रियाय कुलीनाय विनीताय तपस्विने । व्रतस्थाय दरिद्राय प्रदेयं भक्तिपूर्वकम् ॥११॥
यस्तु दद्यान्महीं भक्त्या ब्राह्मणायाहिताग्नये । स याति परमं स्थानं यत्र गत्वा न शोचति ॥१२॥
इक्षुभिः सन्ततां भूमिं यव-गोधूमशालिनीम् । ददाति वेदविदुषे यः स भूयो न जायते ॥१३॥
गोचर्ममात्रामपि वा यो भूमिं सम्प्रयच्छति । ब्राह्मणाय दरिद्राय सर्वपापैः प्रमुच्यते ॥१४॥
भूमिदानात् परं दानं विद्यते नेह किञ्चन । अन्नदानं तेन तुल्यं विद्यादानं ततोऽधिकम् ॥१५॥
यो ब्राह्मणाय शान्ताय शुचये धर्मशालिने । ददाति विद्यां विधिना ब्रह्मलोके महीयते ॥१६॥
दद्यादहरहस्त्वन्नं श्रद्धया ब्रह्मचारिणे । सर्वपापविनिर्मुक्तो ब्रह्मणः स्थानमाप्नुयात् ॥१७॥
गृहस्थायान्नदानेन फलं नाप्नोति मानवः । आममेवास्य दातव्यं दत्त्वाप्नोति परां गतिम् ॥१८॥

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च वा । उपोष्य विधिना शान्तान् शुचीन् प्रयतमानसः ॥१९॥
पूजयित्वा तिलः कृष्णैर्मधुना च विशेषतः । गन्धादिभिः समभ्यर्च्य वाचयित्वा स्वयं वदेत् ॥२०॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते । यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति ॥२१॥
कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥२२॥
कृतान्नमुदकुम्भञ्च वैशाख्याञ्च विशेषतः । निर्द्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥२३॥
सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा । तर्पयेदुदपात्राणि ब्रह्महत्यां व्यपोहति ॥२४॥
माघमासे तमिस्रे तु द्वादश्यां समुपोषितः । शुक्लाम्बरधरः कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥२५॥
प्रदद्याद्ब्राह्मणेभ्यस्तु तिलानेव समाहितः । जन्मप्रभृति यत् पापं सर्वं तरति वै द्विजः ॥२६॥
अमावास्यामनुप्राप्य ब्राह्मणाय तपस्विने । यत्किञ्चिद्देवदेवेशं दद्याद्वोद्दिश्य शङ्करम् ॥२७॥
प्रीयतामीश्वरः सोमो महादेवः सनातनः । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥२८॥
यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् । आराधयेद्द्विजमुखे न तस्यास्ति पुनर्भवः ॥२९॥
कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये । स्नात्वाभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः ॥३०॥
प्रीयतां मे महादेवो दद्याद्द्रव्यं स्वकीयकम् । सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥३१॥
द्विजैः कृष्णचतुर्द्दश्यां कृष्णाष्टम्यां विशेषतः । अमावास्यान्तु वै भक्तैः पूजनीयस्त्रिलोचनः ॥३२॥
एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् । अर्चयेद्ब्राह्मणमुखे स गच्छेत् परमं पदम् ॥३३॥
एषा तिथिर्वैष्णवी स्याद्द्वादशी शुक्लपक्षके । तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम् ॥३४॥
यत्किञ्चिद्देवमीशानमुद्दिश्य ब्राह्मणे शुचौ । दीयते विष्णवे वापि तदनन्तफलं स्मृतम् ॥३५॥
यो हि यां देवतामिच्छेत् समाराधयितुं नरः । ब्राह्मणान् पूजयेद्विद्वान् स तस्यास्तोषहेतुतः ॥३६॥
द्विजानां वपुरास्थाय नित्यं तिष्ठन्ति देवताः । पूज्यन्ते ब्राह्मणालाभे प्रतिमादिष्वपि क्वचित् ॥३७॥
तस्मात् सर्वप्रयत्नेन तत्तत् फलमभीप्सुभिः । द्विजेषु देवता नित्यं पूजनीया विशेषतः ॥३८॥
विभूतिकामः सततं पूजयेद्वै पुरन्दरम् । ब्रह्मवर्चसकामस्तु ब्रह्माणं ब्रह्मकामुकः ॥३९॥
आरोग्यकामोऽथ रविं धेनुकामो हुताशनम् । कर्मणां सिद्धिकामस्तु पूजयेद्वै विनायकम् ॥४०॥
भोगकामस्तु शशिनं बलकामः समीरणम् । मुमुक्षुः सर्वसंसारात् प्रयत्नेनार्चयेद्धरिम् ॥४१॥
यस्तु योगं तथा मोक्षमिच्छेत् तज्ज्ञानमैश्वरम् । सोऽर्चयेद्वै विरूपाक्षं प्रयत्नेन महेश्वरम् ॥४२॥
यो वाञ्छति महाभोगान् ज्ञानानि च महेश्वरम् । स पूजयति भूतेशं केशवञ्चापि भोगिनम् ॥४३॥
वारिदस्तृप्तिमाप्नोति धनमक्षयमन्नदः । तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥४४॥
भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥४५॥
वासोदश्चन्द्रसालोक्यमश्वदो यानमुत्तमम् । अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥४६॥
यान शय्याप्रदो भार्यामैश्वर्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ॥४७॥
धान्यान्यपि यथाशक्ति विप्रेषु प्रतिपादयेत् । वेदवित्सु विशिष्टेषु प्रेत्य स्वर्गं समश्नुते ॥४८॥
गवां घासप्रदानेन सर्वपापैः प्रमुच्यते । इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥४९॥
फलमूलानि शाकानि भोज्यानि विविधानि च । प्रदद्याद्ब्राह्मणेभ्यस्तु मुदा युक्तः सदा भवेत् ॥५०॥
औषधं स्नेहमाहारं रोगिणे रोगशान्तये । ददानो रोगरहितः सुखी दीर्घायुरेव च ॥५१॥
असिपत्रवनं दुर्गं क्षुरधारासमन्वितम् । तीव्रतापञ्च तरति च्छत्रोपानत्प्रदो नरः ॥५२॥
यद् यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥५३॥
अयने विषुवे चैव ग्रहणे चन्द्र-सूर्ययोः । संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥५४॥

प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च । दत्त्वा चाक्षयमाप्नोति नदीषु च नदेषु च ॥५५॥
दानधर्मात् परो धर्मो भूतानां नेह विद्यते तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ॥५६॥
स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये । मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथान्वहम् ॥५७॥
दीयमानन्तु यो मोहाद् गोविप्राग्निसुरेषु च । निवारयति पापात्मा तिर्यग्योनिं व्रजेत् तु सः ॥५८॥
यस्तु द्रव्यार्जनं कृत्वा नार्चयेद् ब्राह्मणान् सुरान् सर्वस्वमपहृत्यैनं राष्ट्राद्विप्रतिवासयेत् ॥५९॥
यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति । म्रियमाणेषु विप्रेषु ब्रह्महा स तु गर्हितः ॥६०॥
तस्मान्न प्रतिगृह्णीयान्न वै देयञ्च तस्य हि । अङ्कयित्वा स्वकाद्राष्ट्रात् त राजा विप्रवासयेत्॥६१॥
यस्त्वसङ्घ्यो ददातीह स्वद्रव्य ब्रह्मसाधनम् । स पूर्वाभ्यधिकः पापी नरके पच्यते नरः ॥६२॥
स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः । सत्य - संयमसंयुक्तास्तेभ्यो दद्याद् द्विजोत्तमाः ॥६३॥
सुभुक्तमपि विद्वांसं धार्मिकं भोजयेद् द्विजम् । न तु मूर्खमवृत्तस्थं दशरात्रमुपोषितम् ॥६४॥
सन्निकृष्टमतिक्रम्य श्रोत्रियं यः प्रयच्छति । स तेन कर्मणा पापी दहत्यासप्तमं कुलम् ॥६५॥
यदि स्यादधिको विप्रः शीलविद्यादिभिः स्वयम् । तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम् ॥६६॥
योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव वा । तावुभौ गच्छतः स्वर्गं नरकन्तु विपर्यये ॥६७॥
न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि च । न पाषण्डेषु सर्वेषु नावेदविदि धर्मवित् ॥६८॥
अपूपञ्च हिरण्यञ्च गामश्वं पृथिवीं तिलान् । अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत् ॥६९॥
द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः । अपि राजन्य - वैश्याभ्यां न तु शूद्रात् कथञ्चन ॥७०॥
वृत्तिसङ्कोचमन्विच्छेन्नेहेत धनविस्तरम् । धनलोभप्रसक्तस्तु ब्राह्मण्यादेव हीयते ॥७१॥
वेदानधीत्य सकलान् यज्ञांश्चावाप्य सर्वशः । न तां गतिमवाप्नोति सङ्कोचाद यामवाप्नुयात्॥७२॥
प्रतिग्रहरुचिर्न स्याद्यात्रार्थन्तु धनं हरेत् । स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्॥७३॥
यस्तु याचनको नित्यं न स स्वर्गस्य भाजनम् । उद्वेजयति भूतानि यथा चोरस्तथैव सः ॥७४॥
गुरून् भृत्यांश्चोजिहीर्षन्नर्चिष्यन् देवतातिथीन् । सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥७५॥
एवं गृहस्थो युक्तात्मा देवतातिथिपूजकः । वर्त्तमानः संयतात्मा याति तत् परमं पदम् ॥७६॥
पुत्रे निधाय वा सर्वं गत्वारण्यन्तु तत्त्ववित् । एकाकी विचरेन्नित्यमुदासीनः समाहितः ॥७७॥
एष वः कथितो धर्मो गृहस्थानां द्विजोत्तमाः । ज्ञात्वा तु तिष्ठेन्नियतं तथानुष्ठापयेद् द्विजान् ॥७८॥

इति देवमनादिमेकमीशं गृहधर्मेण समर्चयेदजस्रम् ।
समतीत्य सर्वभूतयोनिं प्रकृतिं परं न याति जन्म ॥७९॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां
दानधर्मादिकथनं नाम षड्विंशोऽध्यायः ॥२६॥

# सप्तविंशोऽध्यायः

## व्यास उवाच

एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः । वानप्रस्थाश्रमं गच्छेत् सदारः साग्निरेव वा ॥ १ ॥
निक्षिप्य भार्यां पुत्रेषु गच्छेद्वनमथापि वा । दृष्ट्वाऽपत्यस्य चापत्यं जर्जरीकृतविग्रहः ॥ २ ॥
शुक्लपक्षस्य पूर्वाह्णे प्रशस्ते चोत्तरायणे । गत्वाऽरण्यं नियमवांस्तपः कुर्यात् समाहितः ॥ ३ ॥
फलमूलानि पूतानि नित्यमाहारमाहरेत् । यताहारो भवेत् तेन पूजयेत् पितृ - देवताः ॥ ४ ॥
पूजयेदतिथीन् नित्यं स्नात्वा चाभ्यर्चयेत् सुरान् । गृहानागत्य चाश्नीयादष्टौ ग्रासान् समाहितः ॥ ५ ॥
जटां वै बिभृयान्नित्यं नख-रोमाणि नोत्सृजेत् । स्वाध्यायं सर्वदा कुर्यान्नियच्छेद्वाचमन्यतः ॥ ६ ॥
अग्निहोत्रञ्च जुहुयात् पञ्च यज्ञान् समाचरेत् । मुन्यन्नैर्विविधैर्वन्यैः शाक - मूल - फलेन च ॥ ७ ॥
चीरवासा भवेन्नित्यं स्नाति त्रिषवणं शुचिः । सर्वभूतानुकम्पी स्यात् प्रतिग्रहविवर्जितः ॥ ८ ॥
सदर्शपौर्णमासेन यजेत नियतं द्विजः । ऋक्षेष्वाग्रयणे चैव चातुर्मास्यानि चाहरेत् ॥ ९ ॥
उत्तरायणञ्च क्रमशो दक्षस्यायनमेव च । वासन्तैः शारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ॥१०॥
पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत् पृथक् । देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः ॥११॥
शेषं समुपभुञ्जीत लवणञ्च स्वयं कृतम् । वर्जयेन्मधु-मांसानि भौमानि कवकानि च ॥१२॥
भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च । न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥१३॥
न ग्रामजातान्यार्त्तोऽपि पुष्पाणि च फलानि च । श्रावणेनैव विधिना वह्निं परिचरेत् सदा ॥१४॥
न द्रुह्येत् सर्वभूतानि निर्द्वन्द्वो निर्भयो भवेत् । न नक्तं किञ्चिदश्नीयाद्रात्रौ ध्यानपरो भवेत् ॥१५॥
जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः । ब्रह्मचारी भवेन्नित्यं न पत्नीमपि संश्रयेत् ॥१६॥
यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् । तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः ॥१७॥
तत्र यो जायते गर्भो न संस्पृश्यो द्विजातिभिः । न च वेदेऽधिकारोऽस्य तद्वंशेऽप्येवमेव हि ॥१८॥
अधः शयीत नियतं सावित्रीजपतत्परः । शरण्यः सर्वभूतानां संविभागरतः सदा ॥१९॥
परिवादं मृषावादं निद्रालस्यं विवर्जयेत् । एकाग्निरनिकेतःस्यात् प्रोक्षितां भूमिमाश्रयेत् ॥२०॥
मृगैः सह चरेद्वासं तैः सहैव च संविशेत् । शिलायां वा शर्करायां शयीत सुसमाहितः ॥२१॥
सद्यः प्रक्षालको वा स्यान्माससञ्चयिकोऽपि वा । षण्मासनिचयो वा स्यात् समानिचय एव च ॥२२॥
त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसञ्चितम् । जीर्णानि चैव वासांसि शाक-मूल फलानि च ॥२३॥
दंतोलूखलिको वा स्यात् कापोतीं वृत्तिमाश्रयेत् । अश्मकुट्टो भवेद्वापि कालपक्वभुगेव च ॥२४॥
नक्तञ्चान्नं समश्नीयाद्दिवा चाहृत्य शक्तितः । चतुर्थकालिको वा स्यात् स्याद्वा चाष्टमकालिकः ॥२५॥
चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्त्तयेत् । पक्षे पक्षे समश्नीयाद्यवागूं क्वथितां सकृत् ॥२६॥
पुष्प - मूल - फलैर्वापि केवलैर्वर्त्तयेत् सदा । स्वाभाविकैः स्वयंशीर्णैर्वैखानसमते स्थितः ॥२७॥
भूमौ वा परिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् । स्थानासनाभ्यां विहरेन्न क्वचिद्धैर्यमुत्सृजेत् ॥२८॥
ग्रीष्मे पञ्चतपास्तद्वद्वर्षास्वभ्रावकाशकः । आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः ॥२९॥
उपस्पृश्य त्रिषवणं पितृदेवांश्च तर्पयेत् । एकपादेन तिष्ठेत मरीचीन् वा पिबेत् तदा ॥३०॥
पञ्चाग्निर्धूमपो वा स्यादुष्मपः सोमपोऽथवा । पयः पिबेच्छुक्लपक्षे कृष्णपक्षे च गोमयम् ॥३१॥
शीर्णपर्णाशनो वा स्यात् कृच्छ्रैर्वा वर्त्तयेत् सदा । योगाभ्यासरतश्चैव रुद्राध्यायी भवेत् सदा ।
अथर्वशिरसोऽध्येता वेदान्ताभ्यासतत्परः ॥३२॥

यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः । कृष्णाजिनी सोत्तरीयः शुक्लयज्ञोपवीतवान् ॥३३॥
अथ चाग्नीन् समारोप्य स्वात्मनि ध्यानतत्परः । अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत् ॥३४॥
तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥३५॥
ग्रामादाहृत्य चाश्नीयादष्टौ ग्रासान् वने वसन् । प्रतिगृह्य पुटेनैव पाणिना करकेण वा ॥३६॥
विविधाश्चोपनिषद आत्मसंसिद्धये जपेत् । विद्याविशेषान् सावित्रीं रुद्राध्यायं तथैव च ॥३७॥
महाप्रस्थानिकं वासौ कुर्यादनशनन्तु वा । अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः ॥३८॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां वानप्रस्थाश्रमधर्मो नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

# अष्टाविंशोऽध्यायः

## व्यास उवाच

एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः । चतुर्थमायुषो भागं सन्यासेन नयेत् क्रमात् ॥ १ ॥
अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् । योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥ २ ॥
यदा मनसि सञ्जातं वैतृष्ण्यं सर्ववस्तुषु । तदा सन्यासमिच्छन्ति पतितः स्याद्विपर्यये ॥ ३ ॥
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः । दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ॥ ४ ॥
ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनः परे । कर्मसन्न्यासिनस्त्वन्ये त्रिविधाः परिकीर्त्तिताः ॥ ५ ॥
यः सर्वसङ्गनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः । प्रोच्यते ज्ञानसन्न्यासी स्वात्मन्येव व्यवस्थितः ॥ ६ ॥
वेदमेवाभ्यसेन्नित्यं निर्द्वन्द्वो निष्परिग्रहः । प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः ॥ ७ ॥
यस्त्वग्नीनात्मसात् कृत्वा ब्रह्मार्पणपरो द्विजः । स ज्ञेयः कर्मसन्न्यासी महायज्ञपरायणः ॥ ८ ॥
त्रयाणामपि चैतेषां योगी त्वभ्यधिको मतः । न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ॥ ९ ॥
निर्ममो निर्भयः शान्तो निर्द्वन्द्वो निष्परिग्रहः । जीर्णकौपीनवासाः स्यान्नग्नो वा ध्यानतत्पर ॥१०॥
ब्रह्मचारी मितग्रासी ग्रामात् त्वन्नं समाहरेत् । अध्यात्ममतिरासीत निरपेक्षो निरामिषः ॥
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥११॥
नाभिनन्देत मरणं नाभिनन्देत जोवितम् । कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥१२॥
नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन । एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ॥१३॥
एकवासाथवा विद्वान् कौपीनाच्छादनस्तथा । मुण्डी शिखी वाथ भवेत् त्रिदण्डी निष्परिग्रहः॥१४॥
काषायवासाः सततं ध्यानयोगपरायणः । ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ॥१५॥
समः शत्रौ च मित्रे च तथा मानापमानयोः । भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेत् क्वचित् ॥१६॥
यस्तु मोहेन वान्यस्मादेकान्नादी भवेद् यतिः । न तस्य निष्कृतिः काचिद्धर्मशास्त्रेषु कथ्यते ॥१७॥
राग-द्वेषविमुक्तात्मा समलोष्टाश्मकाञ्चनः । प्राणिहिंसानिवृत्तश्च मौनी स्यात् सर्वनिस्पृहः॥१८॥

दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥१९॥
नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्र भिक्षुकः । स्नान-शौचरतो नित्यं कमण्डलुकरः शुचिः ॥२०॥
ब्रह्मचर्यरतो नित्यं वनवासरतो भवेत् । मोक्षशास्त्रेषु निरतो ब्रह्मचारी जितेन्द्रियः ॥२१॥
दम्भाहङ्कारनिर्मुक्तो निन्दा - पैशुन्यवर्जितः । आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ॥२२॥
अभ्यसेत् सततं देवं प्रणवाख्यं सनातनम् । स्नात्वाचम्य विधानेन शुचिर्देवालयादिषु ॥२३॥
यज्ञोपवीती शान्तात्मा कुशपाणिः समाहितः । धौतकाषायवसनो भस्मच्छन्नतनूरुहः ॥२४॥
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव वा । आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत् ॥२५॥
पत्रेषु चाथ निवसन् ब्रह्मचारी यतिर्मुनिः । वेदमेवाभ्यसेन्नित्यं स याति परमां गतिम् ॥२६॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं ततः परम् । क्षमा दया च सन्तोषो व्रतान्यस्य विशेषतः ॥२७॥
वेदान्तज्ञाननिष्ठो वा पञ्च यज्ञान् समाहितः । कुर्यादहरहः स्नात्वा भिक्षान्नेनैव तेन हि ॥२८॥
होममन्त्रान् जपेन्नित्यं होमकाले समाहितः । स्वाध्यायश्चान्वहं कुर्यात् सावित्रीं सन्ध्ययोर्जपेत्॥२९॥
ध्यायीत सतत देवमेकान्ते परमेश्वरम् । एकान्तं वर्जयेन्नित्यं कामं क्रोधं परिग्रहम् ॥३०॥
एकवासा द्विवासा वा शिखी यज्ञोपवीतवान् । कमण्डलुधरो विद्वांस्त्रिदण्डी याति तत्परम् ॥३१॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां
यतिधर्मो नामाष्टाविंशोऽध्यायः ॥२८॥

------

## एकोनत्रिंशोऽध्यायः

### व्यास उवाच

एवं स्वाश्रमनिष्ठानां यतीनां नियतात्मनाम् । भैक्ष्येण वर्त्तनं प्रोक्तं फल-मूलैरथापि वा ॥ १ ॥
एकं कालं चरेद् भैक्षं न प्रसज्येत विस्तरे । भैक्ष्यप्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ २ ॥
सप्तागारं चरेद् भैक्षमलाभे तु पुनश्चरेत् । प्रक्षाल्य पात्रे भुञ्जीत अद्भिः प्रक्षालयेत् पुनः ॥ ३ ॥
अथवान्यदुपादाय पात्रे भुञ्जीत नित्यशः । भुक्त्वा तत् संमृजेत् पात्रं यात्रामात्रमलोलुपः ॥ ४ ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवर्जने । वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥ ५ ॥
गोदोहमात्रं तिष्ठेत कालं भिक्षुरधोमुखः । भिक्षेत्युक्त्वा सकृत् तूष्णीमश्नीयाद्वाग्यतः शुचिः॥ ६ ॥
प्रक्षाल्य पाणी पादौ च समाचम्य यथाविधि । आदित्ये दर्शयित्वान्नं भुञ्जीत प्राङ्मुखोऽत्वरः ॥ ७ ॥
हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः । आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥ ८ ॥
अलाबुपात्रं दारवञ्च मृन्मयं वैणवं ततः । चत्वारि यतिपात्राणि मनुराह प्रजापतिः ॥ ९ ॥
प्राग्रात्रे पररात्रे च मध्यरात्रे तथैव च । सन्ध्यास्वग्निविशेषेण चिन्तयेन्नित्यमीश्वरम् ॥१०॥
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसम्भवम् । आत्मानं सर्वभूतानां परस्तात् तपसि स्थितम् ॥११॥
सर्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम् । प्रधानपुरुषातीतमाकाशकुहरं शिवम् ॥१२॥
तदन्तः सर्वभावानामीश्वरं ब्रह्मरूपिणम् । ध्यायेदनादिमध्यान्तमानन्दाख्यगुणालयम् ॥१३॥
महान्तं पुरुषं ब्रह्म ब्रह्माणं सत्यमव्ययम् । सितेतरारुणाकारं महेशं विश्वरूपिणम् ॥१४॥
ओङ्कारेणाथ चात्मानं संस्थाप्य परमात्मनि । आकाशे देवमीशानं ध्यायीताकाशमध्यगम् ॥१५॥
कारणं सर्वभावानामानन्दैकसमाश्रयम् । पुराणं पुरुषं शुभ्रं ध्यायन् मुच्येत बन्धनात् ॥१६॥
यद्वा गुहायां प्रकृतौ जगत्संमोहनालये । विचिन्त्य परमं व्योम सर्वभूतैककारणम् ॥१७॥

जीवनं सर्वभूतानां यत्र लोकः प्रलीयते । आनन्दं ब्रह्मणः सूक्ष्मं यत् पश्यन्ति मुमुक्षवः ॥१८॥
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् । अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः ॥१९॥
गुह्याद् गुह्यतमं ज्ञानं यतीनामेतदीरितम् । योऽनुतिष्ठेत सततं सोऽश्नुते योगमैश्वरम् ॥२०॥
तस्माद् ध्यानरतो नित्यमात्मविद्यापरायणः । ज्ञानं समभ्यसेद् ब्राह्मं येन मुच्येत बन्धनात् ॥२१॥
मत्वा पृथक् स्वमात्मानं सर्वस्मादेव केवलम् । आनन्दमजरं ज्ञानं ध्यायीत च पुनः परम् ॥२२॥
यस्माद्भवन्ति भूतानि यद् गत्वा नेह जायते । स तस्मादीश्वरो देवः परस्ताद् योऽधितिष्ठति ॥२३॥
यदन्तरे तद्गगनं शाश्वतं शिवमव्ययम् । यदंशस्तत्परो यस्तु स देवः स्यान्महेश्वरः ॥२४॥
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च । एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥२५॥
उपेत्य तु स्त्रियं कामात् प्रायश्चित्तं समाहितः । प्राणायामसमायुक्तं कुर्यात्सान्तपनं शुचिः ॥२६॥
ततश्चरेत नियमात् कृच्छ्रं संयतमानसः । पुनराश्रममागम्य चरेद्भिक्षुरतन्द्रितः ॥२७॥
'न नर्मयुक्तमनृतं हिनस्ती'ति मनोषिणः । तथापि च न कर्त्तव्यं प्रसङ्गो ह्येष दारुणः ॥२८॥
एकरात्रोपवासश्च प्राणायामशतं तथा । उक्त्वानृतं प्रकर्त्तव्यं यतिना धर्मलिप्सुना ॥२९॥
परमापद्गतेनापि न कार्यं स्तेयमन्यतः । स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म इति श्रुतिः ॥३०॥
हिंसा चैषा परा दिष्टा या चात्मज्ञाननाशिका । तदेतद् द्रविणं नाम प्राणा ह्येते बहिश्चिराः ॥३१॥
स तस्य हरति प्राणान् यो यस्य हरते धनम् । एतत् कृत्वा स दुष्टात्मा भिन्नवृत्तो व्रताच्च्युतः ॥३२॥
भूयो निर्वेदमापन्नश्चरेच्चान्द्रायणव्रतम् । विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ॥३३॥
अकस्मादेव हिंसान्तु यदि भिक्षुः समाचरेत् । कुर्यात् कृच्छ्रातिकृच्छ्रन्तु चान्द्रायणमथापि वा ॥३४॥
स्कन्देदिन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि । तेन धारयितव्या वै प्राणायामास्तु षोडश ।
दिवास्कन्ने त्रिरात्रं स्यात् प्राणायामशतं तथा ॥३५॥
एकान्ने मधुमांसे च नवश्राद्धे तथैव च । प्रत्यक्षलवणे चोक्तं प्राजापत्यं विशोधनम् ॥३६॥
ध्याननिष्ठस्य सततं नश्यते सर्वपातकम् । तस्मान्महेश्वरं ज्ञात्वा तद्ध्यानपरमो भवेत् ॥३७॥
यद् ब्रह्म परमं ज्योतिः प्रतिष्ठाक्षरमव्ययम् । योऽन्तरा परमं ब्रह्म स विज्ञेयो महेश्वरः ॥३८॥
एष देवो महादेवः केवलः परमः शिवः । तदेवाक्षरमद्वैतं तदादित्यान्तरं परम् ॥३९॥
यस्मान्महीयते देवः स्वधाम्नि ज्ञानसंस्थिते । आत्मयोगाह्वये तत्त्वे महादेवस्ततः स्मृतः ॥४०॥
नान्यं देवं महादेवाद् व्यतिरिक्तं प्रपश्यति । तमेवात्मानमन्वेति यः स याति परं पदम् ॥४१॥
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् । न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥४२॥
एकमेनं परं ब्रह्म विज्ञेयं तत्त्वमव्ययम् । स देवस्तु महादेवो नैतद्विज्ञाय बध्यते ॥४३॥
तस्माद् यजेत नियतं यतिः संयतमानसः । ज्ञानयोगरतः शान्तो महादेवपरायणः ॥४४॥
एष वः कथितो विप्रा यतीनामाश्रमः शुभः । पितामहेन विभुना मुनीनां पूर्वमीरितः ॥४५॥
नापुत्रशिष्ययोगिभ्यो दद्यादिदमनुत्तमम् । प्रोक्तं स्वयम्भुवा ज्ञानं यतिधर्माश्रयं शुभम् ॥४६॥

इति यतिनियमानामेतदुक्तं विधानं पशुपतिपरितोषे यद्भवेदेकहेतुः ।
न भवति पुनरेषामुद्भवो वा विनाशः प्रणिहितमनसा ये नित्यमेवाचरन्ति ॥४७॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां
यतिधर्मो नामैकोनत्रिंशोऽध्यायः ॥२९॥

———

# त्रिंशोऽध्यायः

## व्यास उवाच

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् । हिताय सर्वविप्राणां पापानामपनुत्तये ॥ १ ॥
अकृत्वा विहितं कर्म कृत्वा निन्दितमेव च । दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥ २ ॥
प्रायश्चितमकृत्वा तु न तिष्ठेद् ब्राह्मणः क्वचित् । यद् ब्रूयुर्ब्राह्मणाः शान्ता विद्वांसस्तत् समाचरेत् ॥ ३ ॥
वेदार्थवित्तमः शान्तो धर्मकामोऽग्निमान् द्विजः । स एव स्यात् परो धर्मो यमेकोऽपि व्यवस्यति ॥ ४ ॥
अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः । यद् ब्रूयुर्धर्मकामास्ते तज्ज्ञेयं धर्मसाधनम् ॥ ५ ॥
अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः । वेदाध्ययनसम्पन्नाः सप्तैते परिकीर्त्तिताः ॥ ६ ॥
मीमांसा - न्यायतत्वज्ञा वेदान्तकुशला द्विजाः । एकविंशतिविख्याताः प्रायश्चित्तं वदन्ति वै ॥ ७ ॥
ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च । महापातकिनस्त्वेते यश्चैतैः सह संविशेत् ॥ ८ ॥
संवत्सरन्तु पतितः संसर्गं कुरुते तु यः । यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत् ॥ ९ ॥
याजनं योनिसम्बन्धं तथैवाध्यापनं द्विजः । कृत्वा सद्यः पतेज् ज्ञानात् सहभोजनमेव च ॥१०॥
अविज्ञायाथ यो मोहात् कुर्यादध्यापनं द्विजः । संवत्सरेण पतति सहाध्ययनमेव च ॥११॥
ब्रह्महा द्वादशाब्दानि कुटिं कृत्वा वने वसेत् । भिक्षेदात्मविशुद्धयर्थं कृत्वा शवशिरोध्वजम् ॥१२॥
ब्राह्मणावसथान् सर्वान् देवागाराणि वर्जयेत् । विनिन्दन् स्वयमात्मानं ब्राह्मणं तञ्च संस्मरन् ॥१३॥
असङ्कल्पितयोग्यानि सप्तागाराणि संविशेत् । विधूमे शनकैर्नित्यं व्यङ्गारे भुक्तवर्जने ॥१४॥
एककालं चरेद् भैक्षं दोषं विख्यापयन् नृणाम् । वन्यमूलफलैर्वापि वर्त्तयेद्धैर्यमाश्रितः ॥१५॥
कपालपाणिः खट्वाङ्गी ब्रह्मचर्यपरायणः । पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥१६॥
अकामतः कृते पापे प्रायश्चित्तमिदं शुभम् । कामतो मरणाच्छुद्धिर्ज्ञेया नान्येन केनचित् ॥१७॥
कुर्यादनशनं वाथ भृगोः पतनमेव वा । ज्वलितं वा विशेदग्निं जलं वा प्रविशेत् स्वयम् ॥१८॥
ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत् । ब्रह्महत्यापनोदार्थमन्तरा वा मृतस्य तु ॥१९॥
दीर्घामयाविनं विप्रं कृत्वाऽनामयमेव वा । दत्त्वा चान्नं सुविदुषे ब्रह्महत्यां व्यपोहति ॥२०॥
अश्वमेधावभृथके स्नात्वा वै शुध्यते द्विजः । सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदाय च ॥२१॥
सरस्वत्यास्त्वरुणया सङ्गमे लोकविश्रुते । शुध्येत् त्रिषवणस्नानात् त्रिरात्रोपोषितो द्विजः॥२२॥
गत्वा रामेश्वरं पुण्यं स्नात्वा चैव महोदधौ । ब्रह्मचर्यादिभिर्युक्तो दृष्ट्वा रुद्रं विमोचयेत् ॥२३॥
कपालमोचनं नाम तीर्थं देवस्य शूलिनः । स्नात्वाभ्यर्च्य पितॄन् देवान् ब्रह्महत्यां व्यपोहति॥२४॥
यत्र देवाधिदेवेन भैरवेणामितौजसा । कपालं स्थापितं पूर्वं ब्रह्मणः परमेष्ठिनः ॥२५॥
समभ्यर्च्य महादेवं तत्र भैरवरूपिणम् । तर्पयित्वा पितॄन् स्नात्वा मुच्यते ब्रह्महत्यया ॥२६॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां
प्रायश्चित्तकथने त्रिंशोऽध्यायः ॥३०॥

# एकत्रिंशोऽध्यायः

## ऋषय ऊचुः

कथं देवेन रुद्रेण शङ्करेणामितौजसा । कपालं ब्रह्मणः पूर्वं स्थापितं देहजं भुवि ॥ १ ॥

## व्यास उवाच

शृणुध्वमृषयः पुण्यां कथां पापप्रणाशिनीम् । माहात्म्यं देवदेवस्य महादेवस्य धीमतः ॥ २ ॥
पुरा पितामहं देवं मेरुशृङ्गे महर्षयः । प्रोचुः प्रणम्य लोकादिं किमेकं तत्त्वमव्ययम्॥ ३ ॥
स मायया महेशस्य मोहितो लोकसम्भवः । अविज्ञाय परं भावं स्वात्मानं प्राह चर्षिणाम् ॥ ४ ॥
अहं धाता जगद्योनिः स्वयम्भूरेक ईश्वरः । अनादि मत्परं ब्रह्म मामभ्यर्च्य विमुच्यते ॥ ५ ॥
अहं हि सर्वदेवानां प्रवर्त्तक - निवर्त्तकः । न विद्यते चाभ्यधिको मत्तो लोकेषु कश्चन ॥ ६ ॥
तस्यैवं मन्यमानस्य यज्ञो नारायणांशजः । प्रोवाच प्रहसन् वाक्यं रोषताम्रविलोचनः ॥ ७ ॥
किं कारणमिदं ब्रह्मन् वर्त्तते तव साम्प्रतम् । अज्ञानयोगयुक्तस्य न त्वेतदुचितं तव ॥ ८ ॥
अहं धाता हि लोकानां यज्ञो नारायणः प्रभुः । न मामृतेऽस्य जगतो जीवनं सर्वदा क्वचित् ॥ ९ ॥
अहमेव परं ज्योतिरहमेव परा गतिः । मत्प्रेरितेन भवता सृष्टं भुवनमण्डलम् ॥१०॥
एवं विवदतोर्मोहात् परस्परजयैषिणोः । आजग्मुर्यत्र तौ देवौ वेदाश्चत्वार एव हि ॥११॥
अन्वीक्ष्य देवं ब्रह्माणं यज्ञात्मानञ्च संस्थितम् । प्रोचुः संविग्नहृदया याथात्म्यं परमेष्ठिनः ॥१२॥

## ऋग्वेद उवाच

यस्यान्तःस्थानि भूतानि यस्मात् सर्वं प्रवर्त्तते । यदाहुस्तत्परं तत्त्वं स देवः स्यान्महेश्वरः ॥१३॥

## यजुर्वेद उवाच

यो यज्ञैरखिलैरीशो योगेन च समर्च्यते । यमाहुरीश्वरं देवं स देवः स्यान्महेश्वरः ॥१४॥

## सामवेद उवाच

येनेदं भ्राम्यते विश्वं यदाकाशान्तरं शिवम् । योगिभिश्चिन्त्यते तत्त्वं महादेवः स शङ्करः ॥१५॥

## अथर्ववेद उवाच

यं प्रपश्यन्ति देवेशं यतन्तो यतयः परम् । महेशं पुरुषं रुद्रं स देवो भगवान् भवः ॥१६॥
एवं स भगवान् ब्रह्मा वेदानामीरितं शुभम् । श्रुत्वा विहस्य विश्वात्मा ततश्चाह विमोहितः ॥१७॥

## ब्रह्मोवाच

कथं तत् परमं ब्रह्म सर्वसङ्गविवर्जितम् । रमते भार्यया सार्द्धं प्रमथैश्चातिवर्द्धितम् ॥१८॥
इतीरितेऽथ भगवान् प्रणवात्मा सनातनः । अमूर्त्तो मूर्तिमान् भूत्वा वचः प्राह पितामहम् ॥१९॥

## प्रणव उवाच

न ह्येष भगवान् पत्न्या स्वात्मनो व्यतिरिक्तया । कयाचिद्रमते रुद्रस्तादृशो हि महेश्वरः ॥२०॥
अयं स भगवानीशः स्वयंज्योतिः सनातनः । स्वानन्दभूता कथिता देवी नागन्तुका शिवा ॥२१॥

इत्येवमुक्तेऽपि तदा यज्ञमूर्त्तेरजस्य च । नाज्ञानमगमन्नाशमीश्वरस्यैव मायया ।।२२।।
तदन्तरे महाज्योतिर्विरिञ्चो विश्वभावनः । प्रादर्शददभुतं दिव्यं पूरयन् गगनान्तरम् ।।२३।।
तन्मध्यसंस्थित ज्योतिर्मण्डलं तेजसोज्ज्वलम् । व्योममध्यगतं दिव्यं प्रादुरासीद् द्विजोत्तमाः ।।२४।।
स दृष्ट्वा वदनं दिव्यमूर्ध्वं लोकपितामहः । तैजसं मण्डलं घोरमलोकयदनिन्दितम् ।।२५।।
प्रजज्वालातिकोपेन ब्रह्मणः पञ्चमं शिरः । क्षणादपश्यत् स महान् पुरुषो नीललोहितः ।।२६।।
त्रिशूली पिङ्गलो देवो नागयज्ञोपवीतवान् । तं प्राह भगवान् ब्रह्मा शङ्करं नीललोहितम् ।।२७।।
जानामि पूर्वं भगवान् ललाटादेव शङ्करम् । प्रादुर्भूतं महेशानं मामतः शरणं व्रज ।।२८।।
श्रुत्वा सगर्ववचनं पद्मयोनेरथेश्वरः । प्राहिणोत पुरुषं कालं भैरवं लोकदाहकम् ।।२९।।
स कृत्वा सुमहद् युद्धं ब्रह्मणा कालभैरव । प्रचकर्त्ताऽस्य वदनं विरिञ्चस्याथ पञ्चमम् ।।३०।।
निकृत्तवदनो देवो ब्रह्म देवेन शम्भुना । ममार चेशो योगेन जीवितं प्राप विश्वकृत् ।।३१।।
अथान्वपश्यदीशानं मण्डलान्तरसंस्थितम् । समासीनं महादेव्या महादेवं त्रिलोचनम् ।।३२।।
भुजङ्गराजवलयं चन्द्रावयवभूषणम् । कोटिसूर्यप्रतीकाशं जटाजूटविराजितम् ।।३३।।
शार्दूलचर्मवसनं दिव्यमालासमन्वितम् । त्रिशूलपाणिं दुष्प्रेक्ष्यं योगिनं भूतिभूषणम् ।।३४।।
यमन्तरा योगनिष्ठाः प्रपश्यन्ति हृदीश्वरम् । तमादिमेकं ब्रह्माणं महादेवं ददर्श ह ।।३५।।
यस्य सा परमा देवी शक्तिराकाशसंज्ञिता । सोऽनन्तैश्वर्ययोगात्मा महेशो दृश्यते किल ।।३६।।
यस्याशेषजगद्बीजं विलयं याति मोहनम् । सकृत् प्रणाममात्रेण स रुद्रः खलु दृश्यते ।।३७।।
येऽथ नाचारनिरतास्तद्भक्ताश्चैव केवलम् । विलोचयति लोकात्मा नायको दृश्यते किल ।।३८।।
यस्य ब्रह्मादयो देवा ऋषयो ब्रह्मवादिनः । अर्चयन्ति सदा लिङ्गं स शिवः खलु दृश्यते ।।३९।।
यस्याशेषजगत्सूतिर्विज्ञानतनुरीश्वरः । न मुञ्चति सदा पार्श्वं शङ्करोऽसौ च दृश्यते ।।४०।।
विद्यासहायो भगवान् यस्यासौ मण्डलान्तरम् । हिरण्यगर्भपुत्रोऽसावीश्वरो दृश्यते परः ।।४१।।
पुष्पं वा यदि वा पत्रं यत्पादयुगले जलम् । दत्त्वा तरति संसारं रुद्रोऽसौ दृश्यते किल ।।४२।।
तत्सन्निधाने सकलं नियच्छति सनातनः । कालं किल नियोगात्मा कालः कालो हि दृश्यते।।४३।।
जीवनं सर्वलोकानां त्रिलोकस्यैव भूषणम् । सोमः स दृश्यते देवः सोमो यस्य विभूषणम् ।।४४।।
देव्या सह सदा साक्षाद्यस्य योगस्वभावतः । गीयते परमा मुक्तिर्महादेवः स दृश्यते ।।४ ।।
योगिनो योगतत्त्वज्ञा वियोगाभिमुखानिशम् । योगं ध्यायन्ति देव्याऽसौ स योगी दृश्यते किल ।।४६।।
सोऽनुवीक्ष्य महादेवं महादेव्या सनातनम् । वरासने समासीनमवाप परमां स्मृतिम् ।।४७।।
लब्ध्वा माहेश्वरीं दिव्यां संस्मृतिं भगवानजः । तोषयामास वरदं सोमं सोमार्द्धभूषणम् ।।४८।।

## ब्रह्मोवाच

नमो देवाय महते महादेव्यै नमो नमः । नमः शिवाय शान्ताय शिवायै सततं नमः ।।४९।।
नमोऽस्तु ब्रह्मणे तुभ्यं विद्यायै ते नमो नमः । महेशाय नमस्तुभ्यं मूलप्रकृतये नमः ।।५०।।
नमो विज्ञानदेहाय चितये ते नमो नमः । नमोऽस्तु कालकालाय ईश्वरायै नमो नमः ।।५१।।
नमो नमोऽस्तु रुद्राय रुद्राण्यै ते नमो नमः । नमो नमस्ते कालाय मायायै ते नमो नमः ।।५२।।
नियन्त्रे सर्वकार्याणां क्षोभिकायै नमो नमः । नमोऽस्तु ते प्रकृतये नमो नारायणाय च ।।५३।।
योगदायै नमस्तुभ्यं योगिनां गुरवे नमः । नमः संसारनाशाय संसारोत्पत्तये नमः ।।५४।।
नित्यानन्दाय विभवे नमोऽस्त्वानन्दमूर्त्तये । नमः कार्यविहीनाय विश्वप्रकृतये नमः ।।५५।।

ओङ्कारमूर्त्तये तुभ्यं तदन्तःसंस्थिताय च । नमस्ते व्योमसंस्थाय व्योमशक्त्यै नमो नमः ॥५६॥
इति सोमाष्टकेनेशं प्रणिपत्य पितामहः । पपात दण्डवद्भूमौ गृणन् वै शतरुद्रियम् ॥५७॥
अथ देवो महादेवः प्रणतार्त्तिहरो हरः । प्रोवाचोत्थाप्य हस्ताभ्यां प्रीतोऽस्मि तव सांप्रतम् ॥५८॥
दत्त्वास्मै परमं योगमैश्वर्यमतुलं महत् । प्रोवाचाग्रस्थितं रुद्रं नीललोहितमीश्वरम् ॥५९॥
एष ब्रह्मास्य जगतः सम्पूज्यः प्रथमः स्थितः । आत्मना रक्षणीयस्ते गुणज्येष्ठः पिता तव ॥६०॥
अयं पुराणः पुरुषो न हन्तव्यस्त्वयानघ । स्व योगैश्वर्यमाहात्म्यान्मामेव परमं गतः ॥६१॥
अयञ्च यज्ञो गर्वोऽसौ सगर्वो भवतानघ । शासितव्यो विरिञ्चस्य धारणीयं शिरस्त्वया ॥६२॥
ब्रह्महत्यापनोदार्थं व्रतं लोके प्रदर्शयन् । चरस्व सततं भिक्षां संस्थापय सुरद्विजान् ॥६३॥
इत्येतदुक्त्वा वचनं भगवान् परमेश्वरः । स्थानं स्वाभाविकं दिव्यं ययौ तत् परमं पदम् ॥६४॥
ततः स भगवानीशः कपर्दी नीललोहितः । ग्राहयामास वदनं ब्रह्मणः कालभैरवम् ॥६५॥
चर त्वं पापनाशार्थं व्रतं लोके हितावहम् । कपालहस्तो भगवान् भिक्षां गृह्णातु सर्वतः ॥६६॥
उक्त्वैवं प्राहिणोत् कन्यां ब्रह्महत्येति विश्रुताम् । दंष्ट्राकरालवदनां ज्वालामालाविभूषणाम् ॥६७॥
यावद्वाराणसीं दिव्यां पुरीमेष गमिष्यति । तावत् त्वं भीषणे कालमनुगच्छ त्रिशूलिनम् ॥६८॥
एवमाभाष्य कालाग्निं प्राह लोकमहेश्वरम् । अटस्व लोकानखिलान् भैक्षार्थी मन्नियोगतः ॥६९॥
यदा द्रक्ष्यसि देवेशं नारायणमनामयम् । तदासौ वक्ष्यति स्पष्टमुपायं पापशोधनम् ॥७०॥
स देवदेवतावाक्यमाकर्ण्य भगवान् हरः । कपालपाणिर्विश्वात्मा चचार भुवनत्रयम् ॥७१॥
आस्थाय विकृतं वेषं दीप्यमानं स्वतेजसा । श्रीमत् पवित्रं रुचिरं लोचनत्रयसंयुतम् ॥७२॥
कोटिसूर्यप्रतीकाशैः प्रमथैश्चातिगर्वितैः । भाति कालाग्निनयनो महादेवः समावृतः ॥७३॥
पीत्वा वदमृतं दिव्यमानन्दं परमेष्ठिनः । लीलाविलासबहुलो लोकानागच्छतीश्वरः ॥७४॥
तं दृष्ट्वा कालवदनं शङ्कर कालभैरवम् । रूपलावण्यसम्पन्नं नारीकुलमगादनु ॥७५॥
गायन्ति विविधं गीतं नृत्यन्ति पुरतः प्रभोः । सस्मितं प्रेक्ष्य वदनं चक्रुर्भ्रूभङ्गमेव च ॥७६॥
स देव-दानवादीनां देशानभ्येत्य शूलधृक् । जगाम विष्णोर्भुवनं यत्रास्ते पुरुषोत्तमः ॥७७॥
सम्प्राप्य दिव्यभवनं शङ्करो लोकशङ्करः । सहैव भूतप्रवरः प्रवेष्टुमुपचक्रमे ॥७८॥
अविज्ञाय परं भावं दिव्यं तत् पारमेश्वरम् । न्यवारयत् त्रिशूलाङ्कं द्वारपालो महाबलः ॥७९॥
शङ्ख - चक्र - गदापाणिः पीतवासा महाभुजः । विष्वक्सेन इति ख्यातो विष्णोरंशसमुद्भवः ॥८०॥
अथैनं शङ्करगणो युयुधे विष्णुसम्भवम् । भीषणो भैरवादेशात् कालवेग इति स्मृतः ॥८१॥
विजित्य तं कालवेगं क्रोधसंरक्तलोचनः । दुद्रावाभिमुखं रुद्रं चिक्षेप च सुदर्शनम् ॥८२॥
अथ देवो महादेवस्त्रिपुरारिस्त्रिशूलभृत् । तमापतन्तं सावज्ञमालोकयदमित्रजित् ॥८३॥
तदन्तरे महद्भूतं युगान्तदहनोपमम् । शूलेनोरसि निर्भिद्य पातयामास तं भुवि ॥८४॥
स शूलाभिहतोऽत्यर्थं त्यक्त्वा स्वं परमं बलम् । तत्याज जीवितं दृष्ट्वा मृत्युं व्याधिहता इव ॥८५॥
निहत्य विष्णुपुरुषं सार्द्धं प्रमथपुङ्गवैः । विवेश चान्तरगृहं समादाय कलेवरम् ॥८६॥
वीक्ष्य तं जगतो हेतुमीश्वरं भगवान् हरिः । शिरो ललाटात् सम्भिद्य रक्तधारामपातयत् ॥८७॥
गृहाण भिक्षां भगवन् मदीयाममितद्युते । न विद्यतेऽन्या ह्युचिता तव त्रिपुरमर्दन ॥८८॥
न सम्पूर्णं कपालं तद् ब्रह्मणः परमेष्ठिनः । दिव्यं वर्षसहस्रन्तु सा च धारा प्रवाहिता ॥८९॥
अथाऽब्रवीत् कालरुद्रं हरिर्नारायणः प्रभुः । संस्तूय विविधैर्भावैर्बहुमानपुरःसरम् ॥९०॥
किमर्थमेतद्वदनं ब्रह्मणो भवता धृतम् । प्रोवाच वृत्तमखिलं देवदेवो महेश्वरः ॥९१॥

समाहूय हृषीकेशो ब्रह्महत्यामथाच्युतः । प्रार्थयामास भगवान् विमुञ्चेति त्रिशूलिनम् ॥९२॥
न तत्याजाथ सा पार्श्वं व्याहृतापि मुरारिणा । चिरं ध्यात्वा जगद्योनिं शङ्करं प्राह सर्ववित् ॥९३॥
व्रजस्व भगवन् दिव्यां पुरीं वाराणसीं शुभाम् । यत्राखिलजगद्दोषान् क्षिप्रं नाशयतीश्वरः ॥९४॥
ततः सर्वाणि गुह्यानि तीर्थान्यायतनानि च । जगाम लीलया देवो लोकानां हितकाम्यया ॥९५॥
संस्तूयमानः प्रमथैर्महायोगैरितस्ततः । नृत्यमानो महायोगी हस्तन्यस्तकलेवरः ॥९६॥
तमभ्यधावद्भगवान् हरिर्नारायणः प्रभुः । समास्थाय परं रूपं नृत्यदर्शनलालसः ॥९७॥
निरीक्षमाणो गोविन्दं वृषेन्द्राङ्कितशासनः । सस्मयोऽनन्तयोगात्मा नृत्यति स्म पुनः पुनः ॥९८॥
अथ सानुचरो रुद्रः सहरिर्धर्मवाहनः । भेजे महादेवपुरीं वाराणसीति विश्रुताम् ॥९९॥
प्रविष्टमात्रे विश्वेशे ब्रह्महत्या कपर्दिनि । हाहेत्युक्त्वा सनादं सा पातालं प्राप दुःखिता॥१००॥
प्रविश्य परमं स्थानं कपालं ब्रह्मणो हरः । गणानामग्रतो देवः स्थापयामास शङ्करः ॥१०१॥
स्थापयित्वा महादेवो ददौ तच्च कलेवरम् । उक्त्वा स जीवमस्त्वीति विष्णवेऽसौ घृणानिधिः॥१०२॥
ये स्मरन्ति ममाजस्रं कापालं वेषमुत्तमम् । तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥१०३॥
आगम्य तीर्थप्रवरे स्नानं कृत्वा विधानतः । तर्पयित्वा पितॄन् देवान् मुच्यते ब्रह्महत्यया॥१०४॥
अशाश्वतं जगज्ज्ञात्वा येऽस्मिन् स्थाने वसन्ति वै । देहान्ते तत् परं ज्ञानं ददामि परमं पदम् ॥१०५॥
इतीदमुक्त्वा भगवान् समालिङ्ग्य जनार्दनम् । सहैव प्रमथेशानैः क्षणादन्तरधीयत ॥१०६॥
स लब्ध्वा भगवान् कृष्णो विष्वक्सेनं त्रिशूलिनः । स्वं देशमगमत् तूर्णं गृहीत्वा परमं वपुः ॥१०७॥
एतद्वः कथितं पुण्यं महापातकनाशनम् । कपालमोचनं तीर्थं स्थाणोः प्रियतरं शुभम्॥१०८॥
य इमं पठतेऽध्यायं ब्राह्मणानां समीपतः । मानसैर्वाचिकैः पापैः कायिकैश्च प्रमुच्यते ॥१०९॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां
कपालमोचनमाहात्म्यं नामैकत्रिंशोऽध्यायः ॥३१॥

---

## द्वात्रिंशोऽध्यायः

### व्यास उवाच

सुरापस्तु सुरां तप्तामग्निवर्णां स्वयं पिबेत् । निर्दग्धकायः स तया मुच्यते च द्विजोत्तमः ॥ १ ॥
गोमूत्रमग्निवर्णं वा गोशकृद्रसमेव वा । पयो घृतं जलं वाथ मुच्यते पातकात् ततः ॥ २ ॥
जलार्द्रवासाः प्रयतो ध्यात्वा नारायणं हरिम् । ब्रह्महत्याव्रतश्चाथ चरेत् कृत्योपशान्तये ॥ ३ ॥
सुवर्णस्तेयकृद् विप्रो राजानमभिगम्य तु । स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥ ४ ॥
गृहीत्वा मुषलं राजा सकृद्धन्यात् तु तं स्वयम् । वधेन शुध्यते स्तेनो ब्राह्मणस्तपसाथवा ॥ ५ ॥
स्कन्धेनादाय मुषलं लकुचं वापि खादिरम् । शक्तिश्चादाय तीक्ष्णाग्रामायसं दण्डमेव वा ॥ ६ ॥
राजा तेन च गन्तव्यो मुक्तकेशेन धावता । आचक्षाणेन तत् पापमेतत्कर्मास्मि शाधि माम्॥ ७ ॥

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते । अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम् ॥८॥
तपसापनोत्तुमिच्छंस्तु सुवर्णस्तेयजं मलम् । चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणो व्रतम् ॥ ९ ॥
स्नात्वाऽश्वमेधावभृथे पूतः स्यादथवा द्विजः । प्रदद्याद्वाथ विप्रेभ्यः स्वात्मतुल्यं हिरण्यकम् ॥१०॥
चरेद्वा वत्सरं कृच्छ्रं ब्रह्मचर्यपरायणः । ब्राह्मणः स्वर्णहारी तु तत्पापस्यापनुत्तये ॥११॥
गुरोर्भार्यां समारुह्य ब्राह्मणः काममोहितः । आलिङ्गयेत् स्त्रियं तप्तां दीप्तां कार्ष्णायसीं कृताम् ॥१२॥
स्वयं वा शिश्न-वृषणावुत्कृत्याधाय चाञ्जलौ । अभिगच्छेद्दक्षिणाशामानिपातादजिह्मगः ॥१३॥
शाखां वा कण्टकोपेतां परिष्वज्याथ वत्सरम् । अधः शयीत नियतो मुच्यते गुरुतल्पगः ॥१४॥
कृच्छ्रं वाब्दं चरेद्विप्रश्चीरवासाः समाहितः । अश्वमेधावभृथके स्नात्वा वा शुध्यते द्विजः ॥१५॥
कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदाव्रती । स्थानाशनाभ्यां विहरंस्त्रिरह्नोऽभ्युपयन्नपः ॥१६॥
अधःशायी त्रिभिर्वर्षैस्तद्व्यपोहति पातकम् । चान्द्रायणानि वा कुर्यात् पञ्च चत्वारि वा पुनः ॥१७॥
पतितैःसम्प्रयुक्तानामथ वक्ष्यामि निष्कृतिम् । पतितेन तु संसर्गं यो येन कुरुते द्विजः ।
स तत्पापापनोदार्थं तस्यैव व्रतमाचरेत् ॥१८॥
तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः । षाण्मासिके तु संसर्गे प्रायश्चित्तार्द्धमर्हति ॥१९॥
एभिर्व्रतैरपोहन्ति महापातकिनो मलम् । पुण्यतीर्थाभिगमनात् पृथिव्यां वाथ निष्कृतिः ॥२०॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमम् । कृत्वा तैश्चापि संसर्गं ब्राह्मणः कामचारतः ॥२१॥
कुर्यादनशनं विप्रः पुण्यतीर्थे समाहितः । ज्वलन्तं वा विशेदग्निं ध्यात्वा देवं कपर्दिनम् ॥२२॥
न ह्यन्या निष्कृतिर्दृष्टा मुनिभिर्धर्मवादिभिः । तस्मात् पुण्येषु तीर्थेषु दहन् वापि स्वदेहकम् ॥२३॥
गत्वा दुहितरं विप्रः स्वसारं वा स्नुषामपि । प्रविशेज् ज्वलनं दीप्तं मतिपूर्वामिति स्थितिः ॥२४॥
मातृष्वसां मातुलानीं तथैव च पितृष्वसाम् । भागिनेयीं समारुह्य कुर्यात् कृच्छ्रातिकृच्छ्रकम् ॥२५॥
चान्द्रायणं वा कुर्वीत तस्य पापस्य शान्तये । ध्यायन् देवं जगद्योनिमनादिनिधनं हरिम् ॥२६॥
भ्रातृभार्यां समारुह्य कुर्यात् तत्पापशान्तये । चान्द्रायणानि चत्वारि पञ्च वा सुसमाहितः ॥२७॥
पितृष्वसेयीं गत्वा तु स्वस्रीयां मातुरेव च । मातुलस्य सुतां वापि गत्वा चान्द्रायणं चरेत् ॥२८॥
सखिभार्यां समारुह्य गत्वा श्यालीं तथैव च । अहोरात्रोषितो भूत्वा तप्तकृच्छ्रं समाचरेत् ॥२९॥
उदक्या गमने विप्रस्त्रिरात्रेण विशुध्यति । चाण्डालीगमने चैव तप्तकृच्छ्रत्रयं विदुः ॥३०॥
शुद्धिःसान्तपनेन स्यान्नान्यथा निष्कृतिः स्मृता । मातृगोत्रां समारुह्य समानप्रवरां तथा ॥३१॥
चान्द्रायणेन शुध्येत प्रयतात्मा समाहितः । ब्राह्मणो ब्राह्मणीं गत्वा कृच्छ्रमेकं समाचरेत् ॥३२॥
कन्यकां दूषयित्वा तु चरेच्चान्द्रायणव्रतम् । अमानुषीषु पुरुष उदक्यायामयोनिषु ॥३३॥
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् । बन्धकीगमने विप्रस्त्रिरात्रेण विशुध्यति ॥३४॥
गवि मैथुनमासेव्य चरेच्चान्द्रायणव्रतम् । अजावीमैथुनं कृत्वा प्राजापत्यं चरेद् द्विजः ॥३५॥
पतिताश्च स्त्रियं गत्वा त्रिभिः कृच्छ्रैर्विशुध्यति । पुल्कसीगमने चैव कृच्छ्रं चान्द्रायणं चरेत् ॥३६॥
नटीं शैलूषकीञ्चैव रजकीं वेणुजीविनीम् । गत्वा चान्द्रायणं कुर्यात् तथा चर्मोपजीविनीम् ॥३७॥
ब्रह्मचारी स्त्रियं गच्छेत् कथञ्चित् काममोहितः । सप्तागारं चरेद् भैक्षं वसित्वा गर्दभाजिनम् ॥३८॥
उपस्पृशेत् त्रिषवणं स्वपापं परिकीर्त्तयन् । संवत्सरेण चैकेन तस्मात् पापात् प्रमुच्यते ॥३९॥
ब्रह्महत्याव्रतञ्चापि षण्मासानाचरेद् यती । मुच्यते ह्यवकीर्णी तु ब्राह्मणानुमते स्थितः ॥४०॥
सप्तरात्रमकृत्वा तु भैक्षचर्याग्निपूजनम् । रेतसश्च समुत्सर्गे प्रायश्चित्तं समाचरेत् ॥४१॥
ओंकारपूर्विकाभिस्तु महाव्याहृतिभिः सदा । संवत्सरन्तु यञ्जानो नक्तं भिक्षाशनः शुचिः ॥४२॥

सावित्रीञ्च जपेच्चैव नित्यं क्रोधविवर्जितः। नदीतीरेषु तीर्थेषु तस्मात् पापाद्विमुच्यते ॥४३॥
हत्वा तु क्षत्रियं विप्रः कुर्याद् ब्रह्महणो व्रतम्। अकामतो वै षण्मासान् दद्यात् पञ्चशतं गवाम्॥४४॥
अब्दं चरेद्यानयुतो वनवासी समाहितः। प्राजापत्यं सान्तपनं तप्तकृच्छ्रन्तु वा स्वयम् ॥४५॥
प्रमार्य कामतो वैश्यं कुर्यात् संवत्सरत्रयम्। गोसहस्रन्तु पादन्तु कुर्याद् ब्रह्महणो व्रतम्।
कृच्छ्रातिकृच्छ्रौ वा कुर्याच्चान्द्रायणमथापि वा ॥४६॥
संवत्सरं व्रतं कुर्याच्छूद्रं हत्वा प्रमादतः। गोसहस्रार्द्धपादञ्च दद्यात् तत्पापशान्तये ॥४७॥
अष्टौ वर्षाणि षट् त्रीणि कुर्याद् ब्रह्महणो व्रतम्। हत्वा तु क्षत्रियं वैश्य शूद्राञ्चैव यथाक्रमम् ॥४८॥
निहत्य ब्राह्मणीं विप्रस्त्वष्टवर्षं व्रतं चरेत्। राजकन्यां वर्षषट्कं वैश्यां संवत्सरत्रयम् ॥४९॥
संवत्सरेण शुध्येत शूद्रां हत्वा द्विजोत्तमः। वैश्यां हत्वा द्विजातिस्तु किञ्चिद् दद्याद् द्विजातये॥५०॥
अन्त्यजानां वधे चैव कुर्याच्चान्द्रायणं व्रतम्। पराकेणाथवा शुद्धिरित्याह भगवान् मनुः ॥५१॥
मण्डूकं नकुलं काकं विड्वराहञ्च मूषकम्। श्वानं हत्वा द्विजः कुर्यात् षोडशांशं महाव्रतम्॥५२॥
पयः पिबेत् त्रिरात्रन्तु श्वानं हत्वा ह्ययान्त्रितः। मार्जारं वाथ नकुलं योजनञ्चाध्वनो व्रजेत् ॥५३॥
कृच्छ्रं द्वादशरात्रन्तु कुर्यादश्ववधे द्विजः। अर्चां कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः॥५४॥
पलालभारकं षण्ढे सीसकञ्चैकमाषकम्। घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरे ॥५५॥
शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम्। हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च ॥५६॥
वानरं श्येन-भासौ च स्पर्शयेद् ब्राह्मणाय गाम्। क्रव्यादास्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम्॥५७॥
अक्रव्यादान् वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम्। किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे ॥५८॥
अनस्थ्नाञ्चैव हिंसायां प्राणायामेन शुध्यति। फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम् ॥५९॥
गुल्म-वल्ली-लतानान्तु पुष्पितानाञ्च वीरुधाम्। अन्येषाञ्चैव वृक्षाणां सरसानाञ्च सर्वशः ॥६०॥
फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम्। हस्तिनाञ्च वधे दृष्टं तप्तकृच्छ्रं विशोधनम् ॥६१॥
चान्द्रायणं पराकं वा गां हत्वा तु प्रमादतः। मतिपूर्ववधे चास्याः प्रायश्चित्तं न विद्यते ॥६२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां
प्रायश्चित्तनियमे द्वात्रिंशोऽध्यायः ॥३२॥

---

# त्रयस्त्रिंशोऽध्यायः

## व्यास उवाच

मनुष्याणान्तु हरणं कृत्वा स्त्रीणां गृहस्य च। वापी-कूपजलानाञ्च शुध्येच्चान्द्रायणेन तु ॥ १ ॥
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः। चरेत् सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥ २ ॥
धान्यान्नधनचौर्यन्तु कृत्वा कामाद् द्विजोत्तमः। सजातीयगृहादेव कृच्छ्रार्द्धेन विशुध्यति ॥ ३ ॥
भक्ष्य - भोज्योपहरणे यानशय्यासनस्य च। पुष्प-मूल-फलानाञ्च पञ्चगव्यं विशोधनम् ॥ ४ ॥
तृण - काष्ठ - द्रुमाणाञ्च शुष्कान्नस्य गुडस्य च। चैल-चर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥ ५ ॥

मणि - मुक्ता - प्रवालानां ताम्रस्य रजतस्य च । अयःकांस्योपलानाञ्च द्वादशाहं कणादनम् ॥ ६ ॥
कार्पासकीटजीर्णानां द्विशफैकशफस्य च । पुष्पगन्धौषधीनाञ्च पिबेच्चैव त्र्यहं पयः ॥ ७ ॥
नरमांसाशनं कृत्वा चान्द्रायणमथाचरेत् । काकञ्चैव तथा श्वानं जग्ध्वा हस्तिनमेव वा ।
वराहं कुक्कुटं वाप्य तप्तकृच्छ्रेण शुध्यति ॥ ८ ॥
क्रव्यादानाञ्च मांसानि पुरीषं मूत्रमेव वा । गो-गोमायु-कपीनाञ्च तदेव व्रतमाचरेत् ।
उपोष्य द्वादशाहञ्च कुष्माण्डैर्जुहुयाद् घृतम् ॥ ९ ॥
नकूलोक-मार्जारान् जग्ध्वा सान्तपनं चरेत् । श्वापदोष्ट्र-खरान् जग्ध्वा तप्तकृच्छ्रेण शुध्यति॥१०॥
प्रकुर्याच्चैव संस्कारं पूर्वेण विधिनैव तु । बकञ्चैवं बलाकाञ्च हंसं कारण्डवं तथा ॥११॥
चक्रवाकपलं जग्ध्वा द्वादशाहमभोजनम् । कपोतं टिट्टिभांश्चैव शुकं सारसमेव च ॥१२॥
उलूकं जालपादञ्च जग्ध्वाप्येतद् व्रतं चरेत् । शिशुमारं तथा चाषं मत्स्यमांसं तथैव च ॥१३॥
जग्ध्वा चैव कटाहारमेतदेव व्रत चरेत् । कोकिलञ्चैव मत्स्यादान् मण्डूकं भुजगं तथा ॥१४॥
गोमूत्रयावकाहारो मासेनैकेन शुध्यति । जलेचरांश्च जलजान् प्रणुदानथ विष्किरान् ॥१५॥
रक्तपादांस्तथा जग्ध्वा सप्ताहञ्चैतदाचरेत् । शुनो मांसं शुष्कमांसमात्मार्थञ्च तथा कृतम् ॥१६॥
भुक्त्वा मासं चरे देतत् तत्पापस्यापनुत्तये । वार्त्ताकं मूलक शिग्रुं कुटकं चटकं तथा ॥१७॥
प्राजापत्यं चरेज् जग्ध्वा शंङखं कुम्भीकमेव वा । पलाण्डुं लशुनञ्चैव भुक्त्वा चान्द्रायण चरेत्॥१८॥
नालिकां तण्डुलीयञ्च प्राजापत्येन शुध्यति । अश्मान्तकं तथा पत्तं तप्तकृच्छ्रेण शुध्यति ॥ ९॥
प्राजापत्येन शुद्धिः स्यात् कुसुम्भस्य च भक्षणे । अलाबुं किंशुकञ्चैव भुक्त्वाप्येतद् व्रतं चरेत् ॥२०॥
उदुम्बरञ्च कालेन तप्तकृच्छ्रेण शुध्यति । वृथाकृसर - संयाव पायसापूपसंकुलम् ॥२१॥
भुक्त्वा चैवंविधन्त्वन्यत् त्रिरात्रेण विशुध्यति । पीत्वा क्षाराण्यपेयानि ब्रह्मचारी समाहितः ॥ २॥
गोमूत्रयावकाहारो मासेनैकेन शुध्यति । अनिर्दशाह गोक्षीर माहिषञ्चाजमेव ॥२३॥
सन्धिन्याश्च विवत्सायाःपिबन् क्षीरमिदं चरेत् । एतेषाञ्च विकाराणि पीत्वा मोहेन मानवः ॥२४॥
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति । भुक्त्वा चैव नवश्राद्धे मृतके सूतके तथा ॥२५॥
चान्द्रायणेन शुध्येत ब्राह्मणः सुसमाहितः । यस्याग्नौ हूयते नित्यमन्नस्याग्रं न दीयते ॥२६॥
चान्द्रायणं चरेत् सम्यक् तस्यान्नप्राशने द्विजः । अभोज्यानान्तु सर्वेषां भुक्त्वा चान्नमुपस्कृतम् ॥२७॥
अन्त्यावसायिनाञ्चैव तप्तकृच्छ्रेण शुध्यति । चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत्॥२८॥
बुद्धिपूर्वन्तु कृच्छ्राब्द पुनः संस्कारमेव च । असुरामद्यपानेन कुर्याच्चान्द्रायणव्रतम् ॥२९॥
अभोज्यान्नन्तु भुक्त्वा तु प्राजापत्येन शुध्यति । विण्मूत्रप्राशनं कृत्वा रेतसश्चैतदाचरेत् ॥३०॥
अनादिष्टे तु चैकाहं सर्वत्र तु यथार्थतः । विड्वराह-खरोष्ट्राणां गोमायोः कपिकाकयोः ॥३१॥
प्राश्य मूत्र-पुरीषाणि द्विजश्चान्द्रायणं चरेत् । अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ॥३२॥
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः । क्रव्यादां पक्षिणाञ्चैव प्राश्य मूत्रपुरीषकम् ॥३३॥
महासान्तपनं मोहात् तथा कुर्याद् द्विजोत्तमः । भास-मण्डूक-कुररे विष्किरे कृच्छ्रमाचरेत् ॥३४॥
प्राजापत्येन शुध्येत ब्राह्मणोच्छिष्टभोजने । क्षत्रिये तप्तकृच्छ्रं स्याद्वैश्ये चैवातिकृच्छ्रकम् ॥३५॥
शूद्रोच्छिष्टं द्विजो भुक्त्वा कुर्याच्चान्द्रायणव्रतम् । सुराया भाण्डके वारि पीत्वा चान्द्रायणं चरेत्॥३६॥
समुच्छिष्टं द्विजो भुक्त्वा त्रिरात्रेण विशुध्यति । गोमूत्रयावकाहारः पीतशेषञ्च वा गवाम् ॥३७॥
अपो मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्यदि । तदा सान्तपनं कृच्छ्रं व्रतं पापविशोधनम् ॥३८॥
चाण्डालकूप-भाण्डेषु यदि ज्ञानात् पिबेज् जलम् । चरेत् सान्तपनं कृच्छ्रं ब्राह्मणः पापशोधनम्॥३९॥

चाण्डालेन तु सस्पृष्टं पीत्वा वारि द्विजोत्तमः । त्रिरात्रव्रतमुख्येन पञ्चगव्येन शुध्यति ॥४०॥
महापातकिसंस्पर्शे भुक्त्वा स्नात्वा द्विजो यदि । बुद्धिपूर्वन्तु मूढात्मा तप्तकृच्छ्रं समाचरेत् ॥४१॥
स्पृष्ट्वा महापातकिनं चण्डालं वा रजस्वलाम् । प्रमादाद्भोजनं कृत्वा त्रिरात्रेण विशुध्यति ॥४२॥
स्नानार्हो यदि भुञ्जीत ह्यहोरात्रेण शुध्यति । बुद्धिपूर्वन्तु कृच्छ्रेण भगवानाह पद्मजः ॥४३॥
भुक्त्वा पर्युषितादीनि गवादिप्रतिदूषिताम् । भुक्त्वोपवासं कुर्वीत कृच्छ्रपादमथापि वा ॥४४॥
संवत्सरान्ते कृच्छ्रन्तु चरेद् द्विप्रः पुनः पुनः । अज्ञानभुक्तशुद्धचर्थं ज्ञातस्य तु विशेषतः ॥४५॥
व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्विशुध्यति ॥४६॥
ब्राह्मणादिहतानान्तु कृत्वा दाहादिकं द्विजः । गोमूत्रयावकाहारः प्राजापत्येन शुध्यति ॥४७॥
तैलाभ्यक्तोऽथ वान्तो वा कुर्यान्मूत्र - पुरीषके । अहोरात्रेण शुध्येत श्मश्रुकर्मणि मैथुने ॥४८॥
एकाहेन विवाहाग्नि परिहार्य द्विजोत्तमः । त्रिरात्रेण विशुध्येत त्रिरात्रात् षडहः परम् ॥४९॥
दशाहं द्वादशाहं वा परिहार्य प्रमादतः । कृच्छ्रं चान्द्रायणं कुर्यात् तत्पापस्योपशान्तये ॥५०॥
पतिताद् द्रव्यमादाय तदुत्सर्गेण शुध्यति । चरेच्च विधिना कृच्छ्रमित्याह भगवान् मनुः ॥५१॥
अनाशकान्निवृत्तास्तु प्रव्रज्यावसितास्तथा । चरेयुस्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ॥५२॥
पुनश्च जातकर्मादिसंस्कारैः संस्कृता द्विजाः । शुध्येयुस्तद्व्रतं सम्यक् चरेयुर्धर्म दर्शिनः ॥५३॥
अनुपासितसन्ध्यस्तु तदहर्जापको वसेत् । अनश्नन् संयतमना रात्रौ चेद्रात्रिमेव हि ॥५४॥
अकृत्वा समिदाधानं शुचिः स्नात्वा समाहितः । गायत्र्यष्टसहस्रस्य जप्यं कुर्याद्विशुद्धये ॥५५॥
उपवासी चरेत् सन्ध्यां गृहस्थो हि प्रमादतः । स्नात्वा विशुध्यते सद्यः परिश्रान्तश्च संयमात् ॥५६॥
वेदोदितानि नित्यानि कर्माणि च विलोप्य तु । स्नातको व्रतलोपन्तु कृत्वा चोपवसेद् दिनम् ॥५७॥
संवत्सरं चरेत् कृच्छ्रमग्न्युत्सादी द्विजोत्तमः । चान्द्रायणं चरेद् व्रात्यो गोप्रदानेन शुध्यति ॥५८॥
नास्तिक्यं यदि कुर्वीत प्राजापत्यं चरेद् द्विजः । देवद्रोहं गुरुद्रोहं तप्तच्छ्रेण शुध्यति ॥५९॥
षष्ठान्नकालता मासं संहिताजप एव च । होमाश्च शाकला नित्यमयाज्यानां विशोधनम् ॥६०॥
नीलं रक्तं वसित्वा च ब्राह्मणो वस्त्रमेव हि । अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति ॥६१॥
उष्ट्रयानं समारुह्य खरयानञ्च कामतः । त्रिरात्रेण विशुध्येच्च नग्नो वा प्रविशेज् जलम् ॥६२॥
वेदधर्मपुराणानां चण्डालस्य तु भाषणे । चान्द्रायणेन शुद्धिः स्यान्न ह्यन्या तस्य निष्कृतिः ॥६३॥
उद्बन्धनादिनिहतं संस्पृश्य ब्राह्मणः क्वचित् । चान्द्रायणेन शुद्धिः स्यात् प्राजापत्येन वा पुनः ॥६४॥
उच्छिष्टो यद्यनाचान्तश्चाण्डालादीन् स्पृशेद् द्विजः । प्रमादाद्वै जपेत् स्नात्वा गायत्र्यष्टसहस्रकम् ॥६५॥
द्रुपदानां शतं वापि ब्रह्मचारी समाहितः । त्रिरात्रोपोषितः सम्यक् पञ्चगव्येन शुध्यति ॥६६॥
चाण्डालपतितादींश्च कामाद्यः संस्पृशेद् द्विजः । उच्छिष्टस्तत्र कुर्वीत प्राजापत्यं विशुद्धये ॥६७॥
चाण्डाल-सूतकि-शवांस्तथा नारीं रजस्वलाम् । स्पृष्ट्वा स्नायाद्विशुद्ध्यर्थं प्राह देवः पितामहः ॥६८॥
चाण्डाल - सूतकि - शवैः संस्पृष्टं संस्पृशेद्यदि । ततः स्नात्वाथ आचम्य जपं कुर्यात् समाहितः ॥६९॥
तत्स्पृष्टस्पर्शिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः । स्नात्वाचामेद्विशुद्ध्यर्थं प्राह देवः पितामहः ॥७०॥
भुञ्जानस्य तु विप्रस्य कदाचित् संस्रवेद् गुदम् । कृत्वा शौचं ततः स्नायादुपोष्य जुहुयाद् घृतम्॥७१॥
चाण्डालन्तु शवं स्पृष्ट्वा कृच्छ्रं कृत्वा विशुध्यति । दृष्ट्वाऽभ्यक्तस्त्वसंस्पृश्य अहोरात्रेण शुध्यति ॥७२॥
सुरां स्पृष्ट्वा द्विजःकुर्यात् प्राणायामत्रयं शुचिः । पलाण्डुं लशुनञ्चैव घृतं प्राश्य ततः शुचिः ॥७३॥
ब्राह्मणस्तु शुना दष्टस्त्र्यहं सायं पयः पिबेत् । नाभेरूर्ध्वन्तु दष्टस्य तदेव द्विगुणं भवेत् ॥७४॥
स्यादेतत् त्रिगुणं बाह्वोर्मूर्ध्नि च स्याच्चतुर्गुणम् । स्नात्वा जपेद्वा सावित्रीं श्वभिर्दष्टो द्विजोत्तमः॥७५॥

अनिर्वर्त्य महायज्ञान् यो भुङ्क्ते तु द्विजोत्तमः । अनातुरः सति धने कृच्छ्रार्द्धेन विशुध्यति ॥७६॥
आहिताग्निरुपस्थानं न कुर्याद् यस्तु पर्वणि । ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत्॥७७॥
विनाद्भिरप्सु नाप्यार्त्तशरीरं सन्निवेश्य च । सचेलो जलमाप्लुत्य गामालभ्य विशुध्यति ॥७८॥
बुद्धिपूर्वन्त्वभ्युदिते जपेदन्तर्जले द्विजः । गायत्र्यष्टसहस्रन्तु त्र्यहञ्चोपवसेद् व्रती ॥७९॥
अनुगम्येच्छया शूद्रं प्रेतीभूतं द्विजोत्तमः । गायत्र्यष्टसहस्रञ्च जपं कुर्यान्नदीषु च ॥८०॥
कृत्वा तु शपथान् विप्रो विप्रस्यावधिसंयुतम् । स चैव यावकान्नेन कुर्याच्चान्द्रायणं व्रतम् ॥८१॥
पङ्क्तौ विषमदानन्तु कृत्वा कृच्छ्रेण शुध्यति । छायां श्वपाकस्यारुह्य स्नात्वा सम्प्राशयेद् घृतम्॥८२॥
ईक्षेदादित्यमशुचिर्दृष्ट्वा म्लेच्छान्नमेव वा । मानुषञ्चास्थि संस्पृश्य स्नानं कृत्वा विशुध्यति॥८३॥
कृत्वा तु मिथ्याध्ययनं चरेद् भैक्षन्तु वत्सरम् । कृतघ्नो ब्राह्मणगृहे पञ्चसंवत्सरव्रती ॥८४॥
हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः । स्नात्वा नाश्नन्नहःशेषं प्रणिपत्य प्रसादयेत् ॥८५॥
ताडयित्वा तृणेनापि कण्ठे बद्ध्वाथ वाससा । विवादे चापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥८६॥
अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम्॥८७॥
गुरोराक्रोशमनृतं कृत्वा कुर्याद्विशोधनम् । एकरात्रं निराहारस्तत्पापस्यापनुत्तये ॥८८॥
देवर्षीणामभिमुखं ष्ठीवनाक्रोशने कृते । उल्कया च दहेज्जिह्वां दातव्यञ्च हिरण्यकम् ॥८९॥
देवोद्यानेषु यः कुर्यान्मूत्रोच्चारं सकृद् द्विजः । छिन्द्याच्छिश्नं विशुद्ध्यर्थं चरेच्चान्द्रायणं व्रतम्॥९०॥
देवतायतने मूत्रं कृत्वा मोहाद् द्विजोत्तमः । शिश्नस्योत्कर्त्तनं कृत्वा चान्द्रायणमथाचरेत् ॥९१॥
देवतानामृषीणाञ्च देवानाञ्चैव कुत्सनम् । कृत्वा सम्यक् प्रकुर्वीत प्राजापत्यं द्विजोत्तमः ॥९२॥
तैस्तु सम्भाषणं कृत्वा स्नात्वा देवं समर्चयेत् । दृष्ट्वा वीक्षेत भास्वन्तं स्मृत्वा विश्वेश्वरं स्मरेत्९३
यः सर्वभूताधिपतिं विश्वेशानं विनिन्दति । न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ॥९४॥
चान्द्रायणं चरेत् पूर्वं कृच्छ्रञ्चैवातिकृच्छ्रकम् । प्रपन्नः शरणं देवं तस्मात् पापाद्विमुच्यते ॥९५॥
सर्वस्वदानं विधिवत् पातकानां विशोधनम् । चान्द्रायणञ्च विधिना कृच्छ्रञ्चैवाति कृच्छ्रकम् ॥९६॥
पुण्यक्षेत्राभिगमनं सर्वपापविनाशनम् । देवताभ्यर्चनं नृणामशेषाघविनाशनम् ॥९७॥
अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम् । ब्राह्मणान् पूजयित्वा तु सर्वपापैः प्रमुच्यते ॥९८॥
कृष्णाष्टम्यां महादेवी तथा कृष्णाचतुर्द्दशीम् । सम्पूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥९९॥
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् । इष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ॥१००॥
उपोषितश्चतुर्द्दश्यां कृष्णपक्षे समाहितः । यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वपापक्षयाय च ॥१०१॥
प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन् । स्नात्वा दद्याच्च पूर्वाह्णे मुच्यते सर्वपातकैः ॥१०२
ब्रह्मचर्यमधःशय्या उपवासो द्विजार्चनम् । व्रतेष्वेतेतु कुर्वीत शान्तः संयतमानसः ॥१०३॥
अमावास्यायां ब्रह्माणं समुद्दिश्य पितामहम् । ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्वपातकैः॥१०४॥
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः । सप्तम्यामर्चयेद्भानुं मुच्यते सर्वपातकैः ॥१०५॥
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम् । पूजयेत् सप्तजन्मोत्थैर्मुच्यते सर्वपातकैः ॥१०६॥
एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् । द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥१०७॥
तपो जपस्तीर्थसेवा देव - ब्राह्मणपूजनम् । ग्रहणादिषु कालेषु महापातकशोधनम् ॥१०८॥
यः सर्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः । नियमेन त्यजेत् प्राणान् मुच्यते सर्वपातकैः ॥१०९॥
ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम् । भर्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ॥११०॥

एतदेव परं स्त्रीणां प्रायश्चित्तं विदुर्बुधाः । सर्वपापसमुद्भूतौ नात्र कार्या विचारणा ॥१११॥
पतिव्रता तु या नारी भर्तृशुश्रूषणे रता । न तस्या विद्यते पापमिह लोके परत्र च ॥११२॥
पतिव्रता धर्मरता भद्राण्येव न संशयः । नास्याःपराभवं कर्तुं शक्नोतीह जनःक्वचित् ॥११३॥
यथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ॥११४॥
रामस्य भार्यां सुभगां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालनोदितः ॥११५॥
गृहीत्वा मायया वेषं चरन्तीं विजने वने । समाहर्तुं मतिं चक्रे तापसः किल भाविनीम् ॥११६॥
विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निमावसथ्यं शुचिस्मिता ॥११७॥
उपतस्थे महायोगं सर्वलोकविदाहकम् । कृत्वाञ्जलिं रामपत्नी साक्षात् पतिमिवाच्युतम्॥११८॥
नमस्यामि महायोगं कृशानुं गह्वरं परम् । दाहकं सर्वभूतानामीशानं कालरूपिणम् ॥११९।
नमस्ये पावकं देवं साक्षिणं विश्वतोमुखम् । आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम् ॥१२०॥
प्रपद्ये शरणं वह्निं ब्रह्मण्यं ब्रह्मरूपिणम् । योगिनं कृत्तिवसनं भूतेशं परमं पदम् ॥१२१॥
तं प्रपद्ये जगन्मूर्तिं प्रभवं सर्वतेजसाम । महायोगेश्वरं वह्निमादित्यं परमेष्ठिनम् ॥१२२॥
प्रपद्ये शरणं रुद्रं महाग्रासं त्रिशूलिनम् । कालाग्निं योगिनामीशं भोग-मोक्षफलप्रदम्॥१२३॥
प्रपद्ये त्वां विरूपाक्षं भूर्भुवः स्वः स्वरूपिणम् । हिरण्मये गृहं गुप्तं महान्तममितौजसम् ॥१२४॥
वैश्वानरं प्रपद्येऽहं सर्वभूतेष्ववस्थितम् । हव्य-काव्यवहं देवं प्रपद्ये वह्निमीश्वरम् ॥१२५॥
प्रपद्ये तत् परं तत्त्वं वरेण्यं सवितुः शिवम् । स्वर्गमग्निं परं ज्योती रक्ष मां हव्यवाहनम्॥१२६॥
इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी । ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा ॥१२७॥
अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः । आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव ॥१२८॥
सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया । सीतामादाय रामेष्टां पावकोऽन्तरधीयत ॥१२९॥
तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लङ्कां सागरान्तरसंस्थिताम् ॥१३०॥
कृत्वाथ रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत् सीतां शङ्काकुलितमानसः ॥१३१॥
सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ॥१३२॥
दग्ध्वा मायामयीं सीतां भगवानुष्णदीधितिः । रामायादर्शयत् सीतां पावकोऽभूत् सुरप्रियः ॥१३३॥
प्रगृह्य भर्तुश्चरणौ कराभ्यां सा सुमध्यमा । चकार प्रणतिं भूमौ रामाय जनकात्मजा ॥१३४॥
दृष्ट्वा हृष्टमना रामो विस्मयाकुललोचनः । ननाम वह्निं शिरसा तोषयामास राघवः ॥१३५॥
उवाच वह्निं भगवन् किमेषा वीरवर्णिनि । दग्धा भगवता पूर्वं दृष्ट्वा मत्पार्श्वमागता ॥१३६॥
तमाह देवो लोकानां दाहको हव्यवाहनः । यथावृत्तं दाशरथिं भूतानामेव सन्निधौ ॥१३७॥
इयं सा मिथिलेशेन पार्वतीं रुद्रवल्लभाम् । आराध्य लब्धा तपसा देव्याश्चात्यन्तवल्लभा॥१३८॥
भर्तुः शुश्रूषणोपेता सुशीलेयं पतिव्रता । भवानीपार्श्वमानीता मया रावणकामिता ॥१३९॥
या नीता राक्षसेशेन सीता सा भस्मतां गता । मया मायामयी सृष्टा रावणस्य वधाय सा ॥१४०॥
यदर्थं भवता दृष्टो रावणो राक्षसेश्वरः । मायोपसंहृता चैव हतो लोकविनाशनः ॥१४१॥
गृहाण विमलामेनां जानकीं वचनान्मम । पश्य नारायणं देवं स्वात्मानं प्रभवाव्ययम् ॥१४२॥
इत्युक्त्वा भगवांश्चण्डो विश्वार्चिर्विश्वतोमुखः । मानितो राघवेणाग्निर्भूतैश्चान्तरधीयत ॥१४३॥
एतत् पतिव्रतानां वै माहात्म्यं कथितं मया । स्त्रीणां सर्वाघशमनं प्रायश्चित्तमिदं स्मृतम् ॥१४४॥
अशेषपापसंयुक्तः पुरुषोऽपि सुसंयतः । स्वदेहं पुण्यतीर्थेषु त्यक्त्वा मुच्येत किल्बिषात्॥१४५॥
पृथिव्यां सर्वतीर्थेषु स्नात्वा पुण्येषु वा द्विजः । मुच्यते पातकैः सर्वैः सञ्चितैरपि पूरुषः ॥१४६॥

इत्येष मानवो धर्मो युष्माकं कथितो मया । महेशाराधनार्थाय ज्ञानयोगश्च शाश्वतः ॥१४७॥
योऽनेन विधिना युक्तं ज्ञानयोगं समाचरेत् । स पश्यति महादेवं नान्यः कल्पशतैरपि ॥१४८॥
स्थापयेद्यः परं धर्मं ज्ञानं तत् पारमेश्वरम् । न तस्मादधिको लोके स योगी परमो मतः ॥१४९॥
यः संस्थापयितुं शक्तो न कुर्यान्मोहितो जनः । स योगयुक्तोऽपि मुनिर्नात्यर्थं भगवत्प्रियः ॥१५०॥
तस्मात् सदैव दातव्यं ब्राह्मणेषु विशेषतः । धर्मयुक्तेषु शान्तेषु श्रद्धया चान्वितेषु वै ॥१५१॥
यः पठेद्भवतां नित्यं संवादं मम चैव हि । सर्वपापविनिर्मुक्तो गच्छेत परमां गतिम् ॥१५२॥
श्राद्धे वा दैविके कार्ये ब्राह्मणानाञ्च सन्निधौ । पठेत नित्यं सुमनाः श्रोतव्यश्च द्विजातिभिः॥१५३॥
योऽर्थं विचार्य युक्तात्मा श्रावयेद्वा द्विजान् शुचीन् । स दोषकञ्चुकं त्यक्त्वा याति देवं महेश्वरम् ॥१५४॥
एतावदुक्त्वा भगवान् व्यासः सत्यवतीसुतः । समाश्वास्य मुनीन् सूतं जगाम च यथागतम्॥१५५॥

इति श्रीकौर्मे महापुराणे उत्तरभागे व्यासगीतायां प्रायश्चित्तविवेको नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥

[ समाप्ता व्यासगीता ]

---

# चतुस्त्रिंशोऽध्यायः

## ऋषय ऊचुः

तीर्थानि यानि लोकेऽस्मिन् विश्रुतानि महान्त्यपि । तानि त्वं कथयास्माकं रोमहर्षण साम्प्रतम् ॥ १ ॥

## रोमहर्षण उवाच

शृणुध्वं कथयिष्येऽहं तीर्थानि विविधानि च । कथितानि पुराणेषु मुनिभिर्ब्रह्मवादिभिः ॥ २ ॥
यत्र स्नानं जपो होमः श्राद्ध - दानादिकं कृतम् । एकैकशो मुनिश्रेष्ठाः पुनात्यासप्तमं कुलम् ॥ ३ ॥
पञ्चयोजनविस्तीर्णं ब्रह्मणः परमेष्ठिनः । प्रयागं प्रथितं तीर्थं यस्य माहात्म्यमीरितम् ॥ ४ ॥
अन्यच्च तीर्थप्रवरं कुरूणां देववन्दितम् । ऋषीणामाश्रमैर्जुष्टं सर्वपापविशोधनम् ॥ ५ ॥
तत्र स्नात्वा विशुद्धात्मा दम्भ-मात्सर्यवर्जितः । ददाति यत् किञ्चिदपि पुनात्युभयतः कुलम् ॥ ६ ॥
परं गुह्यं गयातीर्थं पितॄणाञ्चातिदुर्लभम् । कृत्वा पिण्डप्रदानन्तु न भूयो जायते नरः ॥ ७ ॥
सकृद् गयाभिगमनं कृत्वा पिण्डं ददाति यः । तारिताः पितरस्तेन यास्यन्ति परमां गतिम्॥ ८ ॥
तत्र लोकहितार्थाय रुद्रेण परमात्मना । शिलातले पदं न्यस्तं तत्र पितॄन् प्रसादयेत् ॥ ९ ॥
गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति । शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥१०॥
गायन्ति पितरो गाथाः कीर्तयन्ति महर्षयः । गयां यास्यति यःकश्चित्सोऽस्मान् संतारयिष्यति॥११॥
यदि स्यात् पातकोपेतः स्वधर्मपरिवर्जितः । गयां यास्यति वंशोत्थःसोऽस्मान् संतारयिष्यति॥१२॥
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः । तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥१३॥
तस्मात् सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः । प्रदद्याद्विधिवत् पिण्डान् गयां गत्वा समाहितः॥१४॥
धन्यास्तु खलु ते मर्त्या गयायां पिण्डदायिनः । कुलान्युभयतः सप्त समुद्धृत्याप्नुयुः परम् ॥१५॥
अन्यच्च तीर्थप्रवरं सिद्धावासमुदाहृतम् । प्रभासमिति विख्यातं यत्रास्ते भगवान् भवः॥१६॥

तत्र स्नानं ततः श्राद्धं ब्राह्मणानाञ्च पूजनम् । कृत्वा लोकमवाप्नोति ब्रह्मणोऽक्षयमुत्तमम् ॥१७॥
तीर्थं यत् त्र्यंबकं नाम सर्वदेवनमस्कृतम् । पूजयित्वा तत्र रुद्रं ज्योतिष्टोमफलं लभेत् ॥१८॥
सुवर्णाक्षं महादेवं समभ्यर्च्य कपर्दिनम् । ब्राह्मणान् पूजयित्वा च गाणपत्यं लभेद् ध्रुवम् ॥१९॥
सोमेश्वरं तीर्थवरं रुद्रस्य परमेष्ठिनः । सर्वव्याधिहरं पुण्यं रुद्रसालोक्यकारणम् ॥२०॥
तीर्थानां परमं तीर्थं विजयं नाम शोभनम् । तत्र लिङ्गं महेशस्य विजयं नाम विश्रुतम् ॥२१॥
षण्मासनियताहारो ब्रह्मचारी समाहितः । उषित्वा तत्र विप्रेन्द्रा प्रयान्ति परमं पदम् ॥२२॥
अन्यच्च तीर्थप्रवरं पूर्वदेशेषु शोभनम् । एकाम्रं देवदेवस्य गाणपत्यफलप्रदम् ॥२३॥
दत्त्वात्र शिवभक्तानां किञ्चिच्छश्वन्महीं शुभाम् । सार्वभौमो भवेद्राजा मुमुक्षुर्मोक्षमाप्नुयात् ॥२४॥
महानदीजलं पुण्यं सर्वपापविनाशनम् । ग्रहणे तदुपस्पृश्य मुच्यते सर्वपातकैः ॥२५॥
अन्या च विरजा नाम नदी त्रैलोक्यविश्रुता । तस्यां स्नात्वा नरो विप्रा ब्रह्मलोके महीयते ॥२६॥
तीर्थं नारायणस्यान्यन्नाम्ना तु पुरुषोत्तमम् । तत्र नारायणः श्रीमानास्ते परमपूरुषः ॥२७॥
पूजयित्वा परं विष्णुं स्नात्वा तत्र द्विजोत्तमः । ब्राह्मणान् पूजयित्वा तु विष्णुलोकमवाप्नुयात् ॥२८॥
तीर्थानां परमं तीर्थं गोकर्णं नाम विश्रुतम् । सर्वपापहरं शम्भोर्निवासः परमेष्ठिनः ॥२९॥
दृष्ट्वा लिङ्गन्तु देवस्य गोकर्णेश्वरमुत्तमम् । ईप्सिताल्ँलभते कामान् रुद्रस्य दयितो भवेत् ॥३०॥
उत्तरञ्चापि गोकर्णं लिङ्गं देवस्य शूलिनः । महादेवञ्चार्चयित्वा शिवसायुज्यमाप्नुयात् ॥३१॥
तत्र देवो महादेवः स्थाणुरित्यभिविश्रुतः । तं दृष्ट्वा सर्वपापेभ्यस्तत्क्षणान्मुच्यते नरः ॥३२॥
अन्यत् कुब्जाश्रमं पुण्यं स्थानं विष्णोर्महात्मनः । सम्पूज्य पुरुषं विष्णुं श्वेतद्वीपे महीयते ॥३३॥
यत्र नारायणो देवो रुद्रेण त्रिपुरारिणा । कृत्वा यज्ञस्य मथनं दक्षस्य तु विसर्जितः ॥३ ॥
समन्ताद्योजनं क्षेत्रं सिद्धर्षिगणसेवितम् । पुण्यमायतनं विष्णोस्तत्रास्ते पुरुषोत्तमः ॥३५॥
अन्यत् कोकामुखं विष्णोतीर्थमद्भुतकर्मणः । मुक्तोऽत्र पातकैर्मर्त्यो विष्णुसारूप्यमाप्नुयात् ॥३६॥
शालग्रामं महातीर्थं विष्णोः प्रीतिविवर्द्धनम् । प्राणांस्तत्र नरस्त्यक्त्वा हृषीकेशं प्रपश्यति ॥३७॥
अश्वतीर्थमिति ख्यातं सिद्धावासं सुपावनम् । आस्ते हयशिरा नित्यं तत्र नारायणः स्वयम् ॥३८॥
तीर्थं त्रैलोक्यविख्यातं ब्रह्मणः परमेष्ठिनः । पुष्करं सर्वपापघ्नं मृतानां ब्रह्मलोकदम् ॥३९॥
मनसा संस्मरेद्यस्तु पुष्करं वै द्विजोत्तमः । पूयते पातकैः सर्वैः शक्रेण सह मोदते ॥४०॥
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः । उपासते सिद्धसङ्घा ब्रह्माणं पद्मसम्भवम् ॥४१॥
तत्र स्नात्वा लभेच्छुद्धो ब्रह्माणं परमेष्ठिनम् । पूजयित्वा द्विजवरं ब्रह्माणं सम्प्रपश्यति ॥४२॥
तत्राभिगम्य देवेशं पुरुहूतमनिन्दितम् । तद्रूपो जायते मर्त्यः सर्वान् कामानवाप्नुयात् ॥४३॥
सप्तगोदावरं तीर्थं ब्रह्माद्यैः परिषेवितम् । पूजयित्वा तत्र रुद्रमश्वमेधफलं लभेत् ॥४४॥
यत्र मङ्कणको रुद्र - प्रपन्नः परमेश्वरम् । आराधयामास हरं पञ्चाक्षरपरायणः ॥४५॥
नमः शिवायेति मुनिजपन् पञ्चाक्षरन्त्विदम् । आराधयामास शिवं तपसा गोवृषध्वजम् ॥४६॥
प्रजज्वालाथ तपसा मुनिर्मङ्कणकस्तदा । ननर्त्त हर्षवेगेण ज्ञात्वा रुद्रं समागतम् ॥४७॥
त प्राह भगवान् रुद्रः किमर्थं नर्तितं त्वया । दृष्ट्वापि देवमीशानं नृत्यति स्म पुनःपुनः ॥४८॥
सोऽन्वीक्ष्य भगवानीशः सगर्वं गर्वशान्तये । स्वकं देहं विदार्यासौ भस्मराशिमदर्शयत् ॥४९॥
पश्यैनं मच्छरीरोत्थं भस्मापि त्वं द्विजोत्तम । माहात्म्यमेतत् तपसस्त्वादृशोऽन्योपि विद्यते ॥५०॥
यः सगर्वं हि भवता नर्त्तितं मुनिपुङ्गव । न युक्तं तापसस्यैतत् त्वत्तोऽप्यभ्यधिको ह्यहम् ॥५१॥
इत्याभाष्य मुनिश्रेष्ठं स रुद्रः किल विश्वदृक् । आस्थाय परमं भावं ननर्त्त जगतो हरः ॥५२॥

सहस्रशीर्षा भूत्वा स सहस्राक्षः सहस्रपात् । दंष्ट्राकरालवदनो ज्वालामाली भयङ्करः ॥५३॥
सोऽन्वपश्यदथेशस्य पार्श्वे तस्य त्रिशूलिनः । विशाललोचनामेकां देवीं चारुविलासिनीम् ॥५४॥
सूर्यायुतसमाकारां प्रसन्नवदनां शिवाम् । सस्मितं प्रेक्ष्य विश्वेशं तिष्ठन्तीममितद्युतिम् ॥५५॥
दृष्ट्वा सन्त्रस्तहृदयो वेपमानो मुनीश्वरः । ननाम शिरसा रुद्रं रुद्राध्यायं जपन् वशी ॥५६॥
प्रसन्नो भगवानीशस्त्र्यम्बको भक्तवत्सलः । पूर्ववेषं स जगृहे देवी चान्तर्हिताऽभवत् ॥५७॥
आलिङ्ग्य भक्तं प्रणतं देवदेवः स्वयं शिवः । न भेतव्यं त्वया वत्स प्राह किं ते ददाम्यहम् ॥५८॥
प्रणम्य मूर्ध्ना गिरिशं हरं त्रिपुरसूदनम् । विज्ञापयामास तदा हृष्टः प्रष्टुमना मुनिः ॥५९॥
नमोऽस्तु ते महादेव महेश्वर नमोऽस्तु ते । किमेतद्भगवद्रूपं सुघोरं विश्वतोमुखम् ॥६०॥
का च सा भगवत्पार्श्वे राजमाना व्यवस्थिता । अन्तर्हितेव सहसा सर्वमिच्छामि वेदितुम् ॥६१॥
इत्युक्तो व्याजहारेशस्तदा मङ्कणकं हरः । महेशः स्वात्मनो योगं देवीञ्च त्रिपुरानलः ॥६२॥
अहं सहस्रनयनः सर्वात्मा सर्वतोमुखः । दाहकः सर्वपाशानां कालः कालहरो हरः ॥६३॥
मयैव प्रेर्यते विश्वं चेतनाचेतनात्मकम् । सोऽन्तर्यामी स पुरुषो ह्यहं वै पुरुषोत्तमः ॥६४॥
तस्य सा परमा माया प्रकृतिस्त्रिगुणात्मिका । प्रोच्यते मुनिभिः शक्तिर्जगद्योनिः सनातनी ॥६५॥
स एष मायया विश्वं व्यामोहयति विश्ववित् । नारायणः परोऽव्यक्तो मायारूप इति श्रुतिः ॥६६॥
एवमेतज्जगत् सर्वं सर्वदा स्थापयाम्यहम् । योजयामि प्रकृत्याहं पुरुषं पञ्चविंशकम् ॥६७॥
तया स सङ्गतो देवः कूटस्थः सर्वगोऽमलः । सृजत्यशेषमेवेदं स्वमूर्तेः प्रकृतेरजः ॥६८॥
स देवो भगवान् ब्रह्मा विश्वरूपः पितामहः । तवैतत् कथितं सम्यक् स्रष्टृत्वं परमेष्ठिनः ॥६९॥
एकोऽहं भगवान् कालो ह्यनादिश्चान्तकृद्विभुः । समास्थाय परं भावं प्रोक्तो रुद्रो मनीषिभिः ॥७०॥
ममैव सा परा शक्तिर्देवी विद्येति विश्रुता । दृष्टो हि भवता नूनं विद्यादेहः स्वयं ततः ॥७१॥
एवमेतानि तत्त्वानि प्रधानपुरुषेश्वरः । विष्णुर्ब्रह्मा च भगवान् रुद्रः काल इति श्रुतिः ॥७२॥
त्रयमेतदनाद्यन्तं ब्रह्मण्येव व्यवस्थितम् । तदात्मकं यदव्यक्तं तदक्षरमिति श्रुतिः ॥७३॥
आत्मानन्दपरं तत्त्वं चिन्मात्रं परमं पदम् । आकाशं निष्कलं ब्रह्म तस्मादन्यन्न विद्यते ॥७४॥
एवं विज्ञाय भवता भक्तियोगाश्रयेण तु । सम्पूज्यो वन्दनीयोऽहं ततस्तं पश्यसीश्वरम् ॥७५॥
एतावदुक्त्वा भगवान् जगामादर्शनं हरः । तत्रैव भक्तियोगेन रुद्रमाराधयन्मुनिः ॥७६॥
एतत् पवित्रमतुलं तीर्थं ब्रह्मर्षिसेवितम् । संसेव्य ब्राह्मणो विद्वान् मुच्यते सर्वपातकैः ॥७७॥

इति श्रीकौर्मे महापुराणे उत्तरभागे तीर्थोपाख्याने चतुस्त्रिंशोऽध्यायः ॥३४॥

---

## पञ्चत्रिंशोऽध्यायः

### सूत उवाच

अन्यत् पवित्रं विपुलं तीर्थं त्रैलोक्यविश्रुतम् । रुद्रकोटिरिति ख्यातं रुद्रस्य परमेष्ठिनः ॥ १ ॥
पुरा पुण्यतमे काले देवदर्शनतत्पराः । कोटिब्रह्मर्षयो दान्तास्तं देशमगमन् परम् ॥ २ ॥
अहं द्रक्ष्यामि गिरिशं पूर्वमेव पिनाकिनम् । अन्योन्यं भक्तियुक्तानां विवादोऽभून्महान् किल ॥ ३ ॥
तेषां भक्तिं तदा दृष्ट्वा गिरिशो योगिनां गुरुः । कोटिरूपोऽभवद्रुद्रो रुद्रकोटिस्ततः स्मृतः ॥ ४ ॥
ते स्म सर्वे महादेवं हरं गिरिगुहाशयम् । पश्यन्तः पार्वतीनाथं हृष्टपुष्टधियोऽभवन् ॥ ५ ॥
अनाद्यन्तं महादेवं पूर्वमेवाहमीश्वरम् । दृष्टवानिति भक्त्या ते रुद्रन्यस्तधियोऽभवन् ॥६॥
अथान्तरीक्षे विमलं पश्यन्ति स्म महत्तरम् । ज्योतिस्तत्रैव ते सर्वे न्यलीयन्त परं पदम् ॥ ७ ॥
यतः स देवोऽध्युषितस्तीर्थं पुण्यतमं शुभम् । दृष्ट्वा रुद्रं समभ्यर्च्य रुद्रसामीप्यमाप्नुयात् ॥ ८ ॥
अन्यच्च तीर्थप्रवरं नाम्ना मधुवनं शुभम् । तत्र गत्वा नियमवानिन्द्रस्यार्द्धासनं लभेत् ॥ ९ ॥
अथान्या पद्मनगरी देशः पुण्यतमः शुभः । तत्र गत्वा पितॄन् पूज्य कुलानां तारयेच्छतम् ॥१०॥
कालञ्जरं महातीर्थं लोके रुद्रो महेश्वरः । कालं जरितवान् देवो यत्र भक्तप्रियो हरः ॥११॥
श्वेतो नाम शिवे भक्तो राजर्षिप्रवरः पुरा । तदाशीस्तन्नमस्कारः पूजयामास शूलिनम् ॥१२॥
संस्थाप्य विधिना लिङ्गं भक्तियोगपुरःसरः । जजाप रुद्रमनिशं तत्र सन्यस्तमानसः ॥१३॥
सितं कालोऽथ दीप्तात्मा शूलमादाय भीषणम् । नेतुमभ्यागतो देशं स राजा यत्र तिष्ठति ॥१४॥
वीक्ष्य राजा भयाविष्टः शूलहस्तं समागतम् । कालं कालकरं घोरं भीषणं चण्डदीधितिम् ॥१५॥
उभाभ्यामथ हस्ताभ्यां स्पष्ट्वासौ लिङ्गमुत्तमम् । ननाम शिरसा रुद्रं जजाप शतरुद्रियम् ॥१६॥
जपन्तमाह राजानं नमन्तमसकृद्भवम् । एह्येहीति पुरः स्थित्वा कृतान्तः प्रहसन्निव ॥१७॥
तमुवाच भयाविष्टो राजा रुद्रपरायणः । एकमीशार्चनरतं विहायान्यान् निसूदय ॥१८॥
इत्युक्तवन्तं भगवानब्रवीद्भीतमानसम् । रुद्रार्चनरतो वान्यो मद्वशे को न तिष्ठति ॥१९॥
एवमुक्त्वा स राजानं कालो लोकप्रकालनः । बबन्ध पाशं राजापि जजाप शतरुद्रियम् ॥२०॥

अथान्तरीक्षे विपुलं दीप्यमानं तेजोराशिं भूतभर्त्तुः पुराणम् ।
ज्वालामालासंवृतं व्याप्य विश्वं प्रादुर्भूतं संस्थितं सन्ददर्श ॥२१॥
तन्मध्येऽसौ पुरुषं रुक्मवर्णं देव्या देवं चन्द्रलेखोज्ज्वलाङ्गम् ।
तेजोरूपं पश्यति स्मातिहृष्टो मेने चास्मन्नाथ आगच्छतीति ॥२२॥
आगच्छन्तं नातिदूरेऽथ दृष्ट्वा कालो रुद्रं देवदेव्या महेशम् ।
व्यपेतभीरखिलेशैकनाथं राजर्षिस्तं नेतुमभ्याजगाम ॥२३॥
आलोक्यासौ भगवानुग्रकर्मा देवो रुद्रो भूतभर्ता पुराणः ।
एवं भक्तं सत्वरं मां स्मरन्तं देहीतीमं कालरूपं ममेति ॥२४॥
श्रुत्वा वाक्यं गोपतेरुग्रभावः कालात्मासौ मन्यमानः स्वभावम् ।
बद्ध्वा भक्तं पुनरेवाथ पाशैः क्रुद्धो रुद्रश्चाभिदुद्राव वेगात् ॥२५॥
प्रेक्ष्यायान्तं शैलपुत्रीमथेशः सोऽन्वीक्ष्यान्ते विश्वमायाविधिज्ञः ।
सावज्ञं वै वामपादेन कालं राज्ञश्चैनं पश्यतो ह्याजघान ॥२६॥

ममार सोऽतिभीषणो महेशपादघातितः । रराज देवतापतिः सहोमया पिनाकधृक् ॥२७॥
निरीक्ष्य देवमीश्वरं प्रहृष्टमानसो हरम् । ननाम सात्त्वमव्ययं स राजपुङ्गवस्तदा ॥२८॥
नमो भवाय हेतवे हराय विश्वशम्भवे । नमः शिवाय धीमते नमोऽपवर्गदायिने ॥२९॥
नमो नमो नमोऽस्तु ते महाविभूतये नमः । विभागहीनरूपिणे नमो नराधिपाय ते ॥३०॥
नमोऽस्तु ते गणेश्वर प्रपन्नदुःखनाशन । अनादिनित्यभूतये वराहशृङ्गधारिणे ॥३१॥
नमो वृषध्वजाय ते कपालमालिने नमः । नमो महानटाय ते विनाहवे हराय ते ॥३२॥
अथानुगृह्य शङ्करः प्रणामतत्परं नृपम् । स्वगाणपत्यमव्ययं स्वरूपतामथो ददौ ॥३३॥
सहोमया सपार्षदः सराजपुङ्गवो हरः । मुनीशसिद्धवन्दितः क्षणाददृश्यतामगात् ॥३४॥
काले महेशनिहते लोकनाथः पितामहः । अयाचत वरं रुद्रं सजीवोऽयं भवत्विति ॥३५॥
नास्ति कश्चिदपीशान दोषलेशो वृषध्वज । कृतान्तस्यैव भवता तत्कार्ये विनियोजितः ॥३६॥
स देवदेववचनाद्देवदेवेश्वरो हरः । तथास्त्वित्याह विश्वात्मा सोऽपि ताहृग्विधोऽभवत् ॥३७॥
इत्येतत् परमं तीर्थं कालञ्जरमिति श्रुतिः । गत्वाभ्यर्च्य महादेवं गाणपत्यञ्च विन्दति ॥३८॥

इति श्रीकौर्मे महापुराणे उत्तरभागे तीर्थोपाख्याने
कालवधे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

# षट्त्रिंशोऽध्यायः

## सूत उवाच

इदमन्यत् परं स्थानं गुह्याद् गुह्यतरं महत् । महादेवस्य देवस्य महालय इति श्रुतिः ॥ १ ॥
तत्र देवाधिदेवेन रुद्रेण त्रिपुरारिणा । शिलातले पदं न्यस्तं नास्तिकानां निदर्शनम् ॥ २ ॥
तत्र पाशुपताः शांता भस्मोद्धूलितविग्रहाः । उपासते महादेवं वेदाध्ययनतत्पराः ॥ ३ ॥
स्नात्वा तत्र पदं शार्वं दृष्ट्वा भक्तिपुरःसरम् । नमस्कृत्याथ शिरसा रुद्रसामीप्यमाप्नुयात् ॥ ४ ॥
अन्यच्च देवदेवस्य स्थानं शम्भोर्महात्मनः । केदारमिति विख्यातं सिद्धानामालयं शुभम् ॥ ५ ॥
तत्र स्नात्वा महादेवमभ्यर्च्य वृषकेतनम् । पीत्वा चैवोदकं शुद्धं गाणपत्यमवाप्नुयात् ॥ ६ ॥
श्राद्ध-दानादिकं कृत्वा ह्यक्षयं लभते फलम् । द्विजातिप्रवरैर्जुष्टं योगिभिर्जितमानसैः ॥ ७ ॥
तीर्थं प्लक्षावतरणं सर्वपापविनाशनम् । तत्राभ्यर्च्य श्रीनिवासं विष्णुलोके महीयते ॥ ८ ॥
अन्यच्च मगधारण्यं स्वर्गलोकगतिप्रदम् । अक्षयं विन्दते स्वर्गं तत्र गत्वा द्विजोत्तमः ॥ ९ ॥
तीर्थं कनखलं पुण्यं महापातकनाशनम् । यत्र देवेन रुद्रेण यज्ञो दक्षस्य नाशितः ॥१०॥
तत्र गङ्गामुपस्पृश्य शुचिर्भावसमन्वितः । मुच्यते सर्वपापैस्तु ब्रह्मलोके वसेन्नरः ॥११॥
महातीर्थमिति ख्यातं पुण्यं नारायणप्रियम् । तत्राभ्यर्च्य हृषीकेशं श्वेतद्वीपं निगच्छति ॥१२॥
अन्यच्च तीर्थप्रवरं नाम्ना श्रीपर्वतं शुभम् । अत्र प्राणान् परित्यज्य रुद्रस्य दयितो भवेत् ॥१३॥

तत्र सन्निहितो रुद्रो देव्या सह महेश्वरः । स्नान-पिण्डादिकं तत्र दत्तमक्षयमुत्तमम् ॥१४॥
गोदावरी नदी पुण्या सर्वपाप-प्रणाशनी । तत्र स्नात्वा पितॄन् देवांस्तर्पयित्वा यथाविधि ।
सर्वपापविशुद्धात्मा गोसहस्रफलं लभेत् ॥१५॥
पवित्रसलिला पुण्या कावेरी विपुला नदी । तस्यां स्नात्वोदकं कृत्वा मुच्यते सर्वपातकैः ॥१६॥
त्रिरात्रोपोषितेनाथ एकरात्रोषितेन वा । द्विजातीनान्तु कथितं तीर्थानामिह सेवनम् ॥१७॥
यस्य वाङ्मनसे शुद्धे हस्तपादौ च संयतौ । अलोलुपो ब्रह्मचारी तीर्थानां फलमाप्नुयात् ॥१८॥
स्वामितीर्थं महातीर्थं त्रिषु लोकेषु विश्रुतम् । तत्र सन्निहितो नित्यं स्कन्दोऽमरनमस्कृतः ॥१९॥
स्नात्वा कुमारधारायां कृत्वा देवादितर्पणम् । आराध्य षण्मुखं देवं स्कन्देन सह मोदते ॥२०॥
नदी त्रैलोक्यविख्याता ताम्रपर्णीति नामतः । तत्र स्नात्वा पितॄन् भक्त्या तर्पयित्वा यथाविधि ।
पापकर्तॄनपि पितॄंस्तारयेन्नात्र संशयः ॥२१॥
चन्द्रतीर्थमिति ख्यातं कावेर्याः प्रभवेऽक्षयम् । तीर्थे तत्र भवेद् दत्तं मृतानां सद्गतिप्रदम् ॥२२॥
विन्ध्यपादे प्रपश्यन्ति देवदेवं सदाशिवम् । भक्त्या ये ते न पश्यन्ति यमस्य वदनं द्विजाः॥२३॥
देविकायां वृषो नाम तीर्थं सिद्धनिषेवितम् । तत्र स्नात्वोदकं कृत्वा योगसिद्धिञ्च विन्दति ॥२४॥
दशाश्वमेधिकं तीर्थं सर्वपापविनाशनम् । दशानामश्वमेधानां तत्राप्नोति फलं नरः ॥२५॥
पुण्डरीकं तथा तीर्थं ब्राह्मणैरुपशोभितम् । तत्राभिगम्य युक्तात्मा पौण्डरीकफलं लभेत् ॥२६॥
तीर्थेभ्यः परमं तीर्थं ब्रह्मतीर्थमिति श्रुतम् । ब्रह्माणमर्चयित्वात्र ब्रह्मलोके महीयते ॥२७॥
सरस्वत्या विनशनं प्लक्षप्रस्रवणं शुभम् । व्यासतीर्थमिति ख्यातं मैनाकश्च नगोत्तमः ॥२८॥
यमुनाप्रभवश्चैव सर्वपापविनाशनः । पितॄणां दुहिता देवी गन्धकालीति विश्रुता ॥२९॥
तस्यां स्नात्वा दिवं यान्ति मृतो जातिस्मरो भवेत् । कुबेरतुङ्गं पापघ्नं सिद्ध-चारणसेवितम् ॥३०॥
प्राणांस्तत्र परित्यज्य कुबेरानुचरो भवेत् । उमातुङ्गमिति ख्यातं यत्र सा रुद्रवल्लभा ॥३१॥
तत्राभ्यर्च्य महादेवीं गोसहस्रफलं लभेत् । भृगुतुङ्गे तपस्तप्तं श्राद्धं दानं तथा कृतम् ॥३२॥
कुलान्युभयतः सप्त पुनातीति मतिर्मम । काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम् ॥३२॥
तत्र श्राद्धानि देयानि नित्यं पापक्षयेच्छया । दशार्णायां तथा दानं श्राद्धं होमस्तपो जपः ॥३४॥
अक्षयश्चाव्ययश्चैव कृतं भवति सर्वदा । तीर्थं द्विजातिभिर्जुष्टं नाम्ना वै कुरुजाङ्गलम्॥३५॥
दत्त्वात्र दानं विधिवद् ब्रह्मलोके महीयते । वैतरण्यां महातीर्थं स्वर्णवेद्यां तथैव च ॥३६॥
ब्रह्मपृष्ठे च शिरसि ब्रह्मणः परमे शुभे । भरतस्याश्रमे पुण्ये पुण्ये गृध्रवने शुभे ॥३७॥
महाह्रदे च कौशिक्यां दत्तं भवति चाक्षयम् । मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥३८॥
हिताय सर्वभूतानां नास्तिकानां निदर्शनम् । अल्पेनापि तु कालेन नरा धर्मपरायणाः ॥३९॥
पाप्मानमुत्सृजेद्यत्र जीर्णां त्वचामिवोरगः । नाम्ना कनकनन्देति तीर्थं त्रैलोक्यविश्रुतम् ॥४०॥
उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् । तत्र स्नात्वा दिवं यान्ति कुशीला वा द्विजातयः॥४१॥
दत्तं वापि सदा श्राद्धमक्षय समुदाहृतम् । ऋणैस्त्रिभिर्नरः स्नात्वा मुच्यते क्षीणकल्मषः ॥४२॥
मानसे सरसि स्नात्वा शक्रस्यार्द्धासन लभेत् । उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥४३॥
तस्मिन् निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् । स कामान् लभते दिव्यान् मोक्षोपायञ्च विन्दति॥४४॥
पर्वतो हिमवान् नाम नानाधातुविभूषितः । योजनानां सहस्राणि साशीतिस्त्वायतो गिरिः॥४५॥
सिद्ध-चारणसङ्कीर्णो देवर्षिगणसेवितः । तत्र पुष्करिणी रम्या सुषुम्णा नाम नामतः ॥४६॥
तत्र गत्वा द्विजो विद्वान् ब्रह्महत्यां विमुञ्चति । श्राद्धं भवति चाक्षय्यं तत्र दत्तं महोदयम् ॥४७॥

तारयेच्च पितॄन् सम्यग्दश पूर्वान् दशापरान् । सर्वत्र हिमवान् पुण्यो गङ्गा पुण्या समन्ततः ॥४८॥
नद्यः समुद्रगाः पुण्याः समुद्राश्च विशेषतः । बदर्याश्रममासाद्य मुच्यते सर्वकिल्विषात् ॥४९॥
तत्र नारायणो देवो नरेणास्ते सनातनः । अक्षयं तत्र दानं स्याज्जप्यं वापि तथाविधम् ॥५०॥
महादेवप्रियं तीर्थं पावनं तद्विशेषतः । तारयेच्च पितॄन् सर्वान् दत्त्वा श्राद्धं समाहितः ॥५१॥
देवदारुवनं पुण्यं सिद्ध-गन्धर्वसेवितम् । महता देवदेवेन तत्र दत्त महाफलम् ॥५२॥
मोहयित्वा मुनीन् सर्वान् समस्तैः सम्प्रपूजितः । प्रसन्नो भगवानीशो मुनीन्द्रान् प्राह भावितान् ॥ ३॥
इहाश्रमवरे रम्ये निवसिष्यथ सर्वदा । मद्भावनासमायुक्तास्ततः सिद्धिमवाप्स्यथ ॥५४॥
येऽत्र मामर्चयन्तीह लोके धर्मपरायणाः । तेषां ददामि परमं गाणपत्यं हि शाश्वतम् ॥५५॥
अत्र नित्यं वसिष्यामि सह नारायणेन तु । प्राणानिह नरस्त्यक्त्वा न भूयो जन्म चाप्नुयात् ॥५६॥
संस्मरन्ति च ये तीर्थं देशान्तरगता जनाः । तेषाञ्च सर्वपापाणि नाशयामि द्विजोत्तमाः ॥५७॥
श्राद्धं दानं तपो होमःपिण्डनिर्वपणं तथा । ध्यानं जपश्च नियमः सर्वमत्राक्षयं कृतम् ॥५८॥
तस्मात् सर्वप्रयत्नेन द्रष्टव्यं हि द्विजातिभिः । देवदारुवनं पुण्यं महादेवनिषेवितम् ॥५९॥
यत्रेश्वरो महादेवो विष्णुर्वा पुरुषोत्तमः । तत्र सन्निहिता गङ्गा तीर्थान्यायतनानि च ॥५८॥

इति श्रीकौर्मे महापुराणे उत्तरभागे तीर्थोपाख्यानं

नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

—:०:—

## सप्तत्रिंशोऽध्यायः

### ऋषय ऊचुः

कथं दारुवनं प्राप्तो भगवान् गोवृषध्वजः । मोहयामास विप्रेन्द्रान् सूत तद्वक्तुमर्हसि ॥ १ ॥

### सूत उवाच

पुरा दारुवने रम्ये देव-सिद्धनिषेविते । सपुत्रदारा मुनयस्तपश्चेरुः सहस्रशः ॥ २ ॥
प्रवृत्तं विविधं कर्म प्रकुर्वाणा यथाविधि । यजन्ति विविधैर्यज्ञैस्तपन्ति च महर्षयः ॥ ३ ॥
तेषां प्रवृत्तिविन्यस्त-चेतसामथ शूलभृत् । व्याख्यापयन् सदा दोषं ययौ दारुवनं हरः ॥ ४ ॥
कृत्वा विश्वगुरुं विष्णुं पार्श्वे देवो महेश्वरः । ययौ निवृत्तविज्ञानः स्थापनार्थञ्च शङ्करः ॥ ५ ॥
आस्थाय विपुलं वेषमूनविंशतिवत्सरः । लीलालसो महाबाहुः पीनाङ्गश्चारुलोचनः ॥ ६ ॥
चामीकरवपुः श्रीमान् पूर्णचन्द्रनिभाननः । मत्तमातङ्गगमनो दिग्वासा जगदीश्वरः ॥ ७ ॥
जातरूपमयीं मालां सर्वरत्नैरलङ्कृताम् । दधानो भगवानीशः समागच्छति सस्मितः ॥ ८ ॥
योऽनन्तः पुरुषो योनिर्लोकानामव्ययो हरिः । स्त्रीवेषं विष्णुरास्थाय सोऽनुगच्छति शूलिनम्॥ ९ ॥
सम्पूर्णचन्द्रवदनं पीनोन्नतपयोधरम् । शुचिस्मितं सुप्रसन्नं रणन्नूपुरकद्वयम् ॥१०॥

सुपीतवसनं दिव्यं श्यामलं चारुलोचनम् । उदारहंसगमनं विलासि सुमनोहरम् ॥११॥
एवं स भगवानीशो देवदारुवनं हरः । चचार हरिणा सार्द्धं मायया मोहयञ् जगत् ॥१२॥
दृष्ट्वा चरन्तं विश्वेशं तत्र तत्र पिनाकिनम् । मायया मोहिता नार्यो देवदेवं समन्वयुः ॥१३॥
विस्रस्तवस्त्राभरणास्त्यक्त्वा लज्जां पतिव्रताः । सहैव तेन कामार्त्ता विलासिन्यश्चरन्ति हि ॥१४॥
ऋषीणां पुत्रका ये स्युर्युवानो जितमानसाः । अन्वगच्छन् हृषीकेशं सर्वे कामप्रपीड़िताः ॥१५॥

गायन्ति नृत्यन्ति विलासयुक्ता नारीगणा नायकमेकमीशम् ।
दृष्ट्वा सपत्नीकमतीव कान्तमिष्टं तथालिङ्गितमाचरन्ति ॥१६॥
ते सन्निपत्य स्मितमाचरन्ति गायन्ति गीतानि मुनीशपुत्राः ।
आलोक्य पद्मापतिमादिदेवं भ्रूभङ्गमन्ये विचरन्ति तेन ॥१७॥
आसामथैषामपि वासुदेवो मायी मुरारिर्मनसि प्रविष्टः ।
करोति भोगान् मनसि प्रवृत्तिं मायानुभूतान् स इतीव सम्यक् ॥१८॥
विभाति विश्वामरविश्वनाथः समाधव - स्त्रीगणसन्निविष्टः ।
अशेषशक्त्या समयं निविष्टो यथैकशक्त्या सह देवदेवः ॥१९॥
करोति नित्यं परमं प्रधानं तदा विरूढ़ः पुनरेव भूयः ।
ययौ समारुह्य हरिः स्वभावं तमीदृशं नाम तमादिदेवम् ॥२०॥

दृष्ट्वा नारीकुलं रुद्रं पुत्रानपि च केशवम् । मोहयन्तं मुनिश्रेष्ठाः कोपं सन्दधिरे भृशम् ॥२१॥
अतीव परुषं वाक्यं प्रोचुर्देवं कपर्द्दिनम् । शेपुश्च शापैर्विविधैर्मायया तस्य मोहिताः ॥२२॥
तपांसि तेषां सर्वेषां प्रत्याहन्यन्त शंकरे । यथादित्यप्रतीकाशे तारका नभसि स्थिताः ॥२३॥
तं भत्स्य तापसा विप्राः समेत्य वृषभध्वजम् । को भवानिति देवेशं पृच्छन्ति स्म विमोहिताः॥२४॥
सोऽब्रवीद्भगवानीशस्तपश्चर्तुमिहागतः । इदानीं भार्यया देशे भवद्भिरिह सुव्रताः ॥२५॥
तस्य ते वाक्यमाकर्ण्य भृग्वाद्या मुनिपुङ्गवाः । ऊचुर्गृहीत्वा वसनं त्यक्त्वा भार्यां तपश्चर ॥२६॥
अथोवाच विहस्येशः पिनाकी नीललोहितः । सम्प्रेक्ष्य जगतां योनिं पार्श्वस्थञ्च जनार्दनम् ।२७॥
कथं भवद्भिरुदितं स्वभार्यापोषणोत्सुकैः । त्यक्तव्या मम भार्येति धर्मज्ञैः शान्तमानसैः ॥२८॥

## ऋषय ऊचुः

व्यभिचाररता भार्याः सन्त्याज्याः पतिनेरिताः । अस्माभिरेषा सुभगा तादृशी त्यागमर्हति ॥२९॥

## महादेव उवाच

न कदाचिदियं विप्रा मनसाप्यन्यमिच्छति । नाहमेनामपि तथा विमुञ्चामि कदाचन ॥३०॥

## ऋषय ऊचुः

दृष्ट्वा व्यभिचरन्तीह ह्यस्माभिः पुरुषाधम । उक्तं ह्यसत्यं भवता गम्यतां क्षिप्रमेव हि ॥३१॥
एवमुक्ते महादेवः सत्यमेव मयेरितम् । भवतां प्रतिभात्येवेत्युक्त्वासौ विचचार ह ॥३२॥
सोऽगच्छद्धरिणा सार्धं मुनीन्द्रस्य महात्मनः । वसिष्ठस्याश्रमं पुण्यं भिक्षार्थी परमेश्वरः ॥३३॥
दृष्ट्वा समागतं देवं भिक्षमाणमरुन्धती । वसिष्ठस्य प्रिया भवत्या प्रत्युद्गम्य ननाम तम् ॥३४॥
प्रक्षल्य पादौ विमलं दत्त्वा चासनमुत्तमम् । सम्प्रेक्ष्य शिथिलं गात्रमभिघातहतं द्विजैः ॥३५॥

सन्धयामास भैषज्यैर्विषण्णवदना सती । चकार महतीं पूजां प्रार्थयामास भार्यया ॥३६॥
को भवान् कुत आयातः किमाचारो भवानिति । उच्यतामाह भगवान् सिद्धानां प्रवरो ह्यहम् ॥३७॥
यदेतन्मण्डलं शुद्धं भाति ब्रह्ममयं सदा । एषैव देवता मह्यं धारयामि सदैव तु ॥३८॥
इत्युक्त्वा प्रययौ श्रीमाननुगृह्य पतिव्रताम् । ताडयाञ्चक्रिरे दण्डैर्यष्टिभिर्मुष्टिभिर्द्विजाः ॥३९॥
दृष्ट्वा चरन्तं गिरिशं नग्नं विकृतलक्षणम् । प्रोचुरेतद्भवाँल्लिङ्गमुत्पाटय तु दुर्मते ॥४०॥
तानब्रवीन्महायोगी करिष्यामीति शङ्करः । युष्माकं मामके लिङ्गे यदि द्वेषोऽभिजायते ॥४१॥
इत्युक्त्वोत्पाटयामास भगवान् भगनेत्रहा । नापश्यंस्तत् क्षणाच्चेशं केशवं लिङ्गमेव च ॥४२॥
तदोत्पाता बभूवुर्हि लोकानां भयशंसिनः । नाराजत सहस्रांशुश्चचाल पृथिवी पुनः ।
निष्प्रभाश्च ग्रहाः सर्वे चुक्षुभे च महोदधिः ॥४३॥
अपश्यच्चानसूयात्रेः स्वप्नं भार्या पतिव्रता । कथयामास विप्राणां भयदाकुलितेन्द्रिया ॥४४॥
तेजसा भासयन् कृत्स्नं नारायणसहायवान् । भिक्षमाणः शिवो नूनं दृष्टोऽस्माकं गृहेष्विति ॥४५॥
तस्या वचनमाकर्ण्य शङ्कमाना महर्षयः । सर्वं जग्मुर्महायोगं ब्रह्माणं विश्वसम्भवम् ॥४६॥
उपास्यमानममलैर्योगिभिर्ब्रह्मवित्तमैः । चतुर्वेदैर्मूर्त्तिमद्भिः सावित्र्या सहितं प्रभुम् ॥४७॥
आसीनमासने रम्ये नानाश्चर्यसमन्विते । प्रभासहस्रकलिले ज्ञानैश्वर्यादिसंयुते ॥४८॥
विभ्राजमानं वपुषा सस्मितं सुभ्रु लोचनम् । चतुर्मुखं महाबाहुं छन्दोमयमजं परम् ॥४९॥
विलोक्य देववपुषं प्रसन्नवदनं शुचिम् । शिरोभिर्धरणीं गत्वा तोषयामासुरीश्वरम् ॥५०॥
तान् प्रसन्नो महादेवश्चतुर्मूर्त्तिश्चतुर्मुखः । व्याजहार मुनिश्रेष्ठाः किमागमनकारणम् ॥५१॥
तस्य ते वृत्तमखिलं ब्रह्मणः परमात्मनः । ज्ञापयाञ्चक्रिरे सर्वे कृत्वा शिरसि चाञ्जलिम् ॥५२॥

## ऋषय ऊचुः

कश्चिद्दारुवनं पुण्यं पुरुषोऽतीवशोभनः । भार्यया चारुसर्वाङ्ग्या प्रविष्टो नग्न एव हि ॥५३॥
मोहयामास वपुषा नारीणां कुलमीश्वरः । कन्यकानां प्रिया चास्य दूषयामास पुत्रकान् ॥५४॥
अस्माभिर्विविधाः शापाः प्रवृत्ताश्च पराहताः । ताडितोऽस्माभिरत्यर्थं लिङ्गन्तु विनिपातितम् ॥५५॥
अन्तर्हितश्च भगवान् सभार्यो लिङ्गमेव च । उत्पाताश्चाभवन् घोराः सर्वभूतभयङ्कराः ॥५६॥
क एष पुरुषो देव भीताः स्मः पुरुषोत्तम । भवन्तमेव शरणं प्रपन्ना वयमच्युत ॥५७॥
त्वं हि वेत्सि जगत्यस्मिन् यत्किञ्चिदिह चेष्टितम् । अनुग्रहेण युक्तेन तदास्मानुपपालय ॥५८॥
विज्ञापितो मुनिगणैर्विश्वात्मा कमलोद्भवः । ध्यात्वा देवं त्रिशूलाङ्कं कृताञ्जलिरभाषत ॥५९॥

## ब्रह्मोवाच

हा कष्टं भवतामद्य जातं सर्वार्थनाशनम् । धिग्बलं धिक् तपश्चर्या मिथ्यैव भवतामिह ॥६०॥
सम्प्राप्य पुण्यसंस्थानां निधीनां परमं निधिम् । उपेक्षितं वृथाभावैर्भवद्भिरिह मोहितैः ॥६१॥

काङ्क्षन्ति योगिनो नित्यं यतन्तो यतयो निधिम् । यमेव तं समासाद्य हा भवद्भिरुपेक्षितम् ॥६२॥
यं समासाद्य देवानामैश्वर्यमखिलं ध्रुवम् । तमासाद्याक्षयं देवं हा भवद्भिरुपेक्षितम् ॥६३॥
यमर्चयित्वा सततं विश्वेशत्वमिदं मम । स देवोपेक्षितो दृष्ट्वा निधानं भाग्यवर्जिताः॥६४॥
यस्मिन् समाहितं दिव्यमैश्वर्यं यत्तदव्ययम् । तमासाद्य निधिं ब्रह्म हा भवद्भिर्वृथा कृतम् ॥६५॥
एष देवो महादेवो विज्ञेयस्तु महेश्वरः । न तस्य परमं किञ्चित् पदं समधिगम्यते ॥६६॥
देवतानामृषीणां वा पितॄणाञ्चापि शाश्वतः । सहस्रयुगपर्यन्ते प्रलये सर्वदेहिनाम् ॥६७॥
संहरत्येष भगवान् कालो भूत्वा महेश्वरः । एष चैव प्रजाः सर्वाः सृजत्येकः स्वतेजसा ॥६८॥
एष चक्री चक्रवर्त्ती श्रीवत्सकृतलक्षणः । योगी कृतयुगे देवस्त्रेतायां यज्ञ एव च ।
द्वापरे भगवान् कालो धर्मकेतुः कलौ युगे ॥६९॥
रुद्रस्य मूर्त्तयस्तिस्रो याभिर्विश्वमिदं ततम् । तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुरितिस्मृतिः॥७०॥
मूर्त्तिरन्या स्मृता चास्य दिग्वासा वै शिवा ध्रुवा । यत्र तिष्ठति तद्ब्रह्म योगेन तु समन्वितम् ॥७१॥
या चास्य पार्श्वगा भार्या भवद्भिरभिभाषिता । स हि नारायणो देवः परमात्मा सनातनः ॥७२॥
तस्मात् सर्वमिदं जातं तत्रैव च लयं व्रजेत् । स एष मोहयेत् कृत्स्नं स एष च परा गतिः ॥७३॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । एकशृङ्गो महानात्मा पुराणात्माक्षरो हरिः ॥७४॥
चतुर्वेदश्चतुर्मूर्त्ति स्त्रिगुणः परमेश्वरः । एकमूर्त्तिरनन्तात्मा नारायण इति श्रुतिः ॥७५॥
स तस्य गर्भो भगवानापोमयतनुः प्रभुः । स्तूयते विविधैर्मन्त्रैर्ब्राह्मणैर्मोक्षकाङ्क्षिभिः ॥७६॥
संहृत्य सकलं विश्वं कल्पान्ते पुरुषोत्तमः । शेते योगामृतं पीत्वा यत्तद्विष्णोः परं पदम् ॥७७॥
न जायते न म्रियते वर्द्धते न च विश्वदृक् । मूलप्रकृतिरव्यक्ता गीयते वैदिकैरजः ॥७८॥
ततो निशायां व्युष्टायां सिसृक्षुरखिलं जगत् । अजनाभौ तु तद्बीजं क्षिपत्येष महेश्वरः ॥७९॥
तं मां वित्त महात्मानं ब्रह्माणं विश्वतोमुखम् । महान्तं पुरुषं विश्वमपां गर्भमनुत्तमम् ॥८०॥
न तं जानीत जनकं मोहितास्तस्य मायया । देवदेवं महादेवं भूतानामीश्वरं हरम् ॥८१॥
एष देवो महादेवो ह्यनादिर्भगवान् हरः । विष्णुना सह संयुक्तः करोति विकरोति च ॥८२॥
न तस्य विद्यते कार्यं न तस्माद्विद्यते परम् । स वेदान् प्रददौ पूर्वं योगमायातनुर्मम ॥८३॥
स मायी मायया सर्वं करोति विकरोति च । तमेव मुक्तये ज्ञात्वा व्रजध्वं शरणं शिवम् ॥८४॥
इतीरिता भगवता मरीचिप्रमुखा विभुम् । प्रणम्य देवं ब्रह्माणं पृच्छन्ति स्म समाहिताः॥८५॥

## मुनय ऊचुः

कथं पश्येम तं देवं पुनरेव पिनाकिनम् । ब्रूहि विश्वामरेशान त्राता त्वं शरणैषिणाम् ॥८६॥

## ब्रह्मोवाच

यद्दृष्टं भवता तस्य लिङ्गं भुवि निपातितम् । तल्लिङ्गानुकृतीशस्य कृत्वा लिङ्गमनुत्तमम् ॥८७॥

पूजयध्वं सपत्नीकाः सादरं पुत्रसंयुताः । वैदिकैरेव नियमैर्विविधैर्ब्रह्मचारिणः ॥८८॥
संस्थाप्य शाङ्करैर्मन्त्रैर्ऋग्यजुःसामसम्भवैः । तपः परं समास्थाय गृणन्तः शतरुद्रियम् ॥८९॥
समाहिताः पूजयध्वं सपुत्राः सह बन्धुभिः । सर्वे प्राञ्जलयो भूत्वा शूलपाणिं प्रपद्यथ ॥९०॥
ततो द्रक्ष्यथ देवेशं दुर्दर्शमकृतात्मभिः । यं दृष्ट्वा सर्वमज्ञानमधर्मश्च प्रणश्यति ॥९१॥
ततः प्रणम्य वरदं ब्रह्माणममितौजसम् । जग्मुः संहृष्टमनसो देवदारुवनं पुनः ॥९२॥
आराधयितुमारब्धा ब्रह्मणा कथितं यथा । अजानन्तः परं भावं वीतरागा विमत्सराः ॥९३॥
स्थण्डिलेषु विचित्रेषु पर्वतानां गुहासु च । नदीनाञ्च विविक्तेषु पुलिनेषु शुभेषु च ॥९४॥
शैवालभोजनाः केचित् केचिदन्तर्जलेशयाः । केचिदभ्रावकाशास्तु पादाङ्गुष्ठे ह्यधिष्ठिताः ॥९५॥
दन्तोलूखलिनस्त्वन्ये ह्यश्मकुट्टास्तथा परे । शाकपर्णाशिनाः केचित् सम्प्रक्षाला मरीचिपाः॥९६॥
वृक्षमूलनिकेताश्च शिलाशय्यास्तथापरे । कालं नयन्ति तपसा पूजयन्तो महेश्वरम् ॥९७॥
ततस्तेषां प्रसादार्थं प्रपन्नार्त्तिहरो हरः । चकार भगवान् बुद्धिं प्रबोधाय वृषध्वजः ॥९८॥
देवः कृतयुगे ह्यस्मिन् शृङ्गे हिमवतः शुभे । देवदारुवनं प्राप्तः प्रसन्नः परमेश्वरः ॥९९॥
भस्मपाण्डुरदिग्धाङ्गो नग्नो विकृतलक्षणः । उल्मूकव्यग्रहस्तश्च रक्तपिङ्गललोचनः ॥१००॥
क्वचिच्च हसते रौद्रं क्वचिद् गायति विस्मितः । क्वचिन् नृत्यति शृङ्गारी क्वचिद्रौति मुहुर्मुहुः॥१०१॥
आश्रमे ह्यटते भिक्षुर्याचते च पुनः पुनः । मायां कृत्वात्मनो रूपं देवस्तद्वनमागतः ॥१०२॥
कृत्वा गिरिसुतां गौरीं पार्श्वे देवः पिनाकधृक् । सा च पूर्वद् वदेवेशी देवदारुवनं गता ॥१०३॥
दृष्ट्वा समागतं देवं देव्या सह कपर्दिनम् । प्रणेमुः शिरसा भूमौ तोषयामासुरीश्वरम् ॥१०४॥
वैदिकैर्विविधैर्मन्त्रैस्तोत्रैर्माहेश्वरैः शुभैः । अथर्वशिरसा चान्ये रुद्राद्यैरर्चयन् भवम् ॥१०५॥
नमो देवाधिदेवाय महादेवाय ते नमः । त्र्यम्बकाय नमस्तुभ्यं त्रिशूलवरधारिणे ॥१०६॥
नमो दिग्वाससे तुभ्यं विकृताय पिनाकिने । सर्वप्रणतदेहाय स्वयमप्रणतात्मने ॥१०७॥
अन्तकान्तकृते तुभ्यं सर्वसंहरणाय च । नमोऽस्तु नृत्यशीलाय नमो भैरवरूपिणे ॥१०८॥
नरनारीशरीराय योगिने गुरवे नमः । नमो दान्ताय शान्ताय तापसाय हराय च॥१०९॥
विभीषणाय रुद्राय नमस्ते कृत्तिवाससे । नमस्ते लेलिहानाय शितिकण्ठाय ते नमः ॥११०॥
अघोरघोररूपाय वामदेवाय वै नमः । नमः कनकमालाय देव्याः प्रियकराय च ॥१११॥
गङ्गासलिलधाराय शम्भवे परमेष्ठिने । नमो योगाधिपतये भूताधिपतये नमः ॥११२॥
प्राणाय च नमस्तुभ्यं नमो भस्माङ्गधारिणे । नमस्ते हव्यवाहाय दंष्ट्रिणे हव्यरेतसे ॥११३॥
ब्रह्मणश्च शिरोहर्त्रे नमस्ते कालरूपिणे । आगतिं ते न जानीमो गतिं नैव च नैव च॥११४॥
विश्वेश्वर महादेव योऽसि सोऽसि नमोऽस्तु ते । नमः प्रमथनाथाय दात्रे च शुभ-सम्पदाम् ॥११५॥
कलापपाणये तुभ्यं नमो जुष्टतमाय ते । नमः कनकपिङ्गाय वारिलिङ्गाय ते नमः ॥११६॥
नमो वह्न्यर्कलिङ्गाय ज्ञानलिङ्गाय ते नमः । नमो भुजङ्गहाराय कर्णिकारप्रियाय च ॥११७॥

किरीटिने कुण्डलिने कालकालाय ते नमः । वामदेव महेशान देवदेव त्रिलोचन ॥११८॥
क्षम्यतां यत् कृतं मोहात् त्वमेव शरणं हि नः । चरितानि विचित्राणि गुह्यानि गहनानि च॥११९॥
ब्रह्मादीनाञ्च सर्वेषां दुर्विज्ञेयोऽसि शङ्कर । अज्ञानाद्यदि वा ज्ञानात् किञ्चिद्यत् कुरुते नरः॥१२०॥
तत् सर्वं भगवानेव कुरुते योगमायया । एवं स्तुत्वा महादेवं प्रविष्टैरन्तरात्मभिः ॥१२१॥
ऊचुः प्रणम्य गिरिशं पश्यामस्त्वां यथा पुरा । तेषां संस्तवमाकर्ण्य सोमः सोमविभूषणः ॥१२२॥
स्वमेव परमं रूपं दर्शयामास शङ्करः । तं दृष्ट्वाथ गिरिशं देव्या सह पिनाकिनम् ॥१२३॥
यथापूर्वं स्थिता विप्राः प्रणेमुर्हृष्टमानसाः । ततस्ते मुनयः सर्वे संस्तूय च महेश्वरम् ॥१२४॥
भृग्वङ्गिरो-वसिष्ठास्तु विश्वामित्रस्तथैव च । गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः॥१२५॥
मरीचिः कश्यपश्चापि संवर्त्तकमहातपाः । प्रणम्य देवदेवेशमिदं वचनमब्रुवन् ॥१२६॥
कथं त्वां देवदेवेश कर्मयोगेण वा प्रभो । ज्ञानेन वाथ योगेन पूजयामः सदैव हि ॥१२७॥
केन वा देव मार्गेण सम्पूज्यो भगवानिह । किं तत् सेव्यमसेव्यं वा सर्वमेतद् ब्रवीहि नः॥१२८॥

## देवदेव उवाच

एतद्वः सम्प्रवक्ष्यामि गाढं गहनमुत्तमम् । ब्रह्मणा कथितं पूर्वमादावेव महर्षयः ॥१२९॥
सांख्ययोगाद् द्विधा ज्ञेयं पुरुषाणां हि साधनम् । योगेन सहितं सांख्यं पुरुषाणां विमुक्तिदम् ॥१३०॥
न केवलं हि योगेन दृश्यते पुरुषः परः । ज्ञानन्तु केवलं सम्यगपवर्गफलप्रदम् ॥१३१॥
भवन्तः केवलं योगं समाश्रित्य विमुक्तये । विहाय सांख्यं विमलमकुर्वत परिश्रमम् ॥१३२॥
एतस्मात् कारणाद्विप्रा नृणां केवलकर्मणाम् । आगतोऽहमिमं देशं ज्ञापयन् मोहसम्भवम् ॥१३३॥
तस्माद्भवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् । ज्ञातव्यं हि प्रयत्नेन श्रोतव्यं दृश्यमेव च ॥१३४॥
एकः सर्वत्रगो ह्यात्मा केवलश्चितिमात्रकः । आनन्दो निर्मलो नित्य एतद्वै सांख्यदर्शनम्॥१३५॥
एतदेव परं ज्ञानमय मोक्षोऽनुगीयते । एतत् कैवल्यममलं ब्रह्मभावश्च वर्णितः ॥१३६॥
आश्रित्य चैतत् परमं तन्निष्ठास्तत्परायणाः । पश्यन्ति मां महात्मानो यतयो विश्वमीश्वरम्॥१३७॥
एतत् तत् परमं ज्ञानं केवलं सन्निरञ्जनम् । अहं हि वेद्यो भगवान् मम मूर्त्तिरियं शिवा ॥१३८॥
बहूनि साधनानीह सिद्धये कथितानि तु । तेषामभ्यधिकं ज्ञानं मामकं द्विजपुङ्गवाः ॥१३९॥
ज्ञानयोगरताः शान्ता मामेव शरणं गता । ये हि मां भस्मनिरता ध्यायन्ति सततं हृदि ॥१४०॥
मद्भक्तितत्परा नित्यं यतयः क्षीणकल्मषाः । नाशयाम्यचिरात् तेषां घोरं संसारसागरम् ॥१४१॥
निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् । गुह्याद् गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥१४२॥
प्रशान्तः संयतमना भस्मोद्धूलितविग्रहः । ब्रह्मचर्यरतो नग्नो व्रतं पाशुपतं चरेत् ॥१४३॥
यद्वा कौपीनवसनः स्यादेकवसनो मुनिः । वेदाभ्यासरतो विद्वान् ध्यायेत् पशुपतिं शिवम्॥१४४॥
एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः । भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतम्॥१४५॥
वीतराग-भय-क्रोधा मन्मया मामुपाश्रिताः । बहवोऽनेन योगेन पूता मद्भावमागताः ॥१४६॥

अन्यानि चैव शास्त्राणि लोकेऽस्मिन् मोहनानि च । वेदवादविरुद्धानि मयैव कथितानि तु ॥१४७॥
वामं पाशुपतं सोमं लाकुलञ्चैव भैरवम् । असेव्यमेतत् कथितं वेदबाह्यं तथेतरत् ॥१४८॥
वेदमूर्त्तिरहं विप्रा नान्यशास्त्रार्थवेदिभिः । ज्ञायते मत्स्वरूपन्तु मुक्त्वा देवं सनातनम् ॥१४९॥
स्थापयध्वमिमं मार्गं पूजयध्वं महेश्वरम् । ततोऽचिराद्वरं ज्ञानमुत्पत्स्यति न संशयः ॥१५०॥
मयि भक्तिश्च विपुला भवतामस्तु सत्तमाः । ध्यातमात्रो हि सान्निध्यं दास्यामि मुनिसत्तमा ॥१५१॥
इत्युक्त्वा भगवान् सोमस्तत्रैवान्तर्हितोऽभवत् । तेऽपि दारुवने स्थित्वा ह्यर्चयन्ति स्म शंकरम् ॥१५२॥
ब्रह्मचर्यरताः शान्ता सांख्ययोगपरायणाः । समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः ।
विचक्रिरे बहून् वादान् स्वात्मज्ञानसमाश्रयान् ॥१५३॥
किमस्य जगतो मूलमात्मा चास्माकमेव हि । कोऽपि स्यात् सर्वभावाणां हेतुरीश्वर एव च ॥१५४॥
इत्येवं मन्यमानानां ध्यानमार्गावलम्बिनाम् । आविरासीन्महादेवी ततो गिरिवरात्मजा ॥१५५॥
कोटिसूर्यप्रतीकाशा ज्वालामालासमावृता । स्वभाभिर्निर्मलाभिः सा पूरयन्ती नभस्तलम् ॥१५६॥

तामन्वपश्यन् गिरिजाममेयां ज्वालासहस्रान्तरसन्निविष्टाम् ।
प्रणेमुरेतामखिलेशपत्नीं जानन्ति चैतत् परमस्य बीजम् ॥१५७॥
अस्माकमेषा परमस्य पत्नी गतिस्तथात्मा गगनाभिधाना ।
पश्यन्त्यथात्मानमिदञ्च कृत्स्नं तस्यामथैते मुनयः प्रहृष्टाः ॥१५८॥
निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् ।
पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम् ॥१५९॥
आलोक्य देवीमथ देवमीशं प्रणेमुरानन्दमवापुरग्र्यम् ।
ज्ञानं तदैशं भगवत् - प्रसादादाविर्बभौ जन्मविनाशहेतु ॥१६०॥
इयं या सा जगतो योनिरेका सर्वात्मिका सर्वनियामिका च ।
माहेश्वरी शक्तिरनादिसिद्धा व्योमाभिधाना दिवि राजतीव ॥१६१॥
अस्यां महान् परमेष्ठी परस्तान्महेश्वरः शिव एकः स रुद्रः ।
चकार विश्वं परशक्तिनिष्ठं मायामथारुह्य च देवदेवः ॥१६२॥
एको देवः सर्वभूतेषु गूढ़ो मायी रुद्रः सकलो निष्कलश्च ।
स एव देवी न च तद्विभिन्नमेतज्ज्ञात्वा ह्यमृतत्वं व्रजन्ति ॥१६३॥
अन्तर्हितोऽभूद्भगवान् महेशो देव्या तया सह देवाधिदेवः ।
आराधयन्ति स्म तमादिदेवं वनौकसस्ते पुनरेव रुद्रम् ॥१६४॥

एतद्वः कथितं सर्वं देवदेवस्य चेष्टितम् । देवदारुवने पूर्वं पुराणे यन्मया श्रुतम् ॥१६५॥
यः पठेच्छृणुयान्नित्यं मुच्यते सर्वपातकैः । श्रावयेद्वा द्विजाञ्छान्तान् स याति परमां गतिम् ॥१६६॥
इति श्रीकौर्मे महापुराणे उत्तरभागे तीर्थमाहात्म्ये देवदारुवनप्रवेशो नाम सप्तत्रिंशोऽध्यायः ॥३७॥

# अष्टत्रिंशोऽध्यायः

## सूत उवाच

एषा पुण्यतमा देवी देव-गन्धर्वसेविता । नर्मदा लोकविख्याता तीर्थानामुत्तमा नदी ॥ १ ॥
तस्याः शृणुध्वं माहात्म्यं मार्कण्डेयेन भाषितम् । युधिष्ठिराय तु शुभं सर्वपापप्रणाशनम् ॥ २ ॥

## युधिष्ठिर उवाच

श्रुतास्ते विविधा धर्मास्तत्प्रसादान्महामुने । माहात्म्यञ्च प्रयागस्य तीर्थानि विविधानि च॥ ३ ॥
नर्मदा सर्वतीर्थानां मुख्या हि भवतेरिता । तस्यास्त्विदानीं माहात्म्यं वक्तुमर्हसि सत्तम॥ ४ ॥

## मार्कण्डेय उवाच

नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता । तारयेत् सर्वभूतानि स्थावराणि चराणि च ॥ ५ ॥
नर्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम् । इदानीं तत् प्रवक्ष्यामि शृणुष्वैकमनाः शुभम्॥ ६ ॥
पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती । ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥ ७ ॥
त्रिभिः सारस्वतं तोयं सप्ताहाद्यामुनं जलम् । सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥ ८ ॥
कलिङ्गदेशपश्चार्द्धे पर्वतेऽमरकण्टके । पुण्या च त्रिषु लोकेषु रमणीया मनोरमा ॥ ९ ॥
सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः । तपस्तप्त्वा तु राजेन्द्र सिद्धन्तु परमां गताः ॥१०॥
तत्र स्नात्वा नरो राजन् नियमस्थो जितेन्द्रियः । उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥११॥
योजनानां शतं साग्रं श्रूयते सरिदुत्तमा । विस्तरेण तु राजेन्द्र योजनद्वयमायता ॥१२॥
षष्टितीर्थसहस्राणि षष्टिकोटचस्तथैव च । पर्वतस्य समन्तात् तु तिष्ठन्त्यमरकण्टके ॥१३॥
ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः । सर्वहिंसानिवृत्तस्तु सर्वभूतहिते रतः ॥१४॥
एवं शुद्धसमाचारो यस्तु प्राणान् परित्यजेत् । तस्य पुण्यफलं राजन् शृणुष्वावहितोऽनघ ॥१५॥
शतं वर्षसहस्राणि स्वर्गे मोदति पाण्डव । अप्सरोगणसङ्कीर्णो दिव्यस्त्रीपरिवारितः ॥१६॥
दिव्यगन्धानुलिप्तश्च दिव्यपुष्पोपशोभितः । क्रीड़ते दिव्यलोके तु विबुधैः सह मोदते ॥१७॥
ततः स्वर्गात् परिभ्रष्टो राजा भवति धार्मिकः । गृहन्तु लभतेऽसौ वै नानारत्नसमन्वितम् ॥१८॥
स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैदूर्यभूषितम् । आलेख्य-वाहनैः शुभ्रैर्दासीशतसमन्वितम् ॥१९॥
राजराजेश्वरः श्रीमान् सर्वस्त्रीजनवल्लभः । जीवेद्वर्षशतं साग्रं तत्र भोगसमन्वितः ॥२०॥
अग्निप्रवेशेऽथ जले अथवानशने कृते । अनिवर्त्तिका गतिस्तस्य पवनस्याम्बरे यथा ॥२१॥
पश्चिमे पर्वततटे सर्वपापविनाशनः । ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥२२॥
तत्र पिण्डप्रदानेन सन्ध्योपासनकर्मणा । दश वर्षसहस्राणि तर्पिताः स्युर्न संशयः ॥२३॥
दक्षिणे नर्मदाकूले कपिलाख्या महानदी । सरलार्जुनसञ्छन्ना नातिदूरे व्यवस्थिता ॥२४॥

सा तु पुण्या महाभागा त्रिषु लोकेषु विश्रुता । तत्र कोटिशतं साग्रं तीर्थानान्तु युधिष्ठिर ॥२५॥
तस्मिंस्तीर्थे तु ये वृक्षाः पतिताः कालपर्ययात् । नर्मदातोयसंस्पृष्टास्ते यान्ति परमां गतिम् ॥२६॥
द्वितीया तु महाभाग विशल्यकरणी शुभा । तत्र तीर्थे नरः स्नात्वा विशल्यो भवति क्षणात्॥२७॥
कपिला च विशल्या च श्रूयेते सरिदुत्तमे । ईश्वरेण पुरा प्रोक्ते लोकानां हितकाम्यया ॥२८॥
अनाशकन्तु यः कुर्यात् तस्मिंस्तीर्थे नराधिप । सर्वपापविशुद्धात्मा रुद्रलोकं च गच्छति ॥२९॥
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् । ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते ॥३०॥
सरस्वत्याञ्च गङ्गायां नर्मदायां युधिष्ठिर । समं स्नानञ्च दानञ्च यथा मे शङ्करोऽब्रवीत् ॥३१॥
परित्यजति यः प्राणान् पर्वतेऽमरकण्टके । वर्षकोटिशतं साग्रं रुद्रलोके महीयते ॥३२॥
नर्मदायां जलं पुण्यं फेनोर्म्मिसमलंकृतम् । पवित्रं शिरसा धृत्वा सर्वपापैः प्रमुच्यते ॥३३॥
नर्मदा सर्वतः पुण्या ब्रह्महत्यापहारिणी । अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥३४॥
जालेश्वरं तीर्थवरं सर्वपापप्रणाशनम् । तत्र गत्वा नियमवान् सर्वकामान् लभेन्नरः ॥३५॥
चन्द्र-सूर्योपरागे तु गत्वा चामरकण्टकम् । अश्वमेधाद्दशगुणं पुण्यमाप्नोति मानवः ॥३६॥
एष पुण्यो गिरिवरो देव-गन्धर्वसेवितः । नानाद्रुम-लताकीर्णो नानापुष्पोपशोभितः ॥३७॥
तत्र सन्निहितो राजन् देव्या सह महेश्वरः । ब्रह्मा विष्णुस्तथा रुद्रो विद्याधरगणैः सह ॥३८॥
प्रदक्षिणन्तु यः कुर्यात् पर्वतेऽमरकण्टके । पौण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः ॥३९॥
कावेरी नाम विख्याता नदी कल्मषनाशिनी । तत्र स्नात्वा महादेवमर्चयेद्वृषभध्वजम् ।
सङ्गमे नर्मदायास्तु रुद्रलोके महीयते ॥४०॥

इति श्रीकौर्मे महापुराणे उत्तरभागे तीर्थमाहात्म्ये मार्कण्डेययुधिष्ठिरसंवादे
नर्मदा-माहात्म्यं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

# एकोनचत्वारिंशोऽध्यायः

## मार्कण्डेय उवाच

नर्मदा सरितां श्रेष्ठा सर्वपापविनाशिनी । मुनिभिः कथिता पूर्वमीश्वरेण स्वयम्भुना ॥ १ ॥
मुनिभिः संस्तुता ह्येषा नर्मदा प्रवरा नदी । रुद्रगात्राद् विनिष्क्रान्ता लोकानां हितकाम्यया ॥ २ ॥
सर्वपापहरा नित्यं सर्वदेवनमस्कृता । संस्तुता देवगन्धर्वैरप्सरोभिस्तथैव च ॥ ३ ॥
उत्तरे चैव तत्कूले तीर्थे त्रैलोक्यविश्रुते । नाम्ना भद्रेश्वरं पुण्यं सर्वपापहरं शुभम् ।
तत्र स्नात्वा नरो राजन् दैवतैः सह मोदते ॥ ४ ॥
ततो गच्छेत राजेन्द्र तीर्थमाम्रातकेश्वरम् । तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥ ५ ॥

ततोऽङ्गारेश्वरं गच्छेन्नियतो नियताशनः । सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥ ६ ॥
ततो गच्छेत राजेन्द्र केदारं नाम पुण्यदम् । तत्र स्नात्वोदकं पीत्वा सर्वान् कामानवाप्नुयात् ॥ ७ ॥
निष्पलेशं ततो गच्छेत् सर्वपापविनाशनम् । तत्र स्नात्वा महाराज रुद्रलोके महीयते ॥ ८ ॥
ततो गच्छेत राजेन्द्र बाणतीर्थमनुत्तमम् । तत्र प्रणान् परित्यज्य रुद्रलोकमवाप्नुयात् ॥ ९ ॥
ततः पुष्करिणीं गच्छेत् स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र इन्द्रस्यार्द्धासनं लभेत् ॥१०॥
ततो गच्छेत राजेन्द्र शूलभेदमिति श्रुतिः । तत्र स्नात्वा च पीत्वा च गोसहस्रफलं लभेत् ॥११॥
ततो गच्छेत राजेन्द्र बलितीर्थमनुत्तमम् । तत्र स्नात्वा नरो राजन् सिंहासनपतिर्भवेत् ॥१२॥
शक्रतीर्थं ततो गच्छेत् कूले चैवं तु दक्षिणे । उपोष्य रजनीमेकां स्नानं कृत्वा यथाविधि ॥१३॥
आराधयेन्महायोगं देवदेवं नरोऽमलः । गोसहस्रफलं प्राप्य विष्णुलोकं स गच्छति ॥१४॥
ऋषितीर्थं ततो गत्वा सर्वपापहरं नृणाम् । स्नातमात्रो नरस्तत्र शिवलोके महीयते ॥१५॥
नारदस्य तु तत्रैव तीर्थं परमशोभनम् । स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥१६॥
यत्र तप्तं तपः पूर्वं नारदेन सुरर्षिणा । प्रीतस्तस्य ददौ योगं देवदेवो महेश्वरः ॥१७॥
ब्रह्मणा निर्मितं लिङ्गं ब्रह्मेश्वरमिति श्रुतम् । यत्र स्नात्वा नरो राजन् ब्रह्मलोके महीयते ॥१८॥
ऋणतीर्थं ततो गच्छेदृणान्मुच्येन्नरो ध्रुवम् । वटेश्वरं ततो गच्छेत् पर्याप्तं जन्मनः फलम् ॥१९॥
भीमेश्वरं ततो गच्छेत् सर्वव्याधिविनाशनम् । स्नातमात्रो नरस्तत्र सर्वदुःखैः प्रमुच्यते ॥२०॥
ततो गच्छेत राजेन्द्र पिङ्गलेश्वरमुत्तमम् । अहोरात्रोपवासेन त्रिरात्रफलमाप्नुयात् ॥२१॥
तस्मिंस्तीर्थे तु राजेन्द्र कपिलां यः प्रयच्छति । यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥२२॥
यस्तु प्राणपरित्यागं कुर्यात् तत्र नराधिप । अक्षयं मोदते कालं यावच्चन्द्रदिवाकरौ ॥२३॥
नर्मदातटमाश्रित्य ये च तिष्ठन्ति मानवाः । ते मृताः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥२४॥
ततो दीप्तेश्वरं गच्छेद् व्यासतीर्थं तपोवनम् । निवर्तिता पुरा तत्र व्यासभीता महानदी ।
हूङ्कारिता तु व्यासेन दक्षिणेन ततो गता ॥२५॥
प्रदक्षिणन्तु यः कुर्यात् तस्मिंस्तीर्थे युधिष्ठिर । प्रीतस्तत्र भवेद् व्यासो वाञ्छितं लभते फलम् ॥२६॥
ततो गच्छेत राजेन्द्र इक्षुनद्यास्तु सङ्गमम् । त्रैलोक्यविश्रुतं पुण्यं तत्र सन्निहितः शिवः ।
तत्र स्नात्वा नरो राजन् गाणपत्यमवाप्नुयात् ॥२७॥
स्कन्दतीर्थं ततो गच्छेत् सर्वपापप्रणाशनम् । आ जन्मनः कृतं पापं स्नातस्तत्र व्यपोहति ॥२८॥
तत्र देवाः सगन्धर्वा भर्गात्मजमनुत्तमम् । उपासते महात्मानं स्कदं शक्तिधरं प्रभुम् ॥२९॥
ततो गच्छेदाङ्गिरसं स्नानं तत्र समाचरेत् । गोसहस्रफलं प्राप्य रुद्रलोकं स गच्छति ॥३०॥
अङ्गिरा यत्र देवेशं ब्रह्मपुत्रो वृषध्वजम् । तपसाराध्य विश्वेशं लब्धवान् योगमुत्तमम् ॥३१॥
कुशतीर्थं ततो गच्छेत् सर्वपापप्रणाशनम् । तत्र स्नानं प्रकुर्वीत अश्वमेधफलं लभेत् ॥३२॥

कोटितीर्थं ततो गच्छेत् सर्वपापप्रणाशनम् । आ जन्मनः कृतं पापं स्नातस्तत्र व्यपोहति ।
तत्र स्नात्वा नरो राज्यं लभते नात्र संशयः ॥३३॥
चन्द्रभागां ततो गच्छेत् स्नानं तत्र समाचरेत् । स्नानमात्रो नरस्तत्र सोमलोके महीयते ॥३४॥
नर्मदादक्षिणे कूले सङ्गमेश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन् सर्वयज्ञफलं लभेत् ॥३५॥
नर्मदायोत्तरे कूले तीर्थं परमशोभनम् । आदित्यायतनं रम्यमीश्वरेण तु भाषितम् ॥३६॥
तत्र स्नात्वा तु राजेन्द्र दत्वा दानन्तु शक्तितः । तस्य तीर्थप्रभावेण लभते चाक्षयं फलम् ॥३७॥
हरिद्राव्याधिता ये च ये च दुष्कृतकर्मिणः । मुच्यन्ते सर्वपापेभ्यः सूर्यलोकं प्रयान्ति च ॥३८॥
मातृतीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ॥३९॥
ततः पश्चिमतो गच्छेन्मरुदालयमुत्तमम् । तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा समाहितः ॥४०॥
काञ्चनञ्च यतेर्दद्याद् यथाविभवविस्तरम् । पुष्पकेण विमानेन वायुलोकं स गच्छति ॥४१॥
ततो गच्छेत राजेन्द्र अहल्यातीर्थमुत्तमम् । स्नातमात्रादप्सरोभिर्मोदते कालमुत्तमम् ॥४२॥
चैत्रमासे तु सम्प्राप्ते शुक्लपक्षे त्रयोदशी । कामदेवदिने तस्मिन्नहल्यां यस्तु पूजयेत् ॥४३॥
यत्र तत्र समुत्पन्नो नरोऽत्यर्थप्रियो भवेत् । स्त्रीवल्लभो भवेच्छ्रीमान् कामदेव इवापरः ॥४४॥
सरिद्वरां समासाद्य तीर्थं शक्रस्य विश्रुतम् । स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥४५॥
सोमतीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ॥४६॥
सोमग्रहे तु राजेन्द्र पापक्षयकरं भवेत् । त्रैलोक्यविश्रुतं राजन् सोमतीर्थं महाफलम् ॥४७॥
यस्तु चान्द्रायणं कुर्यात् तत्र तीर्थे समाहितः । सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥४८॥
अग्निप्रवेशं यः कुर्यात् सोमतीर्थे नराधिप । जले चानशनं वापि नासौ मर्त्यो हि जायते ॥४९॥
स्तम्भतीर्थे ततो गच्छेत् स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥५०॥
ततो गच्छेत राजेन्द्र विष्णुतीर्थमनुत्तमम् । योधनीपुरमाख्यातं विष्णोः स्थानमनुत्तमम् ।
असुरा योधितास्तत्र वासुदेवेन कोटिशः ॥५१॥
तत्र तीर्थं समुत्पन्नं विष्णुश्रीको भवेदिह । अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति ॥५२॥
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् । कामतीर्थमिति ख्यातं यत्र कामोऽर्चयद् भवम् ॥५३॥
तस्मिंस्तीर्थे नरः स्नात्वा उपवासपरायणः । कुसुमायुधरूपेण रुद्रलोके महीयते ॥५४॥
ततो गच्छेत राजेन्द्र ब्रह्मतीर्थमनुत्तमम् । अमोघमिति विख्यातं तत्र सन्तर्पयेत् पितॄन् ।
पौर्णमास्याममावास्यां श्राद्धं कुर्याद् यथाविधि ॥५५॥
गजरूपा शिला तत्र तोयमध्ये व्यवस्थिता । तस्मिंस्तु दापयेत् पिण्डान् वैशाखे तु समाहितः ॥५६॥
स्नात्वा समाहितमना दम्भ-मात्सर्यवर्ज्जितः । तृप्यान्ति पितरस्तस्य यावत् तिष्ठति मेदिनी ॥ ७॥
सिद्धेश्वरं ततो गच्छेत् स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र गाणपत्यपदं लभेत् ॥५८॥
ततो गच्छेत राजेन्द्र लिङ्गो यत्र जनार्दनः । तत्र स्नात्वा नरो भक्त्या विष्णुलोके महीयते ॥५९॥

तत्र नारायणो देवो मुनीनां भावितात्मनाम् । स्वात्मानं दर्शयामास लिङ्ग तत् परमं पदम् ॥६०॥
अङ्कोलन्तु ततो गच्छेत् सर्वपापविनाशनम् । स्नानं दानञ्च तत्रैव ब्राह्मणानाञ्च भोजनम् ॥६१॥
पिण्डप्रदानञ्च कृतं प्रेत्यानन्तफलप्रदम् । त्रियम्बकेण तोयेन यश्चरुं श्रपयेद् द्विजः ॥६२॥
अङ्कोलमूले दद्याच्च पिण्डांश्चैव यथाविधि । तारिताः पितरस्तेन तृप्यन्त्याचन्द्र-तारकम् ॥६३॥
ततो गच्छेत राजेन्द्र तापसेश्वरमुत्तमम् । तत्र स्नात्वा तु राजेन्द्र प्राप्नुयात् तपसः फलम्॥६४॥
शुक्लतीर्थं ततो गच्छेत् सर्वपापविनाशनम् । नास्ति तेन समं तीर्थं नर्मदायां युधिष्ठिर ॥६५॥
दर्शनात् स्पर्शनात् यस्याः स्नानाद्दानात् तपोजपात् । होमाच्चैवोपवासाच्च शुक्लतीर्थे महत् फलम् ॥६६॥
योजनं तत् स्मृतं क्षेत्रं देव-गन्धर्वसेवितम् । शुक्लतीर्थमिति ख्यातं सर्वपापविनाशनम् ॥६७॥
पादपाग्रेण दृष्टेन ब्रह्महत्या व्यपोहति । देव्या सह सदा भर्गस्तत्र तिष्ठति शङ्करः ॥६८॥
कृष्णपक्षे चतुर्दश्यां वैशाखे मासि सुव्रत । लोकात् स्वकाद्विनिष्क्रम्य तत्र सन्निहितो हरः॥६९॥
देव-दानव-गन्धर्वाः सिद्ध-विद्याधरास्तथा । गणाश्चाप्सरसो नागास्तत्र तिष्ठन्ति पुङ्गवाः ॥७०॥
रञ्जितं हि यथा वस्त्रं शुक्लं भवति वारिणा । आजन्मजनितं पापं शुक्लतीर्थे व्यपोहति ॥७१॥
स्नानं दानं तपः श्राद्धमनन्तं तत्र दृश्यते । शुक्लतीर्थात् परं तीर्थं न भूतं न भविष्यति ॥७२॥
पूर्वे वयसि कर्माणि कृत्वा पापानि मानवः । अहोरात्रोपवासेन शुक्लतीर्थे व्यपोहति ॥७३॥
कार्त्तिकस्य तु मासस्य कृष्णे पक्षे चतुर्दशी । घृतेन स्नापयेद् देवमुपोष्य परमेश्वरम् ॥७४॥
एकविंशत्कुलोपेतो न च्यवेदीश्वरालयात् । तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः ।
न तां गतिमवाप्नोति शुक्लतीर्थे तु यां लभेत् ॥७५॥
शुक्लतीर्थं महातीर्थमृषि-सिद्धनिषेवितम् । तत्र स्नात्वा नरो राजन् पुनर्जन्म न विन्दति ॥७६॥
अयने वा चतुर्दश्यां संक्रान्तौ विषुवे तथा । स्नात्वा तु सोपवासःसन् विजितात्मा समाहितः॥७७॥
दानं दद्याद् यथाशक्ति प्रीयेतां हरि-शङ्करौ । एतत्तीर्थप्रभावेण सर्वं भवति चाक्षयम् ॥७८॥
अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा । उद्वाहयति यस्तीर्थे तस्य पुण्यफलं शृणु ॥७९॥
यावत् तद्रोमसंख्या तु तत्प्रसूतिकुलेषु च । तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥८०॥
ततो गच्छेत राजेन्द्र यमतीर्थमनुत्तमम् । कृष्णपक्षे चतुर्दश्यां माघमासे युधिष्ठिर ॥८१॥
स्नानं कृत्वा नक्तभोजी न पश्येद् योनिसङ्कटम् । ततो गच्छेत राजेन्द्र एरण्डीतीर्थमुत्तमम् ॥८२॥
सङ्गमे तु नरः स्नात्वा उपवासपरायणः । ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिताः ॥८३॥
एरण्डीसङ्गमे स्नात्वा भक्तिभावानुरञ्जितः । मृत्तिकां शिरसि स्थाप्य अवगाह्य च तज्जलम् ।
नर्मदोदकसंमिश्रं मुच्यते सर्वकिल्विषैः ॥८४॥
ततो गच्छेत राजेन्द्र तीर्थं कल्लोलकेश्वरम् । गङ्गावतरते तत्र दिने पुण्ये न संशयः ॥८५॥
तत्र स्नात्वा च पीत्वा च दत्त्वा चैव यथाविधि । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥८६॥
नन्दितीर्थं ततो गच्छेत् तत्र स्नानं समाचरेत् । प्रीयते तस्य नन्दीशः सोमलोके महीयते ॥८७॥

ततो गच्छेत राजेन्द्र तीर्थन्त्वनरकं शुभम् । तत्र स्नात्वा नरो राजन् नरकं नैव पश्यति ॥८८॥
तस्मिंस्तीर्थे तु राजेन्द्र स्वान्यस्थीनि विनिक्षिपेत् । रूपवान् जायते लोके धनभोगसमन्वितः ॥८९॥
ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत्॥९०॥
ज्यैष्ठमासे तु सम्प्राप्ते चतुदश्यां विशेषतः । तत्रोपोष्य नरो भक्त्या दत्त्वा दीपं घृतेन तु॥९१॥
घृतेन स्नापयेद्रुद्रं सघृतं श्रीफलं ददेत् । घण्टाभरणसंयुक्तां कपिलां वै प्रदापयेत् ॥९२॥
सर्वाभरणसंयुक्तः सर्वदेवनमस्कृतः । शिवतुल्यबलो भूत्वा शिववत् क्रीड़ते सदा ॥९३॥
अङ्गारकदिने प्राप्ते चतुर्थ्यान्तु विशेषतः । स्नापयित्वा शिवं दद्याद ब्राह्मणेभ्यस्तु भोजनम्॥९४॥
सर्वभोगसमायुक्तो विमाने सार्वकामिके । गत्वा शक्रस्य भवनं शक्रेण सह मोदते ।
ततः स्वर्गात् परिभ्रष्टो धनवान् भोगवान् भवेत् ॥९५॥
अङ्गारकनवम्यान्तु अमावास्यां तथैव च । स्नापयेत् तत्र यत्नेन रूपवान् सुभगो भवेत् ॥९६॥
ततो गच्छेत राजेन्द्र गणेश्वरमनुत्तमम् । श्रावणे मासि सम्प्राप्ते कृष्णपक्षे चतुर्दशी ॥९७॥
स्नातमात्रो नरस्तत्र ब्रह्मलोके महीयते । पितृणां तर्पणं कृत्वा मुच्यते स ऋणत्रयात् ॥९८॥
गङ्गेश्वरसमीपे तु गङ्गावदनमुत्तमम् । अकामो वा सकामो वा तत्र स्नात्वा तु मानवः ।
आजन्मजनितैः पापैर्मुच्यते नात्र संशयः ॥९९॥
तस्य वै पश्चिमे भागे समीपे नातिदूरतः । दशाश्वमेधिकं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥१००॥
उपोष्य रजनीमेकां मासि भाद्रपदे शुभे । अमावास्यां नरः स्नात्वा पूजयेद् गोवृषध्वजम्॥१०१॥
काञ्चनेन विमानेन किङ्किणीजालमालिना । गत्वा रुद्रपुरं रम्यं रुद्रेण सह मोदते ॥१०२॥
सर्वत्र सर्वदिवसे स्नानं तत्र समाचरेत् । पितृणां तर्पणं कृत्वा चाश्वमेधफलं लभेत् ॥१०३॥

इति श्रीकौर्मे महापुराणे उत्तरभागे नर्मदातीर्थमहात्म्ये
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

—:०:—

# चत्वारिंशोऽध्यायः

## मार्कण्डेय उवाच

ततो गच्छेत राजेन्द्र भृगुतीर्थमनुत्तमम् । तत्र देवं भृगुर्भर्गं रुद्रमाराधयत् पुरा ।
दर्शनात् तस्य देवस्य सद्यः पापात् प्रमुच्यते ॥ १ ॥
एतत् क्षेत्रं सुविपुलं सर्वपापप्रणाशनम् । तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः॥ २ ॥
उपानहौ तथा युग्यं देयमन्नञ्च काञ्चनम् । भोजनञ्च यथाशक्ति सदस्याक्षयमुच्यते ॥ ३ ॥
क्षरन्ति सर्वदानानि यज्ञदानं तपः क्रिया । न क्षरेद्यत् तपस्तप्तं भृगुतीर्थे युधिष्ठिर ॥ ४ ॥

तस्यैव तपसोग्रेण तुष्टेन त्रिपुरारिणा । सान्निध्यं तत्र कथितं भृगुतीर्थे युधिष्ठिर ॥५॥
ततो गच्छेत राजेन्द्र गौतमेश्वरमुत्तमम् । यत्राराध्य त्रिशूलाङ्कं गौतमः सिद्धिमाप्नुयात् ॥६॥
तत्र स्नात्वा नरो राजन्नुपवासपरायणः । काञ्चनेन विमानेन ब्रह्मलोके महीयते ॥७॥
वृषोत्सर्गं ततो गच्छेच्छाश्वतं पदमाप्नुयात् । न जानन्ति नरा मूढा विष्णोर्मायाविमोहिताः॥८॥
धौतपापं ततो गच्छेद्धौतं यत्र वृषेण तु । नर्मदायां स्थितं राजन् सर्वपातकनाशनम् ।
तत्र तीर्थे नरः स्नात्वा ब्रह्महत्यां विमुञ्चति ॥९॥
तत्र तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः । चतुर्भुजस्त्रिनेत्रश्च हरतुल्यबलो भवेत् ॥१०॥
वसेत् कल्पायुतं साग्रं शिवतुल्यपराक्रमः । कालेन महता जातः पृथिव्यामेकराड् भवेत् ॥११॥
ततो गच्छेत राजेन्द्र हंसतीर्थमनुत्तमम् । तत्र स्नात्वा नरो राजन् ब्रह्मलोके महीयते ॥१२॥
ततो गच्छेत राजेन्द्र यत्र सिद्धो जनार्दनः । वराहतीर्थमाख्यातं विष्णुलोकगतिप्रदम् ॥१३॥
ततो गच्छेत राजेन्द्र चन्द्रतीर्थमनुत्तमम् । पौर्णमास्यां विशेषेण स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र चन्द्रलोके महीयते ॥१४॥
ततो गच्छेत राजेन्द्र कन्यातीर्थमनुत्तमम् । स्नात्वा तत्र नरो राजन् सर्वपापैः प्रमुच्यते ॥१५॥
शुक्लपक्षे तृतीयायां स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र पृथिव्यामेकराड् भवेत् ॥१६॥
देवतीर्थं ततो गच्छेत् सर्वदेवनमस्कृतम् । तत्र स्नात्वा च राजेन्द्र दैवतैः सह मोदते ॥१७॥
ततो गच्छेत राजेन्द्र शिखितीर्थमनुत्तमम् । यत् तत्र दीयते श्राद्धं सर्वं कोटिगुणं भवेत् ॥१८॥
ततो गच्छेत राजेन्द्र तीर्थं पैतामहं शुभम् । यत् तत्र दीयते श्राद्धं सर्वं तस्याक्षयं भवेत् ॥१९॥
सावित्रीतीर्थमासाद्य यस्तु प्राणान् परित्यजेत् । विधूय सर्वपापाणि ब्रह्मलोके महीयते ॥२०॥
मनोहरन्तु तत्रैव तीर्थं परमशोभनम् । तत्र स्नात्वा नरो राजन् रुद्रलोके महीयते ॥२१॥
ततो गच्छेत राजेन्द्र मानसं तीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन् रुद्रलोके महीयते ॥२२॥
ततो गच्छेत राजेन्द्र कल्पतीर्थमनुत्तमम् । स्नात्वा तत्र नरो राजन् सर्वपापैः प्रमुच्यते ॥२३॥
सर्गबिन्दुं ततो गच्छेत् तीर्थं देवनमस्कृतम् । तत्र स्नात्वा नरो राजन् दुर्गतिं वै न पश्यति ॥२४॥
अप्सरेशं ततो गच्छेत् स्नानं तत्र समाचरेत् । क्रीडन्ते नाकलोकस्थो ह्यप्सरोभिः स मोदते॥२५॥
ततो गच्छेत राजेन्द्र भारभूतिमनुत्तमम् । उपोषितो यजेतेशं रुद्रलोके महीयते ।
अस्मिंस्तीर्थे मृतो राजन् गाणपत्यमवाप्नुयात् ॥२६॥
कार्त्तिके मासि देवेशमर्चयेत् पार्वतीपतिम् । अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥२७॥
वृषभं यः प्रयच्छेत तत्र कुन्देन्दुसप्रभम् । वृषयुक्तेन यानेन रुद्रलोकं स गच्छति ॥२८॥
एतत् तीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् । सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥२९॥
जलप्रवेशं यः कुर्यात् तस्मिंस्तीर्थे नराधिप । हंसयुक्तेन यानेन स्वर्गलोकं स गच्छति ॥३०॥
एरण्ड्या नर्मदायास्तु सङ्गमं लोकविश्रुतम् । तच्च तीर्थं महापुण्यं सर्वपापप्रणाशनम् ॥३१॥

उपवासपरो भूत्वा नित्यं व्रतपरायणः । तत्र स्नात्वा तु राजेन्द्र मुच्यते ब्रह्महत्यया ॥३२॥
ततो गच्छेत राजेन्द्र नर्मदोदधिसङ्गमम् । जमदग्निरिति ख्यातं सिद्धो यत्र जनार्दनः ॥३३॥
तत्र स्नात्वा नरो राजन् नर्मदोदधिसङ्गमे । त्रिगुणश्चाश्वमेधस्य फलं प्राप्नोति मानवः ॥३४॥
ततो गच्छेत राजेन्द्र विमलेश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन् रुद्रलोके महीयते ॥३५॥
तत्रोपवासं यः कृत्वा पश्येत विमलेश्वरम् । सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ॥३६॥
ततो गच्छेत राजेन्द्र अलकातीर्थमुत्तमम् । उपोष्य रजनीमेकां नियतो नियताशनः ।
अस्य तीर्थस्य माहात्म्यान्मुच्यते ब्रह्महत्यया ॥३७॥
एतानि तव संक्षेपात् प्राधान्यात् कथितानि च । न शक्या विस्तराद्वक्तुं संख्या तीर्थेषु पाण्डव॥३८॥
एषा पवित्रा विपुला नदी त्रैलोक्यविश्रुता । नर्मदा सरितां श्रेष्ठा महादेवस्य वल्लभा ॥३९॥
मनसा संस्मरेद् यस्तु नर्मदां वै युधिष्ठिर । चान्द्रायणशतं साग्रं लभते नात्र संशयः ॥४०॥
अश्रद्दधानाः पुरुषा नास्तिक्यं घोरमाश्रिताः । पतन्ति नरके घोरे इत्याह परमेश्वरः ॥४१॥
नर्मदां सेवते नित्यं स्वयं देवो महेश्वरः । तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥४२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे नर्मदामाहात्म्यं
नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

# एकचत्वारिंशोऽध्यायः

## सूत उवाच

इदं त्रैलोक्यविख्यातं तीर्थं नैमिषमुत्तमम् । महादेवप्रियतरं महापातकनाशनम् ॥ १ ॥
महादेवं दिदृक्षूणामृषीणां परमेष्ठिना । ब्रह्मणा निर्मितं स्थानं तपस्तप्तं द्विजोत्तमाः॥ २ ॥
मरीचयोऽत्रयो विप्रा वसिष्ठाः क्रतवस्तथा । भृगवोऽङ्गिरसः पूर्वं ब्रह्माणं कमलोद्भवम् ॥ ३ ॥
समेत्य सर्ववरदं चतुर्मूर्त्तिं चतुर्मुखम् । पृच्छन्ति प्रणिपत्यैनं विश्वकर्माणमव्ययम् ॥ ४ ॥

## षट्कुलीया ऊचुः

भगवन् देवमीशानं तमेवैकं कपर्दिनम् । केनोपायेन पश्येम ब्रूहि देव नमस्तव ॥ ५ ॥

## ब्रह्मोवाच

सत्रं महत् समासध्वं वाङ्मनोदोषवर्जिताः । देशञ्च वः प्रवक्ष्यामि यस्मिन् देशे चरिष्यथ ॥ ६ ॥
मुक्त्वा मनोमयं चक्रं संसृष्ट्वा तानुवाच ह । क्षिप्तमेतन्मया चक्रमनुव्रजत मा चिरम् ॥ ७ ॥

यत्रास्य नेमिः शीर्येत स देशस्तपसः शुभः । ततो मुमोच तच्चक्रं ते च तत् समनुव्रजन् ॥ ८ ॥
तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्यत । नैमिषं तत् स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम् ॥ ९ ॥
सिद्ध - चारणसङ्कीर्णं यक्ष - गन्धर्वसेवितम् । स्थानं भगवतः शम्भोरेतन्नैमिषमुत्तमम् ॥१०॥
अत्र देवाः सगन्धर्वाः सयक्षोरग - राक्षसाः । तपस्तप्त्वा पुरा देवा लेभिरे प्रवरान् वरान् ॥११॥
इमं देशं समाश्रित्य षट्कुलीयाः समाहिताः । सत्रेणाराध्य देवेशं दृष्टवन्तो महेश्वरम् ॥१२॥
अत्र दानं तपस्तप्तं श्राद्ध - यागादिकञ्च यत् । एकैकं नाशयेत् पापं सप्तजन्मकृतं तथा ॥१३॥
अत्र पूर्वं स भगवानृषीणां सत्रमासताम् । स वै प्रोवाच ब्रह्माण्डपुराणं ब्रह्मभावितम् ॥१४॥
अत्र देवो महादेवो रुद्राण्या किल विश्वदृक् । रमतेऽद्यापि भगवान् प्रमथैः परिवारितः ॥१५॥
अत्र प्राणान् परित्यज्य नियमेन द्विजातयः । ब्रह्मलोकं गमिष्यन्ति यत्र गत्वा न जायते ॥१६॥
अन्यच्च तीर्थप्रवरं जाप्येश्वरमिति श्रुतम् । जजाप रुद्रमनिशं यथा नन्दी महागणः ॥१७॥
प्रीतस्तस्य महादेवो देव्या सह पिनाकधृक् । ददावात्मसमानत्वं मृत्युवञ्चनमेव च ॥१८॥
अभूदृषिः स धर्मात्मा शिलादो नाम धर्मवित् । आराधयन्महादेवं पुत्रार्थं वृषभध्वजम् ॥१९॥
तस्य वर्षसहस्रान्ते तप्यमानस्य विश्वधृक् । शर्वः सोमो गणवृतो वरदोऽस्मीत्यभाषत ॥२०॥
स वव्रे वरमीशानं वरेण्यं गिरिजापतिम् । अयोनिजं मृत्युहीनं याचे पुत्रं त्वया समम् ॥२१॥
तथास्त्वित्याह भगवान् देव्या सह महेश्वरः । पश्यतस्तस्य विप्रर्षेरन्तर्द्धानं गतो हरः ॥२२॥
ततो यियक्षुः स्वां भूमिं शिलादो धर्मवित्तमः । चकर्ष लाङ्गलेनोर्वीं भित्त्वादृश्यत शोभनः ॥२३॥
संवर्त्तकोऽनलप्रख्यः कुमारः प्रहसन्निव । रूपलावण्यसम्पन्नस्तेजसा भासयन् दिशः ॥२४॥
कुमारतुल्योऽप्रतिमो मेघगम्भीरया गिरा । शिलादं तात तातेति प्राह नन्दी पुनःपुनः ॥२५॥
तं दृष्ट्वा नन्दनं जातं शिलादः परिषस्वजे । मुनीनां दर्शयामास तत्राश्रमनिवासिनाम् ॥२६॥
जातकर्मादिकाः सर्वाः क्रियास्तस्य चकार ह । उपनीय यथाशास्त्रं वेदमध्यापयत् स्वयम् ॥२७॥
अधीतवेदो भगवान् नन्दी मतिमनुत्तमाम् । चक्रे महेश्वरं दृष्ट्वा जेष्ये मृत्युमिति प्रभुम् ॥२८॥
स गत्वा सागरं पुण्यमेकाग्रः श्रद्धयान्वितः । जजाप रुद्रमनिशं महेशासक्तमानसः ॥२९॥
तस्य कोट्याञ्च पूर्णायां शङ्करो भक्तवत्सलः । आगत्य साम्बः सगणो वरदोऽस्मीत्यभाषत ॥३०॥
स वव्रे पुनरेवेशं जपेयं कोटिमीश्वरम् । तावदायुर्महादेवं देहीति वरमीश्वर ॥३१॥
एवमस्त्विति सम्प्रोच्य देवोऽप्यन्तरधीयत । जजाप कोटिं भगवान् भूयस्तद्गतमानसः ॥३२॥
द्वितीयायाञ्च कोट्यां वै पूर्णायाञ्च वृषध्वजः । आगत्य वरदोऽस्मीति प्राह भूतगणैर्वृतः ॥३३॥
तृतीयां जप्तुमिच्छामि कोटिं भूयोऽपि शङ्कर । तथास्त्वित्याह विश्वात्मा देव्या चान्तरधीयत॥३४॥
कोटित्रयेऽथ सम्पूर्णे देवः प्रीतमना भृशम् । आगत्य वरदोऽस्मीति प्राह भूतगणैर्वृतः ॥३५॥
जपेयं कोटिमन्यां वै भूयोऽपि तव तेजसा । इत्युक्ते भगवानाह न जप्तव्यं त्वया पुनः ॥३६॥
अमरो जरया त्यक्तो मम पार्श्वगतः सदा । महागणपतिर्देव्याः पुत्रो भव महेश्वरः ॥३७॥

योगीश्वरो योगनेत्रो गणानामीश्वरेश्वरः । सर्वलोकाधिपः श्रीमा् सर्वज्ञो मद्बलान्वितः ॥३८॥
ज्ञानं तन्मामकं दिव्यं हस्तामलकवत् तव । आभूतसंप्लवस्थायी ततो यास्यसि तत्पदम् ॥३९॥
एतदुक्त्वा महादेवो गणनाहूय शङ्करः । अभिषेकेण युक्तेन नन्दीश्वरमयोजयत् ॥४०॥
उद्वाहयामास च तं स्वयमेव पिनाकधृक् । मरुताञ्च शुभां कन्यां सुयशेति च विश्रुताम् ॥४१॥
एतज्जाप्येश्वरं स्थानं देवदेवस्य शूलिनः । यत्र तत्र मृतो मर्त्यो रुद्रलोके महीयते ॥४२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे जाप्येश्वरमाहात्म्यं नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

# द्विचत्वारिंशोऽध्यायः

## सूत उवाच

अन्यच्च तीर्थप्रवरं जाप्येश्वरसमीपतः । नाम्ना पञ्चनदं पुण्यं सर्वपापप्रणाशनम् ॥ १ ॥
त्रिरात्रमुषितस्तत्र पूजयित्वा महेश्वरम् । सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥ २ ॥
अन्यच्च तीर्थप्रवरं शक्रस्यामिततेजसः । महाभैरवमित्युक्तं महापातकनाशनम् ॥ ३ ॥
तीर्थानाञ्च परं तीर्थं वितस्ता परमा नदी । सर्वपापहरा पुण्या स्वयमेव गिरीन्द्रजा ॥ ४ ॥
तीर्थं पञ्चतपो नाम शम्भोरमिततेजसः । यत्र देवाधिदेवेन चक्रार्थं पूजितो भवः ॥ ५ ॥
पिण्डदानादिकं तत्र प्रेत्यानन्दसुखप्रदम् । मृतस्तत्राथ नियमाद ब्रह्मलोके महीयते ॥ ६ ॥
कायावरोहणं नाम महादेवालयं शुभम् । यत्र माहेश्वरा धर्मा मुनिभिः सम्प्रवर्त्तिताः ॥ ७ ॥
श्राद्धं दानं तपो होम उपवासस्तथाक्षयः । परित्यजति यः प्राणान् रुद्रलोकं स गच्छति ॥ ८ ॥
अन्यच्च तीर्थप्रवरं कन्यातीर्थमनुत्तमम् । तत्र गत्वा त्यजन् प्राणाँल्लोकानाप्नोति शाश्वतान् ॥९॥
जामदग्न्यस्य च शुभं रामस्याक्लिष्टकर्मणः । तत्र स्नात्वा तीर्थवरे गोसहस्रफलं लभेत् ॥१०॥
महाकालमिति ख्यातं तीर्थं लोकेषु विश्रुतम् । गत्वा प्राणान् परित्यज्य गाणपत्यमवाप्नुयात् ॥११॥
गुह्याद गुह्यतमं तीर्थं नकुलीश्वरमुत्तमम् । तत्र सन्निहितः श्रीमान् भगवान् नकुलीश्वरः ॥१२॥
हिमवच्छिखरे रम्ये गङ्गाद्वारे सुशोभने । देव्या सह महादेवो नित्यं शिष्यैश्च संवृतः ॥१३॥
तत्र स्नात्वा महादेवं पूजयित्वा वृषध्वजम् । सर्वपापात् प्रमुच्येत मृतस्तज्ज्ञानमाप्नुयात् ॥१४॥
अन्यच्च देवेदेवस्य स्थानं पुण्यतमं शुभम् । भीमेश्वरमिति ख्यातं गत्वा मुञ्चति पातकम् ॥१५॥
तथान्यच्चण्डवेगायाः सम्भेदः पापनाशनः । तत्र स्नात्वा च पीत्वा च मुच्यते ब्रह्महत्यया ॥१६॥
सर्वेषामपि चैतेषां तीर्थानां परमा पुरी । नाम्ना वाराणसी दिव्या कोटिकोट्ययुताधिका ॥१७॥
तस्याः पुरस्तान्माहात्म्यं भाषितं वो मया त्विह । नान्यत्र लभते मुक्तिं योगेनाप्येकजन्मना ॥१८॥

एते प्राधान्यतः प्रोक्ता देशाः पापहरा नृणाम् । गत्वा संक्षालयेत् पापं जन्मान्तरशतैः कृतम् ॥१९॥
यः स्वधर्मान् परित्यज्य तीर्थसेवां करोति हि । न तस्य फलते तीर्थमिह लोके परत्र च ॥२०॥
प्रायश्चित्ती च विधुरस्तथा यायावरो गृही । प्रकुर्यात् तीर्थसंसेवां यश्चान्यस्तादृशो जनः ॥२१॥
सहाग्निर्वा सपत्नीकी गच्छेत् तीर्थानि यत्नतः । सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात् ॥२२॥
ऋणानि त्रीण्यपाकृत्य कुर्याद्वा तीर्थसेवनम् । विधाय वृत्तिं पुत्राणां भार्यां तेषु निधाय च ॥२३॥
प्रायश्चित्तप्रसङ्गेन तीर्थमाहात्म्यमीरितम् । यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥२४॥

इति श्रीकौर्मे महापुराणे उत्तरभागे तीर्थमाहात्म्यं
नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

# त्रिचत्वारिंशोऽध्यायः

## सूत उवाच

एकदाकर्ण्य विज्ञानं नारायणमुखेरितम् । कूर्मरूपधरं देवं पप्रच्छुर्मुनयः प्रभुम् ॥ १ ॥

## ऋषय ऊचुः

कथितो भवता धर्मो मोक्षज्ञानं सविस्तरम् । लोकानां सर्गविस्तारो वंशो मन्वन्तराणि च ॥ २ ॥
इदानीं देवदेवेश प्रलयं वक्तुमर्हसि । भूतानां भूतभव्येश यथापूर्वं त्वयोदितम् ॥ ३ ॥

## सूत उवाच

श्रुत्वा तेषां तदा वाक्यं भगवान् कूर्मरूपधृक् । व्याजहार महायोगी भूतानां प्रतिसञ्चरम् ॥ ४ ॥

## कूर्म उवाच

नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिको तथा । चतुर्धाऽयं पुराणेऽस्मिन् प्रोच्यते प्रतिसञ्चरः ॥ ५ ॥
योऽयं संदृश्यते नित्यं लोके भूतक्षयस्त्विह । नित्यः सङ्कीर्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः ॥ ६ ॥
ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति । त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥ ७ ॥
महदाद्यं विशेषान्तं यदा संयाति संक्षयम् । प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ॥ ८ ॥
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि । प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ॥ ९ ॥
आत्यन्तिकस्तु कथितः प्रलयो ज्ञानसाधनः । नैमित्तिकमिदानीं वः कथयिष्ये समासतः ॥१०॥

चतुर्युगसहस्रान्ते सम्प्राप्ते प्रतिसञ्चरे । स्वात्मसंस्थाः प्रजाः कर्तुं प्रतिपेदे प्रजापतिः ॥११॥
ततोऽभवत् त्वनावृष्टिस्तीव्रा सा शतवार्षिकी । भूतक्षयकरी घोरा सर्वभूतक्षयङ्करी ॥१२॥
ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले । तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥१३॥
सप्तरश्मिरथो भूत्वा समुत्तिष्ठन् दिवाकरः । असह्यरश्मिर्भवति पिबन्नम्भो गभस्तिभिः ॥१४॥
तस्य ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे । तेनाहारेण ते दीप्ताः सूर्याः सप्त भवन्ति हि ॥१५॥
ततस्ते रश्मयः सप्त शोषयित्वा चतुर्दिशम् । चतुर्लोकमिदं सर्वं दहन्ति शिखिनो यथा ॥१६॥
व्याप्नुवन्तश्च ते दीप्ता ऊर्ध्वञ्चाधः स्वरश्मिभिः । दीप्यन्ते भास्कराः सप्त युगान्ताग्निप्रदीपिताः ॥१७॥
ते सूर्या वारिणा दीप्ता बहुसाहस्ररश्मयः । खं समावृत्य तिष्ठन्ति प्रदहन्तो वसुन्धराम् ॥१८॥
ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा । साद्रि-नद्यर्णव-द्वीपा निस्नेहा सम्प्रपद्यते ॥१९॥
मरीचिभिः प्रदीप्ताभिः सन्तताभिः समन्ततः । अधश्चोर्ध्वञ्च लग्नाभिस्तिर्यक् चैव समावृतम् ॥२०॥
सूर्याग्निना प्रमृष्टानां संसृष्टानां परस्परम् । एकत्वमुपयातानामेकज्वालं भवत्युत ॥२१॥
सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा तु मण्डली । चतुर्लोकमिदं सर्वं निर्दहत्याशु तेजसा ॥२२॥
ततः प्रलीने सर्वस्मिन् जङ्गमे स्थावरे तथा । निर्वृक्षा निस्तृणा भूमिः कूर्मपृष्ठा प्रकाशते ॥२३॥
अम्बरीषमिवाभाति सर्वमापूरितं जगत् । सर्वमेतत् तदर्चिभिः पूर्णं जाज्वल्यते पुनः ॥२४॥
पाताले यानि सत्त्वानि महोदधिगतानि च । तत्र तानि प्रलीयन्ते भूमित्वमुपयान्ति च ॥२५॥
द्वीपांश्च पर्वतांश्चैव वर्षाण्यथ महोदधीन् । तान् सर्वान् भस्मसाच्चक्रे सप्तात्मा पावकःप्रभुः॥२६॥
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वशः । पिबन्नपःसमिद्धोऽग्निः पृथिवीमाश्रितोऽज्वलत्॥२७॥
ततः संवर्तकः शैलानतिक्रम्य महांस्तथा । लोकान् दहति दीप्तात्मा रुद्रतेजोविजृम्भितः ॥२८॥
स दग्ध्वा पृथिवीं देवो रसातलमशोषयत् । अधस्तात् पृथिवीं दग्ध्वा दिवमूर्ध्वं दहिष्यति ॥२९॥
योजनानां शतानीह सहस्राण्ययुतानि च । उत्तिष्ठन्ति शिखास्तस्य वह्नेः संवर्तकस्य तु ॥३०॥
गन्धर्वांश्च पिशाचांश्च सयक्षोरगराक्षसान् । तदा दहत्यसौ दीप्तः कालरुद्रप्रणोदितः ॥३१॥
भूर्लोकञ्च भुवर्लोकं स्वर्लोकञ्च तथा महः । दहेदशेषं कालाग्निः कालाविष्टतनुः स्वयम् ॥३२॥
व्याप्तेष्वेतेषु लोकेषु तिर्यगूर्ध्वमथाग्निना । तत् तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः ।
अयोगुडनिभं सर्वं तदा चैकं प्रकाशते ॥३३॥
ततो गजकुलोन्नादास्तडिद्भिः समलंकृताः उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्तका घनाः॥३४॥
केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः । धूम्रवर्णास्तथा केचित् केचित् पीताः पयोधराः॥३५॥
केचिद्रासभवर्णास्तु लाक्षारसनिभाः परे । शङ्ख-कुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा ॥३६॥
मनः शिलाभास्त्वन्ये च कपोतसदृशाः परे । केचिद्धरिद्राक्षवर्णाभास्तथान्ये क्षीरसन्निभाः ॥३७॥
तथा कर्बूरवर्णाश्च भिन्नाञ्जननिभास्तथा । इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा ॥३८॥
इन्द्रचापनिभाः केचिदुत्तिष्ठन्ति घना दिवि । केचित् पर्वतसङ्काशाः केचिद् गजकुलोपमाः ॥३९॥

कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः । बहुरूपा घोररूपा घोरस्वरनिनादिनः ॥४०॥
सदा जलधराः सर्वे पूरयन्ति नभस्तलम् । ततस्ते जलदा घोरा राविणो भास्करात्मजाः ॥४१॥
सप्तधा सम्भृतात्मानं तमग्निं शमयन्त्युत । ततस्ते जलदा वर्षं मुञ्चन्तीह महारवम् ॥४२॥
सुघोरमशिवं सर्वं नाशयन्ति च पावकम् । प्रवृद्धैस्तैस्तदात्यर्थमम्भसा पूर्यते जगत् ॥४३॥
अद्भिस्तेजोऽभिभूतात्मा तदाग्निः प्रविशत्यपः । नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसम्भवाः ॥४४॥
प्लावयन्तो जगत् सर्वं महाजलपरिस्रवैः । धाराभिः पूरयन्तीदं नोद्यमानाः स्वयम्भुवा ।४५॥
अत्यन्तसलिलौघास्तु वेला इव महोदधेः । साद्रिद्वीपा ततः पृथ्वी जलैः संछाद्यते घनैः ॥४६॥
आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति । पुनः पतति तद्भूमौ पूर्यन्ते तेन चार्णवाः ॥४७॥
ततः समुद्राः स्वां वेलामतिक्रान्तास्तु कृत्स्नशः । पर्वताश्च विलीयन्ते मही चाप्सु निमज्जति ॥४८॥
तस्मिन्नेकार्णवे घोरे नष्टे स्थावर-जङ्गमे । योगनिन्द्रां समास्थाय शेते देवो जगत्पतिः ॥४९॥
चतुर्युगसहस्रान्तं कल्पमाहुर्मनीषिणः । वाराहो वर्तते कल्पो यस्य विस्तर ईरितः ॥५०॥
असंख्यातास्तथा कल्पा ब्रह्म-विष्णु-शिवात्मकाः। कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ॥५१॥
सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तामसेषु हरस्योक्तं राजसेषु प्रजापतेः ॥५२॥
योऽयं प्रवर्त्तते कल्पो वाराहः सात्त्विको मतः । अन्ये च सात्त्विकाः कल्पा मम तेषु परिग्रहः॥५३॥
ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः । आराध्य गिरिशं माञ्च यान्ति तत् परमं पदम्॥५४॥
सोऽहं तत्त्वं समास्थाय मायी मायामयं स्वयम् । एकार्णवे जगत्यस्मिन् योगनिद्रां व्रजामि तु ॥५५॥
मां पश्यन्ति महात्मानः सप्त काले महर्षयः । जनलोके वर्त्तमानास्तापसा योगचक्षुषा ॥५६॥
अहं पुराणः पुरुषो भूर्भुवः प्रभवो विभुः । सहस्रचरणः श्रीमान् सहस्राक्षः सहस्रपात् ॥५७॥
मन्त्रोऽग्निर्दक्षिणा गावःकुशाश्च समिधो ह्यहम् । प्रोक्षणी च स्रुवश्चैव सोमो घृतमथास्म्यहम् ॥५८॥
संवर्त्तको महानात्मा पवित्रं परमं यशः । वेदो वेद्यं प्रभुर्गोप्ता गोपतिर्ब्राह्मणो मुखम् ॥५९॥
अनन्तस्तारको योगी गतिर्गतिमतां वरः । हंसः प्राणोऽथ कपिलो विश्वमूर्त्तिः सनातनः ॥६०॥
क्षेत्रज्ञः प्रकृतिः कालो जगद्बीजमथामृतम् । माता पिता महादेवो मत्तो ह्यन्यन्न विद्यते ॥६१॥

आदित्यवर्णो भुवनस्य गोप्ता नारायणः पुरुषो योगमूर्त्तिः ।
मां पश्यन्ते यतयो योगनिष्ठा ज्ञात्वात्मानं मम तत्त्वं व्रजन्ति ॥६२॥

इति श्रीकौर्मे महापुराणे उत्तरभागे प्रलयवर्णनं
नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

# चतुश्चत्वारिंशोऽध्यायः

## कूर्म उवाच

अतः परं प्रवक्ष्यामि प्रतिसर्गमनुत्तमम् । प्राकृतं तत् समासेन शृणुध्वं गदतो मम ॥ १ ॥
गते परार्द्धद्वितये काले लोकप्रकालनः । कालाग्निर्भस्मसात् कर्त्तुं चरते चाखिलं जगत् ॥ २ ॥
स्वात्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः । दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥ ३ ॥
तमाविश्य महादेवो भगवान् नीललोहितः । करोति लोकसंहारं भीषणं रूपमाश्रितः ॥ ४ ॥
प्रविश्य मण्डलं सौरं कृत्वासौ बहुधा पुनः । निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् ॥ ५ ॥
स दग्ध्वा सकलं विश्वमस्त्रं ब्रह्मशिरो महत् । देवतानां शरीरेषु क्षिपत्यखिलदाहकम् ॥ ६ ॥
दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा । एका सा साक्षिणी शम्भोस्तिष्ठते वैदिकी श्रुतिः ॥ ७ ॥
शिरःकपालैर्देवानां कृतस्रग्वरभूषणः । आदित्य-चन्द्रादिगणः पूरयन् व्योममण्डलम् ॥ ८ ॥
सहस्रनयनो देवः सहस्राकृतिरीश्वरः । सहस्रहस्तचरणः सहस्रार्चिर्महाभुजः ॥ ९ ॥
दंष्ट्राकरालवदनः प्रदीप्तानललोचनः । त्रिशूली कृत्तिवसनो योगमैश्वरमास्थितः ॥१०॥
पीत्वा तत्परमानन्दं प्रभूतममृतं स्वयम् । करोति ताण्डवं देवीमालोक्य परमेश्वरः ॥११॥
पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गलम् । योगमास्थाय देवस्य देहमायाति शूलिनः ॥१२॥
सन्त्यक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् । याति स्वभावंभगवान् दग्ध्वा ब्रह्माण्डमण्डलम्॥१३॥
संस्थितेष्वथ देवेषु ब्रह्म - विष्णु - पिनाकिषु । गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥१४॥
स वारितत्त्वं सगुणं ग्रसते हव्यवाहनः । तेजः स्वगुणसंयुक्तं वायौ संयाति संक्षयम् ॥१५॥
आकाशे सगुणो वायुः प्रलयं याति विश्वभृत् । भूतादौ च तथाकाशं लीयते गुणसंयुतम् ॥१६॥
इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम् । वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ॥१७॥
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः । त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् ॥१८॥
महान्तमेभिः सहितं ब्रह्माणममितौजसम् । अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् ॥१९॥
एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः । वियोजयति चान्योन्यं प्रधानं पुरुषं परम् ॥२०॥
प्रधानपुंसोरजयोरेष संहार ईरितः । महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥२१॥
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते । प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ॥२२॥
कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः । गीयते मुनिभिः साक्षी महानेष पितामहः ॥२३॥
एवं संहारशक्तिश्च शक्तिर्माहेश्वरी ध्रुवा । प्रधानाद्यं विशेषान्तं दहेद्रुद्र इति श्रुतिः ॥२४॥
योगिनामथ सर्वेषां ज्ञानविन्यस्तचेतसाम् । आत्यन्तिकश्चैव लयं विदधातीह शङ्करः ॥२५॥
इत्येष भगवान् रुद्रः संहारं कुरुते वशी । स्थापिका मोहिनी शक्तिर्नारायण इति श्रुतिः ॥२६॥

हिरण्यगर्भो भगवान् जगत् सदसदात्मकम् । सृजेदशेषं प्रकृतेस्तन्मयः पञ्चविंशकः ॥२७॥
सर्वज्ञाः सर्वगाःशान्ताः स्वात्मन्येव व्यवस्थिताः । शक्तयो ब्रह्म विष्ण्वीशा भुक्ति-मुक्तिफलप्रदाः ॥२८॥
सर्वेश्वराः सर्वबन्द्याः शाश्वतानन्तभोगिनः । एकमेवाक्षरं तत्त्वं पुम्प्रधानेश्वरात्मकम् ॥२९॥
अन्याश्च शक्तयो दिव्यास्तत्र सन्ति सहस्रशः । इज्यन्ते विविधैर्यज्ञैः शक्रादित्यादयोऽमराः ॥३०॥
एकैकस्याः सहस्राणि देहानां वै शतानि च । कथ्यन्ते देवमाहात्म्याच्छक्तिरेकैव निर्गुणा ॥३१॥
इमां शक्तिं समास्थाय स्वयं देवो महेश्वरः । करोति विविधान् देहान् ग्रसते चैव लीलया ॥३२॥
इज्यते सर्वयज्ञेषु ब्राह्मणैर्वेदवादिभिः । सर्वकामप्रदो रुद्र इत्येषा वैदिकी श्रुतिः ॥३३॥
सर्वासामेव शक्तीनां ब्रह्म - विष्णु - महेश्वराः । प्राधान्येन स्मृता देवाः शक्तयः परमात्मनः ॥३४॥
आभ्यः परस्ताद्भगवान् परमात्मा सनातनः । गीयते सर्वमायात्मा शूलपाणिर्महेश्वरः ॥३५॥
एनमेके वदन्त्यग्निं नारायणमथापरे । इन्द्रमेके परे प्राणं ब्रह्माणमपरे जगुः ॥३६॥
ब्रह्म-विष्ण्वग्नि-वरुणाः सर्वे देवास्तथर्षयः । एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्त्तिताः ॥३७॥
यं यं भेदं समाश्रित्य यजन्ति परमेश्वरम् । तत्तद्रूपं समास्थाय प्रददाति फलं शिवः ॥३८॥
तस्मादेकतरं भेदं समाश्रित्यापि शाश्वतम् । आराधयन्महादेवं याति तत् परमं पदम् ॥३९॥
किन्तु देवं महादेवं सर्वशक्तिं सनातनम् । आराधयेद् गिरिशं सगुणं वाथ निर्गुणम् ॥४०॥
मया प्रोक्तो हि भवतां योगः प्रागेव निर्गुणः । आरुरुक्षुस्तु सगुणं पूजयेत् परमेश्वरम् ॥४१॥
पिनाकिनं त्रिनयनं जटिलं कृत्तिवाससम् । रुक्माभं वा सहस्रार्कांचिन्तयेद्वैदिकी श्रुतिः ॥४२॥
एष योगः समुद्दिष्टः सबीजो मुनिपुङ्गवाः । अत्राप्यशक्तोऽथ हरं विष्णुं ब्रह्माणमर्चयेत् ॥४३॥
अथ चेदसमर्थः स्यात् तत्रापि मुनिपुङ्गवाः । ततो वाय्वग्नि-शक्रादीन् पूजयेद्भक्तिसंयुतः ॥४४॥
तस्मात् सर्वान् परित्यज्य देवान् ब्रह्मपुरोगमान् । आराधयेद्विरूपाक्षमादिमध्यान्तसंस्थितम् ॥४५॥
भक्तियोगसमायुक्तः स्वकर्मनिरतः शुचिः । तादृशं रूपमास्थाय समायात्यन्तिकं शिवः ॥४६॥
एष योगः समुद्दिष्टः सबीजोऽत्यन्तभावनः । यथाविधि प्रकुर्वाणः प्राप्नुयादैश्वरं पदम् ॥४७॥
ये चान्ये भावने शुद्धे प्रागुक्ते भवतामिह । अत्रापि कथितो योगो निर्बीजश्च सबीजकः ॥४८॥
ज्ञानं तदुक्तं निर्बीजं पूर्वं हि भवतां मया । विष्णुं रुद्रं विरञ्चिञ्च सबीजे साधयेद् बुधः ॥४९॥
अथ वाय्वादिकान् देवांस्तत्परो नियतात्मवान् । पूजयेत् पुरुषं विष्णुं चतुर्मूर्तिधरं हरिम् ॥५०॥
अनादिनिधनं देवं वासुदेवं सनातनम् । नारायणं जगद्योनिमाकाशं परमं पदम् ॥५१॥
तल्लिङ्गधारी नियतं तद्भक्तस्तदुपाश्रयः । एष एव विधिर्ब्राह्मे भावने चान्तिमे मतः ॥५२॥
इत्येतत् कथितं ज्ञानं भावनासंश्रयं परम् । इन्द्रद्युम्नाय मुनये कथितं यन्मया पुरा ॥५३॥
अव्यक्तात्मकमेवेदं चेतनाचेतनं जगत् । तदीश्वरः परं ब्रह्म तस्माद् ब्रह्ममयं जगत् ॥५४॥

## सूत उवाच

एतावदुक्त्वा भगवान् विरराम जनार्दनः । तुष्टुवुर्मुनयो विष्णुं शक्रेण सह माधवम् ॥५५॥

## ऋषय ऊचुः

नमस्ते कूर्मरूपाय विष्णवे परमात्मने । नारायणाय विश्वाय वासुदेवाय ते नमः ॥५६॥
नमो नमस्ते कृष्णाय गोविन्दाय च ते नमः । माधवाय च ते नित्यं नमो यज्ञेश्वराय च ॥५७॥
सहस्रशिरसे तुभ्यं सहस्राक्षाय ते नमः । नमः सहस्रहस्ताय सहस्रचरणाय च ॥५८॥
ओं नमो ज्ञानरूपाय विष्णवे परमात्मने । आनन्दाय नमस्तुभ्यं मायातीताय ते नमः ॥५९॥
नमो गूढस्वरूपाय निर्गुणाय नमोऽस्तु ते । पुरुषाय पुराणाय सत्तामात्रस्वरूपिणे ॥६०॥
नमः सांख्याय योगाय केवलाय नमोऽस्तु ते । धर्मज्ञानाधिगम्याय निष्कलाय नमो नमः ॥६१॥
नमस्ते योगतत्त्वाय महायोगेश्वराय च । परावराणां प्रभवे वेदवेद्याय ते नमः ॥६२॥
नमो बुद्धाय शुद्धाय नमो मुक्ताय हेतवे । नमो नमो नमस्तुभ्यं मायिने वेधसे नमः ॥६३॥
नमोऽस्तु ते वराहाय नारसिंहाय ते नमः । वामनाय नमस्तुभ्यं हृषीकेशाय ते नमः ॥६४॥
नमोऽस्तु कालरुद्राय कालरूपाय ते नमः । स्वर्गापवर्गदात्रे च नमोऽप्रतिहतात्मने ॥६५॥
नमो योगाधिगम्याय योगिने योगदायिने । देवानां पतये तुभ्यं देवार्त्तिशमनाय ते ॥६७॥
श्रुताश्च विविधा धर्मा वंशा मन्वन्तराणि च । सर्गश्च प्रतिसर्गश्च ब्रह्माण्डस्यास्य विस्तरः ॥६८॥
त्वं हि सर्वजगत्साक्षी विश्वोः नारायण परः । त्रातुमर्हस्यनन्तात्मा त्वामेव शरणं गताः ॥६९॥

## सूत उवाच

एतद्वः कथितं विप्रा भोग - मोक्षप्रदायकम् । कौर्मं पुराणमखिलं यज्जगाद गदाधरः ॥७०॥
अस्मिन् पुराणे लक्ष्म्यास्तु संभवः कथितः पुरा । मोहायाशेषभूतानां वासुदेवेन योजितः ॥७१॥
प्रजापतीनां सर्गस्तु वर्णधर्माश्च वृत्तयः । धर्मार्थ-काम-मोक्षाणां यथावल्लक्षणं शुभम् ॥७२॥
पितामहस्य विष्णोश्च महेशस्य च धीमतः । एकत्वञ्च पृथक्त्वञ्च विशेषश्चोपवर्णितः ॥७३॥
भक्तानां लक्षणं प्रोक्तं समाचारः सुशोभनः । वर्णाश्रमाणां कथितं यथावदिह लक्षणम् ॥७४॥
आदिसर्गस्ततः पश्चादण्डावरणसप्तकम् । हिरण्यगर्भसर्गश्च कीर्त्तितो मुनिपुङ्गवाः ॥७५॥
कालसंख्याप्रकथनं माहात्म्यञ्चेश्वरस्य च । ब्रह्मणः शयनञ्चाप्सु नामनिर्वचनं तथा ॥७६॥
वाराहवपुषा भूयो भूमेरुद्धरणं पुनः । मुख्यादिसर्गकथनं मुनिसर्गस्तथापरः ॥७७॥
व्याख्यातो रुद्रसर्गश्च ऋषिसर्गश्च तापसः । धर्मस्य च प्रजासर्गस्तामसात् पूर्वमेव तु ॥७८॥
ब्रह्म-विष्ण्वोर्विवादः स्यादन्तर्देहप्रवेशनम् । पद्मोद्भवत्वं देवस्य मोहस्तस्य च धीमतः ॥७९॥
दर्शनञ्च महेशस्य माहात्म्यं विष्णुनेरितम् । दिव्यदृष्टिप्रदानञ्च ब्रह्मणः परमेष्ठिनः ॥८०॥
संस्तवो देवदेवस्य ब्रह्मणा परमेष्ठिना । प्रसादो गिरिशस्याथ वरदानं तथैव च ॥८१॥
संवादो विष्णुना सार्द्धं शङ्करस्य महात्मनः । वरदानं तथा पूर्वमन्तर्द्धानं पिनाकिनः ॥८२॥

वधश्च कथितो विप्रा मधु-कैटभयोः पुरा । अवतारोऽथ देवस्य ब्रह्मणो नाभिपङ्कजात् ॥८३॥
एकीभावश्च देवेन ब्रह्मणा कथितः पुरा । विमोहो ब्रह्मणश्चाथ संज्ञालाभो हरेस्ततः ॥८४॥
तपश्चरणमाख्यातं देवदेवस्य धीमतः । प्रादुर्भावो महेशस्य ललाटात् कथितस्ततः ॥८५॥
रुद्राणां कथिता सृष्टिर्ब्रह्मणः प्रतिषेधनम् । ततश्च देवदेवस्य वरदानोपदेशकौ ॥८६॥
अन्तर्द्धानञ्च देवस्य तपश्चर्याण्डजस्य च । दर्शनं देवदेवस्य नरनारीशरीरता ॥८७॥
देव्या विभागकथनं देवदेवात् पिनाकिनः । देव्याश्च पश्चात् कथितं दक्षपुत्रीत्वमेव च ॥८८॥
हिमवद्दुहितृत्वञ्च देव्या माहात्म्यमेव च । दर्शनं दिव्यरूपस्य विश्वरूपस्य दर्शनम् ॥८९॥
नाम्नां सहस्रं कथितं पित्रा हिमवता स्वयम् । उपदेशो महादेव्या वरदानं तथैव च ॥९०॥
भृग्वादीनां प्रजासर्गो राज्ञां वंशस्य विस्तरः । प्राचेतसत्वं दक्षस्य दक्षयज्ञविमर्दनम् ॥९१॥
दधीचस्य च यज्ञस्य विवादः कथितस्तदा । ततश्च शापः कथितो मुनीनां मुनिपुङ्गवाः ॥९२॥
रुद्रागतिः प्रसादश्च अन्तर्द्धानं पिनाकिनः । पितामहोपदेशः स्यात् कीर्तितं रक्षणाय तु ॥९३॥
दक्षस्य च प्रजासर्गः कश्यपस्य महात्मनः । हिरण्यकशिपोर्नाशो हिरण्याक्षवधस्तथा ॥९४॥
ततश्च शापः कथितो देवदारुवनौकसाम् । निग्रहश्चान्धकस्याथ गाणपत्यमनुत्तमम् ॥९५॥
प्रह्लादनिग्रहश्चाथ बलेः संयमनन्त्वथ । बाणस्य निग्रहश्चाथ प्रसादस्तस्य शूलिनः ॥९६॥
ऋषीणां वंशविस्तारो राज्ञां वंशाः प्रकीर्त्तिताः । वसुदेवात् ततो विष्णोरुत्पत्तिःस्वेच्छया हरेः॥९७॥
दर्शनञ्चोपमन्योर्वै तपश्चरणमेव च । वरलाभो महादेवं दृष्ट्वा साम्बं त्रिलोचनम् ।
कैलासगमनञ्चाथ निवासस्तत्र शार्ङ्गिणः ॥९८॥

ततश्च कथ्यते भीतिर्द्वारवत्यां निवासिनाम् । रक्षणं गरुडेनाथ जित्वा शत्रून् महाबलान् ॥९९॥
नारदागमनंचैव यात्रा चैव गरुत्मतः । ततश्च कृष्णागमनं मुनीनामागतिस्ततः ॥१००॥
नैत्यिकं वासुदेवस्य शिवलिङ्गार्चनं तथा । मार्कण्डेयस्य च मुनेः प्रश्नः प्रोक्तस्ततः परम्॥१०१॥
लिङ्गार्चननिमित्तञ्च लिङ्गस्यापि च लिङ्गिनः । माहात्म्यकथनञ्चाथ लिङ्गाद्वै भीतिरेव च॥१०२॥
ब्रह्म-विष्ण्वोस्तथा मध्ये कीर्त्तिता मुनिपुङ्गवाः । मोहस्तयोर्वै कथितो गमनञ्चोर्ध्वतो ह्यधः ॥१०३॥
संस्तवो देवदेवस्य प्रसादः परमेष्ठिनः । अन्तर्द्धानञ्च लिङ्गस्य साम्बोत्पत्ति स्ततः परम् ।
कीर्त्तिता चानिरुद्धस्य समुत्पत्तिर्द्विजोत्तमाः ॥१०४॥

कृष्णस्य गमने बुद्धिॠषीणामागतिस्तथा । अनुशासनञ्च कृष्णेन वरदानं महात्मनः ॥१०५॥
गमनञ्चैव कृष्णस्य पार्थस्याप्यथ दर्शनम् । कृष्णद्वैपायनस्योक्ता युगधर्माः सनातनाः ॥१०६॥
अनुग्रहोऽथ पार्थस्य वाराणस्यां गतिस्ततः । पाराशर्यस्य च मुनेर्व्यासस्याद्भुतकर्मणः ।
वाराणस्याश्च माहात्म्यं तीर्थानाञ्चैव वर्णनम् ॥१०७॥

व्यासस्य तीर्थयात्रा च देव्याश्चैवाथ दर्शनम् । उद्वासनञ्च कथितं वरदानं तथैव च ॥१०८॥

प्रयागस्य च माहात्म्यं क्षेत्राणामथ कीर्त्तनम् । फलञ्च विपुलं विप्रा मार्कण्डेयस्य निर्गमः ॥१०९॥
भुवनानां स्वरूपञ्च ज्योतिषाञ्च निवेशनम् । कीर्त्तितश्चापि वर्षाणां नदीनाञ्चैव निर्णयः ॥११०॥
पर्वतानाञ्च कथनं स्थानानि च दिवौकसाम् । द्वीपानां प्रविभागश्च श्वेतद्वीपोपवर्णनम् ॥१११॥
शयनं केशवस्याथ माहात्म्यञ्च महात्मनः । मन्वन्तराणां कथनं विष्णोर्माहात्म्यमेव च ॥११२॥
वेदशाखाप्रणयनं व्यासानां कथनं ततः । अवेदस्य च वेदस्य कथनं मुनिपुङ्गवाः ॥११३॥
योगेश्वराणाञ्च कथा शिष्याणाञ्चाथ कीर्तनम् । गीताश्च विविधा गुह्या ईश्वरस्याथ कीर्त्तिताः॥११४॥
वर्णाश्रमाणामाचाराः प्रायश्चित्तविधिस्ततः । कपालित्वञ्च रुद्रस्य भिक्षाचरणमेव च ॥११५॥
पतिव्रतानामाख्यानं तीर्थानाञ्च विनिर्णयः । तथा मङ्कणकस्याथ निग्रहः कीर्त्तितो द्विजाः॥११६॥
वधश्च कथितो विप्राः कालस्य च समासतः । देवदारुवने शम्भोः प्रवेशो माधवस्य च ॥११७॥
दर्शनं षट्कुलीयानां देवदेवस्य धीमतः । वरदानञ्च देवस्य नन्दिने तु प्रकीर्त्तितम् ॥११८॥
नैमित्तिकश्च कथितः प्रतिसर्गस्ततः परम् । प्राकृतः प्रलयश्चोर्ध्वं सबीजो योग एव च ॥११९॥
एवं ज्ञात्वा पुराणस्य संक्षेपं कीर्तयेत् तु यः । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥१२०॥
एवमुक्त्वा श्रियं देवीमादाय पुरुषोत्तमः । सन्त्यज्य कूर्मसंस्थानं स्वस्थानञ्च जगाम ह॥१२१॥
देवाश्च सर्वे मुनयः स्वानि स्थानानि भेजिरे । प्रणम्य पुरुषं विष्णुं गृहीत्वा ह्यमृतं द्विजाः ॥१२२॥
एतत् पुराणं परमं भाषितं कूर्मरूपिणा । साक्षाद्देवाधिदेवेन विष्णुना विश्वयोनिना ॥१२३॥
यः पठेत् सततं भक्त्या नियमेन समासतः । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥१२४॥
लिखित्वा चैव यो दद्याद्वैशाखे कार्त्तिकेऽपि वा । विप्राय वेदविदुषे तस्य पुण्यं निबोधत ॥१२५॥
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः । भुक्त्वा तु विपुलान् मर्त्यो भोगान् दिव्यान्सुशोभनान्॥१२६॥
ततः स्वर्गात् परिभ्रष्टो विप्राणां जायते कुले । पूर्वसंस्कारमाहात्म्याद् ब्रह्मविद्यामवाप्नुयात्॥१२७॥
पठित्वाध्यायमेवेकं सर्वपापैः प्रमुच्यते । योऽर्थं विचारयेत् सम्यक् प्राप्नोति परमं पदम्॥१२८॥
अध्येतव्यमिदं पुण्यं विप्रैः पर्वणि पर्वणि । श्रोतव्यञ्च द्विजश्रेष्ठा महापातकनाशनम् ॥१२९॥
एकतस्तु पुराणानि सेतिहासानि कृत्स्नशः । एकत्र परमञ्चेदमेतदेवातिरिच्यते ॥१३०॥
धर्मनैपुणकामानां ज्ञाननैपुणकामिनाम् । इदं पुराणं मुक्त्वेकं नान्यत् साधनकं परम् ॥१३१॥
यथावदत्र भगवान् देवो नारायणो हरिः । कीर्त्यते हि यथा विष्णुर्न तथाऽन्येषु सुव्रताः ॥१३२॥
ब्राह्मी पौराणिकी चेयं संहिता पापनाशनी । अत्र तत् परमं ब्रह्म कीर्त्यते हि यथार्थतः ॥१३३॥
तीर्थानां परमं तीर्थं तपसाञ्च परं तपः । ज्ञानानां परमं ज्ञानं व्रतानां परमं व्रतम् ॥१३४॥
नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ । योऽधीते चैव मोहात्मा स याति नरकान् बहून्॥१३५॥
श्राद्धे वा दैविके कार्ये श्रावणीयं द्विजातिभिः । यज्ञान्ते तु विशेषेण सर्वदोषविशोधनम् ॥१३६॥
मुमुक्षूणामिदं शास्त्रमध्येतव्यं विशेषतः । श्रोतव्यञ्चाथ मन्तव्यं वेदार्थपरिबृंहणम् ॥१३७॥
ज्ञात्वा यथावद्विप्रेन्द्रान् श्रावयेद्भक्तिसंयुतान् । सर्वपापविनिर्मुक्तो ब्रह्मसायुज्यमाप्नुयात् ॥१३८॥

योऽश्रद्दधाने पुरुषे दद्याच्चाधार्मिके तथा । स प्रेत्य गत्वा निरयान् शुनां योनिं व्रजत्यधः ॥१३९॥
नमस्कृत्य हरिं विष्णुं जगद्योनिं सनातनम् । अध्येतव्यमिदं शास्त्रं कृष्णद्वैपायनं तथा ॥१४०॥
इत्याज्ञा देवदेवस्य विष्णोरमिततेजसः । पाराशर्यस्य विप्रर्षेर्व्यासस्य च महात्मनः ॥१४१॥
श्रुत्वा नारायणाद्देवान्नारदो भगवानृषिः । गौतमाय ददौ पूर्वं तस्माच्चैव पराशरः ॥१४२॥
पराशरोऽपि भगवान् गङ्गाद्वारे मुनीश्वराः । मुनिभ्यः कथयामास धर्म-कामार्थ-मोक्षदम् ॥१४३॥
ब्रह्मणा कथितं पूर्वं सनकाय च धीमते । सनत्कुमाराय तथा सर्वपापप्रणाशनम् ॥१४४॥
सनकाद्भगवान् साक्षाद्देवलो योगवित्तमः । अवाप्तवान् पञ्चशिखो देवलादिदमुत्तमम् ॥१४५॥
सनत्कुमाराद्भगवान् मुनिः सत्यवतीसुतः । लेभे पुराणं परमं व्यासः सर्वार्थसञ्चयम् ॥१४६॥
तस्माद् व्यासादहं श्रुत्वा भवतां पापनाशनः । ऊचिवान् वै भवद्भिश्च दातव्यं धार्मिके जने ॥१४७॥
तस्मै व्यासाय गुरवे सर्वज्ञाय महर्षये । पाराशर्याय शान्ताय नमो नारायणात्मने ॥१४८॥
यस्मात् सञ्जायते कृत्स्नं यत्र चैव प्रलीयते । नमस्तस्मै परेशाय विष्णवे कूर्मरूपिणे ॥१४९॥

इति श्रीकौर्मे महापुराणे उत्तरभागे प्रतिसर्गादिकथनं
नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

समाप्त उत्तरभागः

## इति कूर्मपुराणं समाप्तम्

———

पुराणपुरुषं ध्यात्वा शब्दार्थौ सुविचार्य च ।
संपादितमिदं कूर्मपुराणं श्रद्धया मया ॥
रामशंकरसंज्ञेन जीवकेनाल्पबुद्धिना ।
गार्ग्येण तैत्तिरीयेण जात्युत्कर्षेककामिना ॥

# कूर्मपुराणम्

## [ शब्द - सूची ]

( अनुस्वारविसर्गौ अव्यवहित-पूर्वस्वरानुगतौ इति कृत्वा वर्णक्रमानुसारिणी सूचिरियं प्रणीता; आदावनुस्वारघटितं पदं ततश्च विसर्गघटितं स्थापितमत्र ) ।

——